# न्यायकोशः

---

सकलशास्त्रोपकारकन्यायशास्त्रीयपदार्थप्रकाशकः

श्रीयुतबुलराभिधस्य श्रीयुतकीलहार्नाभिधस्य च विदुषः संप्रेरणया

एल्फिन्स्टनविद्यालये न्यायदर्शनाद्यनेकदर्शनाध्यापकेन

कर्णाटदेशीयझळकीग्रामनिवासिश्रीमद्रामभट्टात्मजेन

## भट्टभीमाचार्येण

विरचितः

---

स च

राजानुशासनेन

मुंबयीनगर्यामिन्दुप्रकाशयन्त्रालये

मुद्रितः ।

---



शकाब्दाः ( १७९६ ) षण्णवत्यधिकानि सप्तदशशतानि ।

अपि च

खिस्त्यब्दाः ( १८७५ ) पञ्चसप्तत्यधिकान्यष्टादशशतानि ।

मौल्यं तु सानकदशकं रूपकद्वयम् । ( २॥=)

# प्रस्तावना.

लोकेस्मिंस्तावत्सर्वे जनाः प्रयोजनमुद्दिश्यैव कार्यविशेषे प्रयतन्ते । प्रयोजनं हि मुख्यगौणभेदेनैहिकामुष्मिकभेदेन च द्विविधम्। तत्रैहिकं प्रयोजनं च दुःखसंभिन्नत्वादल्पत्वादसारत्वाच्च नात्यादरणीयम्। आमुष्मिकं मुख्यप्रयोजनं तु निःश्रेयसशब्दवाच्यं दुःखासंभिन्नत्वादनल्पत्वात्सारत्वाच्च सर्वैरापामरमादरणीयमेव । तच्च न किल द्रव्यादिना लभ्यम्, अपि तु तत्त्वज्ञानेनैव । तच्च खलु तत्त्वज्ञानं 'आत्मा शरीरादिपदार्थेभ्यो भिन्नः' इत्याकारकत्वाच्छरीरादिपदार्थज्ञानं विना नोत्पद्यते । शरीरादिपदार्थज्ञानं चाशेषपदार्थप्रतिपादकन्यायशास्त्रसाध्यमेव । अतो न्यायशास्त्रमावश्यकारम्भम् । यद्यपि व्याकरणमीमांसादीनि बहूनि शास्त्राणि ज्ञानप्रयोजनकानि सन्ति । तथापि तानि शब्दस्वरूपनिष्पत्तिकर्मप्रतिपत्त्यादिमात्रपराणीति नाशेषपदार्थान्याथातथ्येन व्युत्पादयितुं क्षमन्ते । किं च । न्यायशास्त्रस्य सकलपदार्थविवेचनयुक्तिशास्त्रत्वात्तदध्ययनतस्तात्रत्यात्यन्तदुर्लभविविधविचित्रसुतर्कप्रकाशकयुक्तिपरिसंशीलनसंस्कृतबुद्धिसौक्ष्म्यद्वारकनिखिलपदार्थविज्ञानादनायासेनैव सर्वशास्त्रमर्माणि शक्यावगमानि भवन्तीति न्यायशास्त्रस्य सर्वशास्त्रोपकारकत्वादत्यवश्यारम्भणीयता सिद्धा ।

प्रकृते च खलु, कुशलमतयो यतमाना विद्वांसो, व्याकरणादिशास्त्रेषु सर्वेषामश्रमेण मनसः प्रवेशाय तत्तच्छास्त्रसारान्स्वमेधया समुद्धृत्य तत्र तत्र समासव्याससहितान्विविधान्सुगमनिबन्धान्कोशांश्च रचयांचक्रुः । परंतु, अभियुक्तैः "काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति सर्वशास्त्रोपकारकत्वेनोक्तयोर्द्वयोर्मध्ये प्रथमोद्दिष्टे तर्कशास्त्रे सुखप्रवेशसाधनभूतो निबन्धोद्यावधि न केनापि विदुषा विहितः । अतः, शालाध्यक्षश्रीयुतबुलराभिधस्य श्रीयुतकीलहार्नाभिधस्य च महोदयस्य संप्रेरणया मुंबापुरीस्थायामेल्फिन्स्टन्कालेजाभिधायां

पाठशालायां न्यायदर्शनाद्यध्यापनेऽधिकृतेन कर्णाटदेशीयेन झळकीग्रामनिवासिना श्रीमद्रामभट्टतनयेन **भट्टभीमाचार्येण** मयातिगहनतरपदार्थरत्नपुञ्जपरिपूर्णतर्कमञ्जूषोद्घाटनकुञ्चिकाभूतोयं न्यायकोशाभिधो ग्रन्थो व्यरचि। अत्र च बहुविधशास्त्रीयग्रन्थव्युत्पादने समुपयुज्यमानाः प्रायेण सर्वे न्यायशास्त्रीयाः पारिभाषिका व्यावहारिकाश्च शब्दा गौतमसूत्रगादाधरीप्रभृतिग्रन्थेभ्य उद्धृत्याकारादिवर्णक्रमेण विन्यस्ताः। तेषामर्थश्च संगृह्य सुगमरीत्या परिष्कृत्य च प्रदर्शितः। क्वचिल्लक्षणान्युदाहरणानि चोदाहृतानि। तत्र च यानि लक्षणोदाहरणानि गौतमसूत्रादिग्रन्थेषूपलब्धानि तानि तत्रत्यान्येवेह संगृहीतानि। यदीयानि च लक्षणोदाहरणानि तत्र नोपलब्धानि तदीयानि शास्त्रानुरोधीनि नूतनानि तानि यथामति स्वयं परिकल्प्येहोदाहृतानि।

सर्वशास्त्रोपकारके दुर्गमतमे न्यायशास्त्रे सुखेन मनःप्रवेशसाधनमेनं कोशं विधाय परमकारुणिकस्य रमाब्रह्माद्यभिवन्दितपादारविन्दस्य श्रीमदिन्दिरारमणस्य चरणयोर्विकस्वरप्रसूनाञ्जलितयाहमर्पयामि। अत्र च शास्त्रदौर्गम्याद्दृग्दोषाद्वा यदि यत्किंचिदसमञ्जसमापतेत्तदा तत्संशोध्य परिपूरयन्तु निर्मत्सरा दयालवो विद्वांस इति प्रार्थयेहम्।

भट्टभीमाचार्यः

# विद्यावृद्धिप्रशंसा ।

---

इह किलानादिसिद्धाव्याहतपरिवर्तनशालिनि कालचक्रे कियन्तं समयं नानाविधसहृदयनृपतिप्रदत्तहस्तावलम्बतयोत्तरोत्तरमधिकाधिकप्रोल्लसनेन परिपूर्णं वृद्धिसुखमनुभूय पुनस्तादृशसहृदयवसुधाधिपतिविलयवशेन क्वचिदप्यालम्बनमपश्यन्ती कतिचिद्दिनानि निरुत्साहतया केवलं ध्रियमाणप्राणा **विद्याविलासिनी** यावत्पतत्प्रकर्षदशामनुभवन्ती लज्जावनतमुखी कालं यापयति तावन्निरुपधिकरुणाशालिचक्रवर्त्याङ्ग्लभूपालप्रदत्तकरावलम्बना किंचिदुन्नमय्य वदनमितस्ततो दृशं संचारयन्ती तन्निवेशिता अनेकविधा अधिजिगांसुसुमत्यन्तेवासिनिवहालंकृताः पाठशाला ददर्श । तत्र चानेकविधश्रुतिस्मृतीतिहासव्याकरणतर्कमीमांसासाहित्यशिल्पाद्यनेकविधशास्त्राध्ययनाध्यापनपरिपाटीपर्यालोचनयावश्यंभाविनमात्मोदयं निर्वर्ण्य तास्वेवानवरतं क्रीडासुखमनुबभूव । ततश्च सातिदुरवगाहनानाविधनिबन्धाम्बुधिविलोडनं न पदपदार्थपरिज्ञानरूपतरणिसाधनमन्तरा संपद्येतेत्यनुविचिन्त्य तत्संपादनायोहापोहकुशलमतीन्विदुषः प्रैरिरत् । तया प्रेरिताश्च ते यतमानाः कृत्स्नाखिलशब्दशब्दार्थपरिज्ञानसाधनीभूतव्याकरणन्यायादिशास्त्रेषु सुखप्रवेशाय समासव्याससहितान्विविधान्निबन्धान्कोशांश्च रचयांचक्रुः, इति ।

~~~~~~~~~~~~~~~~
~~~~~~~~~~~~~~~~

येभ्यो ग्रन्थेभ्यः शब्दानुद्धृत्य न्यायकोशो व्यरचि तेषां च } नामानि।
ग्रन्थप्रतीकेभ्यो विज्ञेयानि ग्रन्थानां }

---

(गौ०)...... न्यायसूत्रं गौतममुनिप्रणीतम्।

(वात्स्या०).... गौतमसूत्रस्य भाष्यं वात्स्यायनमुनिप्रणीतम्।

(गौ० वृ०).... न्यायसूत्रवृत्तिर्विश्वनाथपञ्चाननविरचिता।

(वै०)...... वैशेषिकसूत्रं कणादमुनिप्रणीतम्।

(वै० उ०).... वैशेषिकसूत्रोपस्करः शंकरमिश्रकृतः।

(वै० वि०).... वैशेषिकसूत्रविवृतिर्जयनारायणकृता।

(कु०)...... न्यायकुसुमाञ्जलिरुदयनाचार्यप्रणीतो हरिदासभट्टाचार्यकृतटीकासहितः।

(त० भा०).... तर्कभाषा महोपाध्यायकेशवकृता।

(न्या० म०) .. न्यायसिद्धान्तमञ्जरी चूडामणिभट्टाचार्यविरचिता।

(त० प्र०).... तर्कप्रकाशापरनाम्नी शितिकण्ठी श्रीकण्ठविरचिता।

(चि०)...... चिन्तामणिर्गङ्गेशोपाध्यायप्रणीतः।

(मू० म०).... मूलमथुरानाथी मथुरानाथभट्टाचार्यकृता।

(दीधि०) .... दीधितिश्चिन्तामणिव्याख्या शिरोमणिभट्टाचार्यप्रणीता।

(गा०)...... गादाधरी दीधितिव्याख्या गदाधरभट्टाचार्यप्रणीता।

(कृष्ण०) .... कृष्णंभट्टी गादाधरीटीका कृष्णंभट्टकृता।

(न्या० र०).... न्यायरत्नं रघुनाथशास्त्रिप्रणीतम्।

(तर्का०) .... तर्कामृतम्।

(सर्व०)...... सर्वदर्शनसंग्रहः सायणाचार्यप्रणीतः।

(भा० प०).... भाषापरिच्छेदः। } विश्वनाथपञ्चाननभट्टाचार्यप्रणीतौ।
(मु०) ...... सिद्धान्तमुक्तावली। }

(दि०)...... दिनकरी महादेवप्रणीता ।
(राम०) .... रामरुद्री रामरुद्रभट्टाचार्यकृता ।
(त० सं०).... तर्कसंग्रहः ।
(त० दी०).... तर्कदीपिका । } अन्नंभट्टोपाध्यायकृतौ ।
(नील०) .... नीलकण्ठी नीलकण्ठकृता ।
(न्या० बो०) .. न्यायबोधिनी गोवर्धनविरचिता ।
(वाक्य०) .... वाक्यवृत्तिर्मेरुशास्त्रिप्रणीता ।
(सि० च०) .. सिद्धान्तचन्द्रोदयः श्रीकृष्णधूर्जटिदीक्षितविरचितः ।
(गण०)...... गणरत्नमहोदधिर्वर्धमानकृतः ।
(लौ० भा०) .. लौगाक्षिभास्करी लौगाक्षिभास्करप्रणीता ।

---

(स्व०)...... न्यायकोशकर्तृभीमाचार्यस्य स्वोक्तिः ।

# चिन्हविवेकः ।

१ व्याख्यायमानशब्दस्य पुरतो वर्तमानः ( ) एतच्चिह्नान्तर्गतः शब्दो व्यापकधर्मविशिष्टस्य बोधक इति बोध्यम् ।
२ प्रमाणत्वेन गृहीतानां ग्रन्थानां प्रतीका अपि ( ) एतच्चिह्नान्तः समुपन्यस्ता इति बोध्यम् ।
३ यत्र समानार्थे लक्षणपरिष्काराणामनेकत्वं तत्रैकैकस्यादौ [ ] एतच्चिह्नान्तर्गतः ककारादिवर्णः परिष्कारभेदबोधनाय समुपन्यस्त इति बोध्यम् ।
४ यत्र त्वर्थानामनेकत्वं तत्रैकैकस्यादौ १, २ इत्याद्यङ्कोऽर्थभेदबोधनाय समुपन्यस्त इति बोध्यम् ।
५ यस्य शब्दस्योपरि १, २ इत्याद्यङ्कः, *, + इत्यादिचिह्नं वा समुपन्यस्तं तस्याधस्तात्प्रायस्तत्पृष्ठे तादृशाङ्कद्योतितं टिप्पणमिति बोध्यम् ।
६ ययोर्ग्रन्थयोर्मध्ये ........ एतादृशं चिह्नं भवेत्तच्चिह्नं तयोर्मध्ये विद्यमानस्य ग्रन्थस्य परित्यागसूचनाय समुपन्यस्तमिति बोध्यम् ।

# न्यायकोशः ।

श्रीपाण्डुरङ्गो विजयते ॥ नत्वा श्रीविठ्ठलं देवं गुरूंश्च पितरौ तथा । भीमाचार्यो वितनुते न्यायकोशं कृते विदाम् ॥ १ ॥ उद्धृत्य गादाधर्यादिग्रन्थेभ्योयं प्रसारितः । प्राङ्भिस्तु कविभिर्यस्मान्नोपदर्शित ईदृशः ॥ २ ॥ अतः संमानयन्त्वेनं न्यायकोशं कृपालवः । निर्मत्सराश्च विद्वांसो बालकस्येव चेष्टितम् ॥ ३ ॥

## ( अ )

**अकर्मकः**—(धातुः) फलसमानाधिकरणव्यापारबोधकः । यथा देवदत्तो धावतोश्वात्पततीत्यादौ पत्[1] धातुरकर्मकः । ( स्वयम् )

**अकस्मात्**—हेतुशून्यः कालः । (गण०) यथाकस्मादयमागत इत्यादौ । (स्व०)

**अकारणगुणोत्पन्नगुणत्वम्**[2]—कारणगुणोत्पन्ना[3]वृत्तिर्गुणत्वसाक्षाद्व्याप्या[4] च या जातिस्तादृशजातिमत्त्वम् । (दि० गु०)

**अखण्डोपाधिः**—अनिर्वचनीयो धर्मः । (सि० च०) यथानुयोगित्वप्रतियोगित्वविषयतात्वादिः । (स्व०)

**अघटकत्वम्**— [क] स्वा[5]विषयकप्रतीतिवृत्तितत्तान्निरूपितविषयिताकत्वम् । (गा० कूटा०)

---

१ अत्राधःसंयोगरूपं फलं तदनुकूलव्यापारश्चैतद्द्वयमेकास्मिन्देवदत्ते तिष्ठतीति फलव्यापारयोः सामानाधिकरण्यं संगच्छत इत्यवधेयम् ।

२ अकारणगुणोत्पन्नगुणाश्च बुद्ध्याद्यष्टकं भावना शब्दश्चेति । (भा० प० गु०)

३ कारणगुणोत्पन्नत्वं चात्र स्वाश्रयसमवायिसमवेतगुणजन्यत्वम् । (दि० गु०)

४ गुणत्वसाक्षाद्व्याप्यत्वं च संस्कारत्वान्यगुणत्वव्याप्यव्याप्यत्वे सति गुणत्वव्याप्यत्वम् । (दि०गु०)

५ यत्राघटकत्वमानेयं स स्वपदार्थः ।

[ख] तद्विषयत्वाव्यापकविषयतावत्त्वम् । यथा पर्वतस्य वन्ह्यभावाघटकत्वम् । (स्व०)

**अङ्गम्**– १ जनकम् । (स्व०) यथा व्याप्तिरनुमित्यङ्गमित्यादौ । (सर्व० चार्वा०) २ यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति शाब्दिकाः । ३ मुख्यफलाजनकत्वे[1] सति मुख्यफलजनकव्यापारजनकमङ्गमिति मीमांसकाः । ४ लग्नमिति मौहूर्तिकाः । ५ शरीरावयवोऽङ्गमिति काव्यज्ञा वदन्ति ।

**अजहत्स्वार्था**–(लक्षणा) [क] लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधिका । यथा काकेभ्यो[2] दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा । (न्या० बो०)

[ख] यत्र वाच्यस्याप्यन्वयस्तत्राजहती लक्षणा । यथा छत्रिणो[3] गच्छन्तीत्यादौ । (त० दी० ४)

**अजहल्लक्षणा**–अजहत्स्वार्थावदस्यार्थोऽनुसंधेयः ।

**अज्ञानम्**– १ ज्ञानाभावः । (स्व०) २ अनादि भावरूपं[4] यद्विज्ञानेन विलीयते । तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षत इति मायावादिनो वेदान्तिनो वदन्ति । (सर्व० रामा०)

**अज्ञानम्**–(निग्रहस्थानम्) [क] अविज्ञातम् । (गौ० ५।२।१७) विज्ञातस्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्था-

---

१ अत्र च कार्यकालवृत्तित्वेनैव कारणत्वस्य मीमांसकैः स्वीकृतत्वात्प्रयाजादिहोमस्य स्वर्गं प्रत्यजनकत्वमुपपद्यत इति ।

२ अत्र काकपदेन काकस्तदितरमार्जारादयश्च बोध्यन्ते । तत्र दध्युपघातकेभ्यो दधिरक्षणे तात्पर्यात् ।

३ प्रतिपाद्यसंबन्ध एव लक्षणेत्यभिप्रायेणेदमुदाहरणम् । छत्त्रिन्निन्यस्य मत्वर्थकेनप्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्तया शक्यसंबन्धरूपलक्षणाया अभावात् । (नील०)

४ अत्राज्ञाने भावत्वसाधकं प्रमाणमनुमानम् । तच्च विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । (सर्व० रामा०)

नमिति । अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति । (वात्स्या० ५।२।१८)

[ ख ] परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानम् । इदं च किं वदसि बुध्यत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यत इति । (गौ० वृ० ५।१६०) (नील०)

**अतिदेशः**—एकत्र श्रुतस्यान्यत्र संबन्धः । यथा स्तोकं पचति मृदु पचतीत्यादौ स्तोकमृद्वादौ क्रियाविशेषणानां कर्मत्वमित्याद्यनुशासनेन कर्मत्वातिदेशः । (गा० व्यु० १) यथा वा व्याकरणे स्थानिवदिति सूत्रेण सुद्ध्युपास्य इत्यादिप्रयोगघटकयकारादावीकारादिवृत्त्यचत्वातिदेशः । (स्व०)

**अतिव्याप्तिः**—(लक्षणदोषः) १ [ क ] अलक्ष्यवृत्तित्वम् । यथा गोः शृङ्गित्वस्य लक्षणत्वेतिव्याप्तिः । (त० दी० १)

[ख] लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम् । (न्या० बो०) २ व्याप्यत्वासिद्धिः[1] । विपक्षमात्राद्व्यावृत्त्यभावात्सोपाधिकत्वाच्च । यथा गोर्लक्षणस्य पशुत्वस्य । गोत्वे हि सास्नादिमत्त्वं प्रयोजकम् । (त० भा०)

**अतिसामान्यम्**[2]—यत् विवक्षितमर्थमाप्नोति चात्येति च तत् । यथा ब्राह्मणत्वं विद्याचरणसंपदं क्वचिदाप्नोति क्वचिदत्येति । (वात्स्या० १।२।५४)

**अतीतकालः**— १ कालात्ययापदिष्टवदस्यार्थोनुसंधेयः । (गौ० वृ० १।४९)

२ भूतकालवदस्यार्थोनुसंधेयः । (स्व०)

**अतीतत्वम्**—१ चरमकृतिध्वंसः । ( न्या० म० ४ )

२ [ क ] वर्तमानध्वंसः । (गा० व्यु० ल०)

[ ख ] वर्तमानकालवृत्तिध्वंसप्रतियोगित्वम् । (वाक्य०) यथा दुर्दिनमतीतमित्यादौ दुर्दिनस्यातीतत्वम् । (स्व०)

---

१ इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेण ।

२ इदं च व्यावर्तकत्वेन विवक्षितं चेत्सव्यभिचार एवान्तर्भवतीति बोध्यम् ।

**अतीन्द्रियगुणत्वम्[1]**— लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वम् । (दि० गु०)

**अतीन्द्रियत्वम्**—इन्द्रियजन्यप्रत्यक्षाविषयत्वम् । यथा कालस्यातीन्द्रियत्वम् । (स्व०)

**अत्यन्ताभावः**—(अभावः) [क] यद्वस्तु यत्र न कदापि भविष्यति न च कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो[2] मन्तव्यः । (वै०उ० ९।२।९) यथा वायौ रूपं नास्तीति प्रतीतिसाक्षिकोभावः[3] । (स्व०)

[ख] त्रैकालिक[4]संसर्गावच्छिन्नप्रतियोगिताकोभाव : । (त० सं०)

[ग] नास्तीत्यनुभवसिद्धो नित्यः संसर्गाभावः । (न्या० म० १) (मु०१)

[घ] प्रतियोग्याश्रयोभावः । ( सर्व० औलु० ) यथा भूतले घटो नास्तीति प्रतीतिसाक्षिको भूतलानुयोगिको घटप्रतियोगिकोभावः । (स्व०) केचित्तु यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं पुनरानीतं च तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थः संसर्गाभाव एव प्रतीयते नात्यन्ताभाव इत्याहुः । (वै०वि०९।२।५) केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तावभावो न पदार्थान्तरमिति प्राभाकरा आहुः । (दि० १) (त० दी०) अत्यन्ताभावो द्विविधः । एकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः । अनेकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः । आद्यो धर्मो घटत्वादिः । द्वितीय उभयत्वादिः । अयमेव व्यासज्यवृत्तिरित्युच्यते । ( सि० च० )

**अदः**–[क] परोक्षबुद्धिविषयः। (दि० ४ ) (गा० श०) यथासौ पुरुष इत्यादावदश्शब्दार्थः । (स्व०)

[ख ] विप्रकृष्टपरोक्षव्यक्तिरिति केचित् ।(दि० ४ )

---

१ अतीन्द्रियगुणाश्च गुरुत्वमदृष्टं भावना स्थितिस्थापकश्चेति । ( भा० प० गु० )

२ अत एवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते । (वै०उ०९।२।९)

३ एतन्मते अत्र घटो नास्तीत्यादिप्रतीतिसाक्षिकाभावश्च सामयिकाभाव एव । नैयायिकास्तु सामयिकाभावोत्यन्ताभावान्नातिरिच्यत इति प्राहुः ।

४ त्रैकालिकत्वमिह नित्यत्वम् । (नील०)

**अदृष्टम्**[1]–(गुणः) धर्माधर्मशब्दवदस्यार्थोनुसंधेयः । ( भा० प० ) तददृष्टमपूर्वमिति मीमांसका आहुः । प्रारब्धकर्मेति वेदान्तिनः । अदृष्टमिति वैशेषिकाः । धर्माधर्माविति नैयायिकाः । पुण्यपापे इति पौराणिकाः ।

**अदृष्टार्थकः**–( प्रमाणशब्दः ) [ क ] यस्यामुत्रार्थः प्रतीयते सोदृष्टार्थः । ( वात्स्या० १।१।८ )

[ ख ] शब्दतदुपजीविप्रमाणमात्रगम्यार्थकः । ( गौ० वृ० १।१।८ ) यथा स्वर्गापूर्वादिशब्दः । ( स्व० )

**अद्यतनः**–( कालः ) [ क ] अतीतरात्रेरन्त्ययामेनागामिन्या रात्रेः पूर्वयामेन च सहितः कालः । ( स्व० )

[ ख ] अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवस इति शाब्दिका वदन्ति ।

**अद्रव्यद्रव्यत्वम्**–असमवेतद्रव्यत्वम् । ( गा० दशा० ) यथाकाशादेर्नित्यद्रव्यस्याद्रव्यद्रव्यत्वम् । ( स्व० )

**अधः**–[ क ] गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो दिक् । ( वै० उ० २।२।१० )

[ ख ] पतनजन्यसंयोगाश्रयः । ( वै० वि० २।२।१० )

**अधर्मः**–(गुणः) [ क ] शरीरादिजनकात्मविशेषगुणः । (त० भा०)

[ ख ] नरकदुःखादिदुःखानां साधनम् । (मु०)

[ ग ] निषिद्धकर्म[2]जन्यः । ( त० सं० )

[ घ ] अनिष्टान्तरजनकः । (मू० म० १)

**अधिकम्**–( निग्रहस्थानम् ) [ क ] हेतूदाहरणाधिकम् । (गौ० ५।५६) एकेन

---

१ अदो वासनया जन्यते भोगप्रायश्चित्तज्ञानादिना नश्यतीति विज्ञेयम् । अदृष्टसद्भावे प्रमाणं चानुमानम् । तच्च चैत्रस्य शरीरादिकं चैत्रस्य विशेषगुणजन्यं कार्यत्वे सति चैत्रस्य भोगहेतुत्वाच्चैत्रप्रयत्नजन्यकुसुमपर्यङ्कादिवदिति । (सि० च० )

२ निषिद्धकर्म चात्रानिष्टसाधनत्वेन वेदबोधितं कर्म । ( वाक्य० )

कृतत्वादन्यस्यानर्थक्यामिति तदेतन्नियमाभ्युपगमे वेदितव्यमिति । (वात्स्या० ५।२।१३)

[ख] कृतकर्तव्यापुनरुक्ताभिधानम् । (गौ० वृ० ५।५६)

[ग] अधिकहेत्वादिकथनम् । यथा शब्दोनित्यः शब्दत्वाच्छ्रावणत्वाच्चेत्यादि । (नील०) (दि० १)

**अधिकरणता**—[क] अधिकरणमिति प्रतीतिसाक्षिको धर्मविशेषः। यथा घटवद्भूतलमित्यादौ भूतले घटाधिकरणता ।(स्व० )

[ख] विषयताविशेष इति कश्चिद्वक्ति ।

[ग] कर्तृद्वारा कर्मद्वारा वा क्रियाश्रयत्वमिति शाब्दिका वदन्ति ।

**अधिकरणसिद्धान्तः**—(सिद्धान्तः) [क] यत्सिद्धावन्यप्रकरणसिद्धिः । (गौ० १।१।३०) यस्यार्थस्य सिद्धावन्येर्था अनुषज्यन्ते न तैर्विना सोर्थः सिध्यति तेर्था यदधिष्ठानाः सोधिकरणसिद्धान्तः । यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति । अत्रानुषङ्गिणोर्था इन्द्रियनानात्वादयः । .... (वात्स्या० १।१।३०)

[ख] यस्यार्थस्य सिद्धौ जायमानायामेवान्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सः । यथा तद्व्यणुकादिकं पक्षीकृत्योपादानगोचरज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीश्वरस्य । (गौ० वृ० ।१।१।३०)

**अधिकारः**—१ [क] यत् प्रवर्तमानपुरुषनिष्ठतया ज्ञायमानं सत्प्रवृत्तिहेतुः सः [ख] यद्धर्मविशिष्टेन[2] कृतस्य कर्मणः फलजनकत्वं सः । (मू० म० १)

[ग] कर्मफलभाक्त्वमिति केचित् । २ स्वसूत्रे लक्ष्यसंस्कारकवाक्यार्थशून्यत्वे सति विधिसूत्रैकवाक्यतापन्नत्वमिति शाब्दिका वदन्ति । ३। यद्विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते सोधिकार इति मीमांसकाः । ४ प्रारम्भ इति केचिच्छाब्दिका वेदान्तिनश्च । ५ व्यवस्थापनमिति काव्यज्ञाः।

**अधिगमः**—व्याख्यानादिरूपपरोपदेशजनितं ज्ञानम् । (सर्व० आर्ह०)

---

१ एतन्मतेधिकरणं त्रिविधम् । औपश्लेषिकं वैषयिकमभिव्यापकं चेति ।

२ इदमपि मीमांसकमतमिति मम भाति ।

**अधीनत्वम्**—१ एतत्समयसंबन्धो दण्डाधीन इत्यादिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । (मू० म० १) यथा कपालाधीनो घटो राजाधीनो भृत्य इत्यादावधीनत्वम् । (स्व०) २ तन्निर्वाह्य[1]निश्चयकार्यकारिताप्रयोजकरूपवत्त्वम् । (गा० बाध०)

**अध्यक्षम्**— १ प्रत्यक्षम् । २ प्रत्यक्षविषयः । (भा० प०) (मु०) (दि० १)

**अध्यात्मकवायुः**—प्राणाख्यो वायुः । (दि० १)

**अध्याहारः**—अश्रुतपदानामनुसंधानम् । (दि० ४) यथा घटमानयेत्युक्ते त्वमिति पदस्याध्याहारः । अध्याहारो द्विविधः । शब्दाध्याहारः । अर्थाध्याहारः । (स्व०)

**अध्येषणा**—या श्रोतरि पूजा संमानव्याञ्जिका सा । (कु० ५)

**अनतिरिक्तत्वम्**—स्वान्यूनवृत्ति तत्कत्वम् । (दीधि० २) यथाभिधेयत्वानतिरिक्तत्वं प्रमेयत्वस्येति । (स्व०)

**अनतिरिक्त[2]विषयकत्वम्**—[क] प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताविलक्षणविषयताशून्य[3]त्वम् । (दीधि०) यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमानिति प्रतिज्ञावाक्यजन्यशाब्दबोधस्य पर्वतो वह्निमानित्यनुमित्य[4]न्यूनानतिरिक्तविषयकत्वम् । (स्व०)

[ख] प्रकृत[5]हेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्यविषयकत्वमिति केचित् । (दीधि०)

---

१ अयं च विशेषरूपेण तदधीनत्वशब्दार्थः ।

२ इदमनतिरिक्तविषयकत्वं प्रतिज्ञालक्षणशरीर एव नान्यत्रेति ज्ञेयम् ।

३ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकविषयताशून्यत्वमित्यर्थः । (गा. अव० )

४ अत्रान्यूनविषयकत्वं च पक्षे साध्यवैशिष्ट्यावगाहित्वम् । ( दीधि० )

५ यद्रूपावच्छिन्नविशेषितप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयकनिश्चयत्वं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयकत्वमिति पर्यवसितोर्थः । ( गा० अव० )

सर्वस्यैव तत्सदृशत्वात्सर्वस्यानित्यत्वप्रसङ्ग इति । (नील०)

[ ग ] व्याप्तिमपुरस्कृत्य यत्किंचिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनम् । (गौ० वृ० ५।३२)

**अनिष्टप्रसङ्गः**—अनभिमतार्थापादनम् । यथा पर्वते धूमेन वह्निसाधने[1]प्रयोजकशङ्कायां यदि वह्निर्न स्यात्तर्हि धूमो[2]पि न स्यादिति । (स्व०)

**अनुकूलत्वम्**—प्रयोजकत्ववदस्यार्थोनुसंधेयः ।

**अनुकूलवेदनीयम्**—इष्टसाधनताज्ञानाधीनेच्छाविषयः । यथा सुखम् । (स्व०)

**अनुक्लृप्तिः**—लक्षणम् । (वै० २।१।२२)

**अनुगमः**—अनुगतप्रवृत्तिनिमित्तम् । (गा० अव०) यथा सर्वेषां घटानामनुगमो घटत्वम् (स्व०)

**अनुज्ञा**—या निवारणाभावव्यञ्जिका पूजा इच्छा वा सा । (कु० ५) यथा देवदत्तेनानुज्ञातो यज्ञदत्तो गच्छतीत्यादौ । (स्व०)

**अनुत्पत्तिसमः**—(जातिः) [ क ] प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । (गौ० ५।१२) अनित्यः शब्दो यत्नानन्तरीयकत्वाद्घटवदित्युक्ते अपर आह प्रागुत्पत्तेरनुत्पन्ने शब्दे यत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति तदभावान्नित्यत्वं प्राप्तं नित्यस्य चोत्पत्तिर्नास्ति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः । (वात्स्या० ५।१।१२) (नील०)

[ ख ] साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राग्घेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानम् । यथा घटो रूपवान्गन्धात्पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादासिद्धिः । पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः । (गौ० वृ० ५।१२)

**अनुपकारसमः**[3]—(जातिः) कार्यकारणभावस्योपकारानियतत्वेनवस्था । (गौ० वृ० ५।३७)

---

१ अत्राप्रयोजकशङ्का च पक्षे हेतुरस्तु साध्यं मास्त्विति ।

२ अत्रानिष्टप्रसङ्गश्च सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनम् । (त. भा.)

३ इयं जातिः सूत्रानुक्ता वृत्तिकारेण वृत्तावुच्यते कार्यसम इत्यनेनोपलक्ष्यते चेति बोध्यम् ।

अनुपलब्धिः—उपलब्ध्यभावः । (राम०) अत्र केचिदेवमाहुः । अनुपलब्धिः प्रमाणान्तरमभावप्रत्यक्षे[1] प्रयोजिका चेति । अत्र नैयायिकाः । तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेनेन्द्रियेणैवाभावज्ञानोपपत्तावनुपलब्धेः प्रमाणान्तरत्वासंभव इत्याहुः । (त० दी०) (नील०)

अनुपलब्धिसमः—(जातिः) [ क ] तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः । ( गौ० ५।२९) तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते । अनुपलम्भान्नास्तीत्यभावोस्याः सिध्यति । अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते । तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरित्येतन्न सिध्यति । सोयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चावरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोनुपलब्धिसमो भवति । (वात्स्या० ५।१।२९) [ ख ] वादिनानुपलब्धिवशात्कस्यचित्पदार्थस्यानङ्गीकारेनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किंचित्पदार्थस्याभावसाधनम् । यथा जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धिस्तद्वदुच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते । यथावरणवशाच्छब्दो नोपलभ्यते तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति । अत्रोत्तरम् । यदि भवद्भिरनुपलब्धित आवरणवशाच्छब्दो नोपलभ्यते तदानुपलब्धेरप्यनुपलब्ध्याभावे सिद्धे तदभावादावरणसिद्धिरिति । (नील०)

अनुपसंहारित्वम्—( हेतुदोषः ) [ क ] अवृत्तिसाध्यहेत्वन्यतरकत्वम् । [ ख ] अवृत्तिसाध्यकत्वम् । यथाकाशवान्धूमाद्दिश इत्यादौ । (न्या०म०) [ ग ] विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकं रूपम्[2] ।

१ अभावे कृप्तसंनिकर्षाभावेन प्रत्यक्षासंभवात्तद्ग्रहार्थमनुपलब्धिरूपो ज्ञानविशेषः प्रमाणमिति भट्टवेदान्तिन आहुः ।

२ तादृशं च रूपं साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकम् । (दीधि० २)

[ घ ] हेत्वभिमतशब्दोपसंदानात्तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावः ।

[ ङ ] केवलान्वयिधर्मावच्छिन्नसाध्यसंदेहविषयवृत्तित्वम् ।

[ च ] साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वम् । ( दीधि० २ )

[ छ ] केवलान्वयिधर्मव्यापकीभूतं यत्स्वप्रतिबन्धकतावच्छेदकीभूतसाध्यवत्तानिश्चयविशेष्यतासमानाधिकरणसाध्यसंशयविषयत्वं तद्वद्वृत्तित्वम् । ( गा० ) यथेदं वाच्यं ज्ञेयत्वादित्यादौ साध्यादिनिष्ठमत्यन्ताभावाप्रतियोगित्वादिकम् । ( स्व० )

[ ज ] किंचिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किंचिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वमिति प्राञ्चो वदन्ति ।

[ झ ] अत्यन्ताभावाप्रतियोगिसाध्यादिकत्वमिति नव्याः प्राहुः । ( नील० )

**अनुपसंहारी**[1]–( हेत्वाभासः ) [ क ] व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतः । यथा घटोनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादौ हेतुः । ( चि० २ )

[ ख ] केवलान्वयिधर्मावच्छिन्नपक्षको[2] हेतुः । यथा सर्वं नित्यं प्रमेयत्वादित्यादि । ( चि० २ ) ( गौ० वृ० १।४५ ) ( मा० प० )

[ ग ] केवलान्वयिसाध्यकः[3] ।

[ घ ] अत्यन्ताभावाप्रतियोगिसाध्यकादिः । ( मु० ) यथा घटोभिधेयः पटत्वादित्यादौ पटत्वं हेतुः । ( स्व० )

[ ङ ] अन्वयव्यतिरेकदृष्टान्तरहितो हेतुः । यथा सर्वमनित्यं प्रमेयत्वादिति । ( त० सं० )

**अनुभवः**–( बुद्धिः ) स्मृतिभिन्नं ज्ञानम् । ( त० सं० ) ( त० भा० ) ( न्या० म० )

---

१ अयमनैकान्तिकप्रभेद इति विज्ञेयम् । अनुपसंहारिलक्षणं तु पूर्वोक्तानुपसंहारित्वमेव ।

२ इदं च प्राचीनमतम् । अत्र च साध्यसंदेहाद्व्याप्तिग्रहो न भवतीत्याशयः । ( गौ० वृ० १।४५ )

३ इदं च नवीनमतम् । तस्य चात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् ।

स द्विविधः । यथार्थः । अयथार्थः । आद्यः । तद्वति तत्प्रकारकानुभवः । स एव प्रमेत्युच्यते । द्वितीयः । तदभाववति तत्प्रकारकानुभवः । यथार्थश्च[1]तुर्विधः । प्रत्यक्षम् । अनुमितिः । उपमितिः । शाब्दबोधः । यथार्थानुभवकरणमपि चतुर्विधम् । प्रत्यक्षम् । अनुमानम् । उपमानम् । शब्दः । (त० सं०)

**अनुभूतिः**—अनुभववदस्यार्थोनुसंधेयः । (भा० प०) अनुभूतिः प्रत्यक्षात्मकैवेति चार्वाका आहुः । अनुमितिरपीति काणादसौगतौ । उपमितिरपीति केचिन्नैयायिकैकदेशिनः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भट्टवेदान्तिनः । संभवैतिह्यरूपापीति पौराणिकाः । (दि० १। ३) चेष्टापीति तान्त्रिकाः । (सि० च०)

**अनुमानम्**—(प्रमाणम्) [क] प्रत्यक्षेणाप्रत्यक्षस्य संबद्धस्य प्र[2]तिपत्तिः । (वात्स्या० २।२।२)

[ख] अनुमितिकरणम् । यथा व्याप्तिज्ञानम्[3] । (गौ० वृ० १।१। ५) यथा वा लिङ्गप[4]रामर्शः । (त० भा०) (त० सं०) तद्द्विविधम् । स्वार्थम् । परार्थम् । आद्यं स्वानु[5]मितिहेतुः । द्वितीयं परानु[6]मितिहेतुः ।

---

१ एवमेवायथार्थानुभवोपि चतुर्विधः । तत्करणमपि चतुर्विधमिति च विज्ञेयम् ।

२ इयं चानुमितिरेव नत्वनुमितिकरणरूपमनुमानमिति मम भाति । (स्व०) अत्र मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानमिति व्युत्पत्तिः । (वात्स्या० १।१।3)

3 इदमुदाहरणं च व्यापारवदसाधारणकारणं करणमिति प्राचीनमतानुसारेण । अत्रानुमितिकरणपदस्य जनकतयानुमितित्वावच्छिन्नजनकत्वे सत्यनुमितित्वावच्छिन्नजनकमित्यर्थः । (वाक्य०)

४ अत्र च फलायोगव्यवच्छिन्नं कारणं करणमिति नवीनमतानुसारेणेदमुदाहरणमिति विज्ञेयम् ।

५ यत्र स्वयमेव भूयोदर्शनेन 'यत्र धूमस्तत्राग्निरिति' महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन्व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निरिति' तदनन्तरं वह्निव्याप्यधूमवान्पर्वत इति ज्ञानमुत्पद्यते । अयं लिङ्गपरामर्श इत्युच्यते । तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् । (त० सं०)

६ यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयवोपेतं वाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । (त० सं०)

(त० सं०) प्रकारान्तरेणानुमानं त्रिविधम् । पूर्ववत्[1] । शेषवत्[2] । सामा[3]-न्यतो दृष्टम् । ( गौ० १।१।५ )

**अनुमितिः**[4]–(अनुभवः) [ क ] व्याप्तिज्ञानकरणकं ज्ञानम् । ( मु० ) [ ख ] परामर्शजन्यं ज्ञानम् । यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमानिति ज्ञानम् । (त० सं० ) अनुमितिर्द्वेधा[5] । पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यमात्रावगाहिनी । तयोरवच्छेद्यावच्छेदकभावावगाहिनी । (गा० पक्ष० ) प्रकारान्तरेणानुमितिर्द्विविधा । लाघवज्ञानसहकृतानुमितिः । इतरबाधग्रहसहकृतानुमितिः । ( स्व० )

**अनुयोगिता**–१ स्वरूपसंबन्धविशेषः । यथा घटवद्भूतलमित्यादौ भूतलनिष्ठा भूतलस्वरूपा संयोगसंबधस्यानुयोगिता । ( स्व० ) २ अभावत्वात्मिका । ( गा० सि० ) यथा घटो नास्तीति प्रतीतिविषयेभावे घटनिष्ठप्रतियोगितानिरूपितानुयोगिता[6] । ( स्व० )

**अनुवादः**–( अर्थवादः ) [ क ] विधिविहितस्यानुवचनम् । ( गौ० २।६२ ) विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादोपरोर्थानुवादः । .... लोकेपि चानुवादः । पचतुपचतु भवानित्य-

---

१ कारणलिङ्गकमित्यर्थः । यथा मेघोन्नत्या भाविवृष्ट्यनुमानम् । (गौ० वृ० १।१।५) (वात्स्या०)

२ कार्यलिङ्गकमित्यर्थः । यथा नदीपूरेण भूतवृष्ट्यनुमानम् । (गौ० वृ० १।१।५) (वात्स्या०)

३ कार्यकारणभिन्नलिङ्गकमित्यर्थः । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् । ( गौ० वृ०१।१।५ ) (वात्स्या०)

४ लक्षणं चानुमितित्वमेव । तच्च । [ क ] अनुमिनोमीत्यनुभवसिद्धो जातिविशेषः । [ ख ] जन्यशाब्दभिन्नजन्यत्वाव्यभिचारिजन्यज्ञानजन्यत्वाव्यभिचारिजातिमदनुभवत्वम् । (न्या०म० ) ( त०प्र० ) ( ग ) व्याप्तिविशिष्टपक्षधर्मत्वविषयताशालिनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यत्वे सति ज्ञानत्वम् । ( वाक्य० )

५ अत्रेदमवधेयम् । पर्वतो वह्निमानित्याद्यनुमितौ यदा वह्निपर्वतत्वयोः सामानाधिकरण्यमात्रं विवक्षितं तदा सानुमितिः सामानाधिकरण्यमात्रावगाहिनी । यदा तु तयोर्व्याप्यव्यापकभावो विवक्षितस्तदावच्छेद्यावच्छेदकभावावगाहिनी भवतीति ।

६ इयमपि स्वरूपसंबन्धविशेष एवेति केचिन्नैयायिका वदन्ति ।

भ्यासः । क्षिप्रं पच्यतामिति वा । ( वात्स्या० २।१।६४ )

[ ख ] प्रमाणान्तरावगतार्थबोधकः । यथाग्निर्हिमस्य[1] भेषजमित्यादिः । ( सि० च० ) ( लौ० भा० )

**अनुवादकत्वम्**–गृहीतग्राह्यनुभवमात्रजनकत्वम्[2] । ( कु० )

**अनुवृत्तत्वम्**–सामानाधिकरण्यम् । ( गा० सव्य० ) यथा धूमानुवृत्तो वह्निरित्यादौ वह्नौ धूमानुवृत्तत्वम् । ( स्व० )

**अनुवृत्तिः**–दवीयस्थानान्तरास्थितस्य सर्वत्रानुसंधानम् । इयं त्रिधा । सिंहावलोकितम् । मण्डूकप्लुतिः । गङ्गास्रोतः । ( दि० ४ )

**अनुव्यवसायः**–ज्ञानविषयकं ज्ञानम् । यथा घटं जानामीति ज्ञानम् । ( स्व० )

**अनुशासनम्**–गमकम्[3] । यथाथ शब्दानुशासनमित्यादौ । ( स्व० )

**अनुषङ्गः**–१ अविनाभावः । त० भा० )

२ [ क ] नेदीयस्थानान्तरास्थितस्य क्वाचिदनुसंधानम् । ( दि० ४ ) यथा देवदत्तो ग्रामं गच्छति भुङ्क्ते इत्यत्र देवदत्त इति पदमनुषज्यते । ( स्व० )

[ ख ] अन्यार्थं प्रवृत्तस्य नान्तरीयफलजनकत्वमिति[4] शाब्दिका वदन्ति

**अनेकद्रव्यत्वम्**–[क] अनेकद्रव्याश्रिताश्रितत्वम् ।

[ ख ] अवयवबहुत्वाधीनमहत्त्वाश्रयत्वम् । ( वै० उ० ४।१।६ )

[ ग ] अनेकसमवेतसमवेतद्रव्यत्वम् । ( वै० वि० ४।१।६ )

[ घ ] पारिमाण्डल्याभावविशिष्टद्रव्यत्वम् । ( सि० च० )

---

१ हिमविरोधिन्वस्याग्नौ प्रत्यक्षावगतत्वादेतद्वाक्यस्यानुवादकत्वमिति बोध्यम् । ( लौ० भा० )

२ *स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारनिश्चयविषयविषयकतद्धर्मिविशेष्यकतत्प्रकारकानुभवमात्रजनकत्वमिति यावत् । ( कु० )

३ शास्त्रमित्यर्थः ।

४ नान्तरीयकत्वं च तत्सत्तानियतसत्ताकत्वम् ।

---

* अत्र स्वपदमनुभवादिपरम् । ( कु० )

[ ङ ] अणुभिन्नद्रव्यत्वम् । ( दि० ) यथा त्र्यणुकादिघटपर्यन्तानामनेकद्रव्यत्वम् । ( स्व० )

**अनेकत्वम्**–[ क ] एकत्वभिन्नसंख्याविशिष्टत्वम् । ( दि० गु० ) यथानेके ब्राह्मणाः सन्तीत्यादौ ब्राह्मणानामनेकत्वम् । ( स्व० )

[ ख ] स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणत्वमनेकत्वमित्यपि केचित् । ( दि० गु० )

**अनेकाश्रितगुणत्वम्**[1]–[क] एकत्वभिन्नसंख्याविशिष्टधर्मिवृत्तिगुणत्वम् ।

[ ख ] स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वमिति केचिद्वदन्ति । ( दि० गु० )

**अनैकान्तिकः**[2]–( हेत्वाभासः ) [क] एकमात्रव्याप्तिग्राहकसहचारस्त्वैकान्तिकस्तदन्योनैकान्तिकः । ( गौ० वृ० १।४५ ) यथा नित्यः शब्दोऽस्पर्शत्वादित्यादौ । • • • नित्यत्वमप्येकोन्तः । अनित्यत्वमप्येकोन्तः । एकास्मिन्नन्ते विद्यत इत्यैकान्तिकः । विपर्ययादनैकान्तिकः । उभयान्तव्यापकत्वादिति । ( वात्स्या० १।२।४६ )

[ ख ] साध्य[3]संदेहजनकपक्षधर्मताज्ञानविषयः । ( वै० वि० ३।१।१५ ) यथा धूमवान्वह्नेरित्यत्र वह्निरनैकान्तिकः । ( त० सं० ) स द्विविधः । साधारणः । असाधारणः । ( त० भा० ) प्रकारान्तरेणानैकान्तिकस्त्रिविधः । साधारणः । असाधारणः । अनुपसंहारी । ( त० भा० ) ( गौ० वृ० १।४५ ) ( त० सं० )

**अनैकान्तिकत्वम्**–सव्यभिचारत्ववदस्यार्थोनुसंधेयः ।

---

१ अनेकाश्रितगुणाश्च संयोगो विभागो द्वित्वादिकाः संख्या द्विपृथक्त्वादयः । ( भा० प० गु० )

२ एकस्य साध्यस्य तदभावस्य वा योन्तः सहचारोऽव्यभिचरितसहचारः । अव्यभिचरितसहचारस्यान्तः सहचार इत्याशयः । स चात्र व्याप्तिग्राहकः । ( गौ० वृ० १।४५ ) अयमनैकान्तिकश्च सव्यभिचारशब्देन व्यवह्रियत इति बोध्यम् । तल्लक्षणमपि सव्यभिचारशब्दव्याख्यानावसरे संपादयिष्यत इति । शिष्टं सर्वं तु सव्यभिचारवदनुसंधेयम् ।

३ इदं च प्राचीनमतानुसारेण ।

**अन्तः**–१ संबन्धः। ( गौ० वृ० २।१३३ ) २ ध्वंसः। ३ पदस्य चरमावयव इति शाब्दिकाः। ४ निर्णय इति वेदान्तिनो वदन्ति।

**अन्तर्धानम्**–स्वनिष्ठान्यकर्तृकदर्शनविषयताविरहोद्देश्यको व्यापारः। यथोपाध्यायादन्तर्धत्ते[1] छात्र इत्यादौ धात्वर्थः। ( गा० व्यु० ९ )

**अन्तिकत्वम्**–दैशिकापरत्वम्। ( मु० ) यथा प्रयागस्य जनस्थानमपेक्ष्य वाराणस्यान्तिकत्वम्। ( स्व० )

**अन्त्यः**–१ अवसाने वर्तमानः। यथा विशेषः[2]। ( मु०१ ) २ पूर्वस्मिन्सति यस्मात्परो नास्ति सोन्त्य इति शाब्दिका वदन्ति।

**अन्त्यावयवित्वम्**– [ क ] द्रव्यानारम्भकद्रव्यत्वम्। ( दि०१ )

[ ख ] अवयवजन्यत्वे सत्यवयवाजनकत्वम्। ( सि० च० ) यथा घटादेर[3]न्त्यावयवित्वम्। ( स्व० )

**अन्यतमत्वम्**–[ क ] तत्तदवृत्तिशून्यत्वम्। ( गा० कूट० )

[ ख ] भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। यथा घटस्य घटपटस्तम्भान्यतमत्वम्। ( स्व० )

**अन्यतरत्वम्**–भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। यथा घटस्य घटपटान्यतरत्वम्। ( स्व० )

**अन्यथाख्यातिः**–१ [ क ] भ्रमः ( नील० )

[ ख ] अयथार्थानुभवः। ( सि० च० ) २ भ्रमात्मकज्ञानीयप्रकारता। यथेदं रजतमिति ज्ञाने रजतत्वस्य तादृशप्रकारता। ( स्व० ) ३ रजतत्वप्रकारकत्वावच्छेदेन शुक्तिविशेष्यकत्वम्। ( मू० म०१ ) वाचस्पतिमिश्रास्तु शुक्ताविदं रजतमिति ज्ञाने प्रसिद्धशुक्तिरजतत्वयोरलीक एव

---

१ छात्रो हि मामुपाध्यायो न पश्यत्विति दर्शनाभावप्रयोजकं व्यापारं करोतीति।

२ इदमत्राकूतम्। परमाण्वादिवृत्तिविशेषः स्वस्य स्वयमेव व्यावर्तकस्तदपेक्षया विशेषान्तरं नास्तीति विशेषोन्त्यो भवतीति विज्ञेयम्।

३ इदमत्राकूतम्। परमाणूनारभ्य कपालपर्यन्तमवयवा द्रव्यान्तरमारभन्ते घटस्तु न कस्यचिद्द्रव्यान्तरमुत्पादयितुं क्षमत इति घटस्यान्त्यावयवित्वमिति।

समवायो भासत इत्यसत्ख्यातिमङ्गीचक्रुः । ( सि० च० )

**अन्यथानुपपत्तिः**—विवक्षितान्यकल्पनया सर्वानुभवसिद्धस्य पदार्थस्यासिद्धिः । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ रात्रिभोजनानङ्गीकारे पीनत्वान्यथानुपपत्तिः । ( स्व० )[1]

**अन्यथासिद्धः**—[क] अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वे सति प्रयोजकः । ( मु० ) [ ख ] अवश्यक्लृप्तनियतपूर्ववृत्तिसहभूतः । ( सि० च० ) यथा घटं प्रति दण्डत्वम् । स त्रिविधः । प्रथमः । येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तेन तं प्रति सोऽन्यथासिद्धः । यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति । द्वितीयः । अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति सोऽन्यथासिद्धः । यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव घटं प्रत्याकाशस्य । तृतीयः । अन्यत्र क्लृप्तनियतपूर्ववृत्तिनैव कार्यसंभवे तत्सहभूतोऽन्यथासिद्धः । यथा पाकजस्थले गन्धं प्रति रूपप्रागभावः । ( त० दी० ) प्रकारान्तरेणान्यथासिद्धं पञ्चविधम् । तत्र प्रथमान्यथासिद्धमाह । यत्कार्यं प्रति कारणस्य पूर्ववृत्तित्वं येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम् । द्वितीयमन्यथासिद्धमाह । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किंतु स्वकारणमादायान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् । यथा घटं प्रति दण्डरूपम् । तृतीयमन्यथासिद्धमाह । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य । चतुर्थमन्यथासिद्धमाह । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटं प्रति कुलालपितुः । पञ्चममन्यथासिद्धमाह । अवश्यक्लृप्तनियतपूर्ववृत्तिन एव कार्यसंभवे तद्भिन्नम्[2]अन्यथासिद्धम् । यथा घटादिकं प्रति रासभादीति । ( भा० प० ) ( मु० )

१ इयं चानुमान एवान्तर्भवतीति विज्ञेयम् ।

२ पञ्चस्वन्यथासिद्धेषु पञ्चममावश्यकमिति बोध्यम् । ( भा० प० १ )

अन्यथासिद्धस्त्रिविध इति मणिकारमतम् । लघु[1]नियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्येकविधमेवान्यथासिद्धमिति नवीना आहुः । ( नील० )

**अन्यथासिद्धिः**–पूर्वोक्तेष्वन्यथासिद्धेषु वर्तमानस्तत्तद्धर्मविशेषः । ( स्व० )

**अन्योन्याभावः**[2]–(अभावः ) [ क ] तादात्म्याभावः । यथा असन्नश्वो गवात्मना । अघटः पट इति ।

[ ख ] अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभावः । ( सर्व० औलु० )

[ ग ] इदमिदं न भवतीदमेतद्भिन्नमिति प्रतीतिसाक्षिकोभावः । ( न्या० म० )

[ घ ] तादात्म्य[3]संबन्धावच्छिन्नप्रतियोगिताकोभावः । ( त० स० ) ( गा०सि० )

[ ङ ] नित्यत्वे सत्यत्यन्ताभावभिन्नत्वे सत्यभावः । यथा घटः पटो न भवतीति प्रतीतिसाक्षिको भेदः । ( गा० सि० ) अन्योन्याभावो वस्तुस्वरूप एव न च पृथगिति मध्वाचार्यानुयायिन आहुः ।

**अन्वयः**–१ अन्वयव्याप्तिः । ( वाक्य० ) २ कोटिद्वयसहचरित[4]ज्ञानम् । (गा० सत्प्र० ) यथा धूमवान्वह्नेरित्यादौ धूमधूमाभावसमानाधिकरणवह्निमानिति ज्ञानम् । ( स्व० ) ३ साध्यम् । ४ हेत्वभाववति कार्यान्वय[5]-

---

१ अत्र लघुत्वं च त्रिविधम् । शरीरकृतम् । उपस्थितिकृतम् । संबन्धकृतम् । तत्र प्रथममनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे । द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे । गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयं दण्डत्वं दण्डरूपाद्यपेक्षया दण्डादौ । स्वाश्रयदण्डसंयोगादिरूपपरंपराया गुरुत्वात् । ( नील० )

२ प्रतियोगिसमानाधिकरणश्चायमभावः । यथा घटो न भूतलमिति । नित्यश्चायमभावः । अन्योन्याभावप्रतियोग्यधिकरणयोग्यतामात्रं तन्त्रम् । ( वै० उ० ९।१।४ ) ( ९।१।८ )

३ घटः पटो न भवतीत्यादौ घटात्मा पटो न भवतीति घटतादात्म्येनावच्छिन्ना या घटनिष्ठा प्रतियोगिता तन्निरूपको भेदः पटे प्रतीयत इति ।

४ इदं ज्ञानं साधारणधर्मवत्ताज्ञानविधया संशये प्रयोजकमिति विज्ञेयम् । ( स्व० )

५ व्यभिचारज्ञानमिति यावदिति नव्याः । ( मू० म० १ )

ज्ञानम् । ( मू० म० १ ) ५ कार्यकारणयोः साध्यसाधनयोर्वा साहचर्यम् । ( सि० च० ) यथा स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वेऽवश्यं यत्सत्त्वमिति[1] । ( त० प्र० ) यथा वा पर्वतो वन्हिमान्धूमादित्यादौ धूमवन्ह्योः साहचर्यम् । ६ पदार्थानां परस्परं संबन्धः । यथा घटमानयेति वाक्यजन्यशाब्दबोधे घटानयनादीनां संबन्धः । अयं चान्वयो द्विविधः । भेदान्वयः । अभेदान्वयः । आद्यो राज्ञः पुरुष इत्यादौ । द्वितीयो नीलो घट इत्यादौ । ( स्व० )

**अन्वयदृष्टान्तः**— ( दृष्टान्तः ) [ क ] निश्चितसाध्यवान् । ( वाक्य० २ )

[ ख ] पक्षे हेतुप्रत्यक्षानन्तरं यदन्तर्भावेन साध्यनिरूपितव्याप्तिः स्मर्यते सः । यथा पर्वते धूमेन वह्निसाधने महानसोऽन्वयदृष्टान्तः । ( स्व० )

**अन्वयव्यतिरेकि**[2]—( लिङ्गम् ) [ क ] गृहीतान्वयव्यतिरेकिसाध्यकम् । ( दीधि० २ )

[ ख ] सत्सपक्षविपक्षो हेतुः । ( मु० )

[ ग ] अन्वयेन[3] व्यतिरेकेण च व्याप्तिमत् । ( त० सं० ) यथा वह्निमान्धूमादित्यादौ धूमः । ( मु० )

**अन्वयव्यतिरेकी**[4]—( अवयवः ) [ क ] प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः । ( गौ० वृ० १।३४ )

[ ख ] पक्षसपक्षसतो विपक्षासतो हेतुवचनम् ।

[ ग ] अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकतथाभूतावयवः । ( चि० अव० ) यथा पर्वतो वह्निमान्धूमादित्यत्र धूमादिति पदम् । ( स्व० )

**अन्वयव्यभिचारः**—( व्यभिचारः ) कारणसमवधानाव्यवहितोत्तरक्षणावच्छेदेन कारणतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कार्याभाव-

---

१ चक्रादिघटितसामग्रीसमवहितदण्डादिसत्त्वे घटसत्त्वमित्यर्थः ।

२ अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं भवति । पञ्च रूपाणि च पक्षधर्मत्वम् । सपक्षे सत्त्वम् । विपक्षाद्व्यावृत्तिः । अबाधितविषयत्वम् । असत्प्रतिपक्षत्वं चेति । ( सि० च० )

३ अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमदित्यर्थः । ( नील० )

४ अयं चान्वयव्यतिरेकिहेतुः ।

वत्त्वम्। (ख०) यथा समाप्तिं प्रति मङ्गलस्य कारणत्वे कादम्बर्यादावाशङ्कितोन्वयव्यभिचारः। (त० दी० १)

**अन्वयव्याप्तिः**[1]–[क] प्रकृतहेतुनिष्ठा प्रकृतसाध्यनिरूपिता व्याप्तिः (गा० सामा०)

[ख] हेतुसाध्ययोर्व्याप्तिः। (त० दी०) यथा यत्र धूमस्तत्राग्निरिति। (त० सं०) सा चात्यन्तान्योन्याभावभेदेन भिन्ना। अव्यभिचरितसामानाधिकरण्यव्यापकसामानाधिकरण्यरूपा। (गा० सामा०) (न्या० बो०)

**अन्वयिहेतुः**[2]– (अवयवः) [क] उदाहरण[3]साधर्म्यात्साध्यसाधनं हेतुः। (गौ० १।१।३४) उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः। साध्ये प्रतिसंधाय धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः। उत्पत्तिधर्मकत्वादिति। उत्पत्तिधर्मकमनित्यं दृष्टमिति। (वात्स्या० १।१।३४)

[ख] ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः। (गौ० वृ० १।३४) यथा पर्वतो वह्निमान्धूमादित्यादौ धूमादिति शब्दः। (ख०)

**अन्वय्युदाहरणम्**[4]–(उदाहरणम्) [क] साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्तः। (गौ० १।१।३६) साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इति। .... तत्र यदुत्पद्यते तदुत्पत्तिधर्मकं तच्च भूत्वा न भवत्यात्मानं जहाति निरुध्यत इत्यनित्यम्। (वात्स्या० १।१।३६)

---

१ अन्वयनिरूपिता व्याप्तिरित्यर्थः। (ग० सामा०)

२ तल्लक्षणं चान्वयिहेतुत्वमेव। तच्च। [क] अनुमितिकारणभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वम्। [ख] अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम्। (चि० २)

३ उदाहरणसाधर्म्यमुदाहरणबोध्यान्वयव्याप्तिस्ततोन्वयी हेतुर्ज्ञातव्यः। (गौ० वृ० १।३४)

४ तल्लक्षणं चान्वय्युदाहरणत्वमेव। तच्च। [क] साध्यसाधनसंबन्धबोधजनकत्वम्। (चि० अव०) [ख] अन्वयव्याप्तिबोधकत्वम्। (दीधि० २) [ग] एतद्यो यो धूमवान्स सोग्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम्। (न्या० म०)

[ख] साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोवयवः । ( गौ०वृ०१।३५ )
[ग] प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यम् । (नील०) यथा पर्वतो वह्निमान्धूमादित्यादौ यो यो धूमवान्स स वह्निमानिति वाक्यम् । ( त०सं०२ )

**अन्वय्युपनयः**[1]–[क] उदाहरणापेक्षस्तथेत्युपसंहारः साध्यस्योपनयः । ( गौ० १।१।३८ ) उदाहरणापेक्ष उदाहरणतन्त्रः । साध्यसाधर्म्ययुक्त उदाहरणे स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टम् । तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते । ( वात्स्या० १।१।३८ )
[ख] तथेति साध्यस्योपसंहारः । यथा पर्वतो वह्निमान्धूमादित्यत्र वह्निव्याप्यधूमवानयमिति वाक्यम् । ( गौ०वृ०१।३७ )

**अनियताभिधानवादः**–शक्तिज्ञानाविषयस्य शाब्दबोधाविषयत्वनियम[2] इति वादः । ( कृष्ण०श० )

**अन्वीक्षा**–प्रत्यक्षागमाश्रितमनुमानम् । यथा आन्वीक्षिकी न्यायविद्येत्यादावन्वीक्षा । ( वात्स्या०१।१।१ )

**अपकर्षः**–१ विद्यमानधर्मापचयः । २ साध्यसाधनान्यतरस्याभावप्रसञ्जनम् । ( गौ०वृ०५।४ ) ३ गुरुनिष्ठजातिविशेषः । यथायमस्मादपकृष्ट इत्यादावपकर्षः । ( राम० )

**अपकर्षसमः**–( जातिः ) [क] साध्ये धर्माभावं दृष्टान्तात्प्रसञ्जयतोपकर्षसमः । लोष्टः खलु क्रियावानविभुर्दृष्टः काममात्मापि क्रियावानविभुरस्तु । विपर्यये वा विशेषो वक्तव्य इति । ( वात्स्या०५।१।४ )
[ख] पक्षदृष्टान्तान्यतरस्मिन्व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनम् । यथा शब्दोनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात्कृतकत्वादनित्यः शब्दस्तदा कृतत्वानित्यत्वसहच-

---

१ तल्लक्षणं चान्वय्युपनयत्वमेव । तच्च साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वम् । ( चि० अव० )

२ भट्टमते चेतरान्वितघटो घटपदशक्य इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम् । (गा० श० ) एवं च शाब्दबोधे संसर्गस्यापि पदशक्यत्वमङ्गीकुर्वन्ति ।

रितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । ( गौ० वृ० ५।४ )

[ ग ] परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् । यथा शब्दोनित्यः कृतकत्वाद्घटवदित्यादौ यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्तर्हि तेनैव शब्दो घटवदश्रावणः स्यादिति । ( नील० )

**अपक्षेपणम्**–( कर्म ) अधोदेशसंयोगहेतुः । ( त० सं० )

**अपगमः**–स्पन्दः । ( गा० हेतु० ) यथा वृक्षादपैतीत्यादौ धात्वर्थः । ( स्व० )

**अपचिकीर्षा**–( द्रोहः ) अहितेच्छा । ( गा० व्यु० ४ )

**अपदेशः**– १ कथनम् । ( गौ० वृ० ३ । ९४ ) २ हेतुः । ( वै० उ० ३।१।३ )

**अपरत्वम्**–( गुणः ) अपरव्यवहार[1]कारणम् । ( त० सं० ) यथायं कनिष्ठोयं समीप इत्यादौ कनिष्ठसमीपयोरपरत्वम् । ( वाक्य० ) तद्द्विविधम् । दिक्कृतम् । कालकृतम् । समीपस्थे दिक्कृतम्[2]अपरत्वम् । कनिष्ठे कालकृत[3]मपरत्वम् । ( त० सं० ) दिक्कृतमपरत्वं मूर्तमात्रवृत्ति भवति । कालकृतमपरत्वं तु जन्यद्रव्यमात्रवृत्ति भवति । ( सि० च० )

**अपरत्वम्**–अल्पदेशवृत्तित्वम् । ( मु० १ ) यथा घटत्वजातेर्द्रव्यत्वपृथिवीत्वेअपेक्ष्याल्पदेशवृत्तित्वम् । ( स्व० )

**अपवर्गः**–अस्यार्थो निःश्रेयसवदनुसंधेयः ।

**अपसिद्धान्तः**–( निग्रहस्थानम् ) [ क ] सिद्धान्तमभ्युपेत्यानियमात्कथाप्रस-

---

१ अपरव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वं लक्षणमित्यर्थः ।

२ अत्र दिक्कृतत्वं च ज्ञायमानदिग्जन्यत्वम् । ( वाक्य० ) अल्पतरमूर्तसंयोगविशिष्टशरीरज्ञानादपरत्वमुत्पद्यत इति । ( सि० च० ) यथा झळकीग्रामात्सोलापुरापेक्षया भीमानदी स्वसमवायिसंयुक्तसंयोगेनाल्पतरदेशसंयोगवतीति ज्ञानेन दैशिकमपरत्वमुत्पद्यते । अधिकं तु ( वै० उ० ७।२।२१ ) तत्र द्रष्टव्यम् ।

३ अत्र कालकृतत्वं च स्वसमवायिसंयुक्तसंयोगसंबन्धेन रविक्रियाप्रकारककालविषयकज्ञानजन्यत्वम् । ( वाक्य० ) अल्पतरदिवाकरक्रियाविशिष्टशरीरज्ञानादपरत्वोत्पत्तिरिति । ( सि० च० )

ङ्गः । ( गौ० ५।६६ ) कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययादनियमात्कथां प्रसञ्जयतोपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति न सतो विनाशो नासदात्मानं लभते नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति । एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनान्मृदान्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम् । तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते । तस्मात्समन्वयदर्शनात्सुखादिभिरेकप्रकृतीदं शरीरमिति । एवमुक्तवाननुयुज्यते । ( वात्स्या० ५।२।२४ )

[ ख ] कथायां स्वीकृतसिद्धान्तप्रच्यवः । तथा च सांख्यमते नाहं वदिष्यामीत्यभ्युपेत्यारब्धायां कथायामाविर्भावस्याविर्भावाभ्युपगमेनवस्थेति दूषणोद्धारायाविर्भावस्यासत उत्पत्तिं यद्यभ्युपैति तदापसिद्धान्तः । ( गौ० वृ० ५।६६ ) (त० भा०) (दि० १)

[ ग ] एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् । (नील०) सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्ते । (गौ० वृ० ५।६६ )

**अपह्नवः**—अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा । यथा कलिङ्गेषु दृष्टोसि नाहं कलिङ्गाञ्जगामेत्यादावत्यन्तापह्नवः[1] । ( गा० व्यु० ल० )

**अपादानत्वम्**[2]—[ क ] क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् । (गा० अव० )

[ ख ] स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । यथा वृक्षात्पर्णं पततीत्यादौ वृक्षादेरपादानता ।

[ ग ] क्वचित् अवधित्वम् । यथा वृक्षाद्विभजत इत्यादौ वृक्षादेरपादानता । ( गा० व्यु० ५ )

---

१ अत्र च कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकम् । तेन विना तदसंभवात् । अत्यन्तापह्नवः स्वरूपसन्नेव लिट्साधुतानियामकः । (गा० व्यु० ल०)

२ शाब्दिकमते त्रिविधमपादानम् । उपात्तविषयं निर्दिष्टविषयमपेक्षितक्रियं चेति ।

**अपानः**–( वायुः ) [ क ] गुदादीनामध उन्नयनादपानः । ( दि० )
[ ख ] मलादेरधो नयनादपानः । ( सि० च० )

**अपार्थकम्**–( निग्रहस्थानम् ) [ क ] पौर्वापर्यायोगादप्रतिसंबद्धार्थम् । ( गौ० ५।५३ ) यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसंबन्धार्थत्वं गृह्यते तत्समुदायोर्थस्यापायादपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः । अथ रौरुकमेतत्कुमार्याः पाय्यम् । तस्याः पिता अप्रतिशीन इति । ( वात्स्या० ५।२।१० )
[ ख ] अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदम् । ( गौ० वृ० ५।५३) ( दि० १ )
[ ग ] परस्परानन्वितार्थकपदसमूहः । यथा शब्दो घटः पटो नित्यमनित्यं च प्रमेयत्वादित्यादि । ( नील० )

**अपूर्वम्**–यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः । तं गुणविशेषमपूर्वमिति मीमांसका वदन्ति । प्रारब्धकर्मेति वेदान्तिनः । धर्माधर्माविति नैयायिकाः । अदृष्टमिति वैशेषिकाः । पुण्यपापे इति पौराणिकाश्चेति । अपूर्वं दर्शपूर्णमासयोर्द्विविधम् । परमापूर्वम् । कलि[1]कापूर्वम् । ( दि० गु० )

**अपूर्वविधिः**–अत्यन्ताप्राप्तौ विधिः । यथा स्वर्गकामो यजेते[2]त्यादौ । ( सि० च० )

**अपेक्षाबु[3]द्धिः**–[ क ] नानैकत्वसमूहालम्बनरूपा । ( वै० उ० ४।१।११ )
[ ख ] अनेकैकत्वबुद्धिः । ( भा० गु० ) यथायमेकोयमेक इत्याकारिका बुद्धिः । ( मु० गु० )

**अपोहः**–अतद्व्यावृत्तिः । यथा विज्ञानवादिमते नील[4]त्वादिर्धर्मोनीलव्यावृत्तिरूपः । ( दि० १ )

---

१ कालिकापूर्वमिति क्वचित्पाठः ।

२ अत्र यजनस्याप्राप्तत्वात् । ( सि० च० )

३ तल्लक्षणं च विनाशकविनाशप्रतियोगिबुद्धित्वम् । ( सर्व० औलु० ) द्वित्वादिकं त्वपेक्षाबुद्धिजन्यम् । ( वै० उ० ४।१।११ ) विस्तरस्तु । ( वै० उ० ७।२।८ ) तत्र द्रष्टव्यम् ।

४ तन्मतेयं धर्मोपारमार्थिक एवेति विज्ञेयम् ।

**अप्रतिपत्तिः**–( निग्रहस्थानम् ) [ क ] आरम्भविषये न प्रारम्भः । परेण स्थापितं वा न प्रतिषेधति । प्रतिषेधं वा नोद्धरति । ( वात्स्या० ५।२।६० )
[ ख ] प्रकृताज्ञानम् । ( गौ० वृ० १।५९ )

**अप्रतिभा**–( निग्रहस्थानम् ) [ क ] उत्तरस्याप्रतिपत्तिः । ( गौ० ५।२।१९ ) परपक्षप्रतिषेध उत्तरं तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति । ( वात्स्या० ५।२।१९ )
[ ख ] उत्तरार्हपरोक्तं बुध्वापि यत्रोत्तरसमय उत्तरं न प्रतिपद्यते तत्र । ( गौ० वृ० ५।६१ ) ( दि० १ )
[ ग ] उत्तरापरिस्फूर्तिः । ( त० भा० )
[ घ ] उत्तरार्हं परोक्तं बुध्वाप्युत्तरस्यास्फूर्तिवशात्तूष्णींभावः । ( नील० )

**अप्रधानकर्मत्वम्**–( कर्मत्वम् ) परंपरया धात्वर्थतावच्छेदकफलशालित्वम् । यथा गां दोग्धि पय इत्यादौ गवादेरप्रधानकर्मत्वम् । ( स्व० )

**अप्रमा**[1]–( बुद्धिः ) [क] तच्छून्ये तन्मतिः । (भा० प० गु० )
[ख] यत्र यन्नास्ति तत्र तस्य ज्ञानम् ।
[ग]तदभाववति तत्प्रकारकज्ञानम् । ( चि० १ )
[ घ ] प्रमाभिन्नानुभवः । यथा शुक्ताविदं रजतमिति ज्ञानम् । ( स्व० ) सा त्रिविधा । संशयः विपर्ययः । तर्कः । ( त० भा० ) ( त० सं० )

**अप्राप्तकालम्**–( निग्रहस्थानम् ) [ क ] अवयवविपर्यासवचनम् । ( गौ० ५। ५४ ) प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात्क्रमः । तत्रावयवविपर्यासेन वचनमप्राप्तकालमसंबन्धार्थकालं निग्रहस्थानमिति । ( वात्स्या० ५।२।११ )
[ ख ] समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानम् । ( गौ० वृ० ५।२४ ) ( दि० १ )

---

१ इयं च दोषाज्जन्यते । दोषास्तु पित्तमण्डूकवसाञ्जनादयः । ( मु० गु० )। अधिकं तु भ्रमशब्दव्याख्यानावसरे संपादयिष्यते ।

[ग] सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानम् । ( गौ० वृ० ५।५४ )

[घ] अवयवानां व्युत्क्रमेण कथनम् । यथा शब्दत्वाच्छब्दोनित्य इत्यादि । ( नील० ) ।

**अप्राप्तिसमः**–( जातिः ) [क] साध्यमप्राप्य वा हेतोरप्राप्त्यासाधकत्वाच्चाप्राप्तिसमः । ( गौ० ५।१।७ ) हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा । न तावत्प्राप्य । प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा । अप्राप्य साधकं न भवति । नाप्राप्तः प्रदीपः प्रकाशयतीति । अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः । (वात्स्या० ५।१।७ )

[ख] अप्राप्त्यासाधकत्वादनिष्टापादनम् । ( गौ० वृ० ५।७ )

यथात्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न । उभयोरविशेषादिति दोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम् । तथा चाप्राप्तविशेषत्वात्त सर्वः सर्वं साधयेदिति । अयमेव हेतुः साध्याभावं किमिति न साधयेदित्यत्र विनिगमकाभावादिति । ( नील० )

**अफलत्वम्**–मुख्यफलाजनकत्वम् । ( मू० म० १) यथा स्वर्गोद्देशेन कृतस्य चैत्यवन्दनादेरफलत्वम् । ( स्व० )

**अभावः**[1]–(पदार्थः) असमवायत्वे सत्यसमवायः । ( सर्व० औलु० ) स चतुर्विधः । प्रागभावः । प्रध्वंसः । अत्यन्ताभावः[2] । अन्योन्याभावः । ( त० सं० ) प्रकारान्तरेणाभावो द्विधा । संसर्गाभावः । अन्योन्याभावः । आद्यस्त्रिविधः । प्रागभावः । प्रध्वंसः । अत्यन्ताभावः । ( भा० प० १ ) द्वितीयस्त्वेकविध एवेति । ( स्व० )

---

१ *भावभिन्नः पदार्थ इत्यर्थः । अत्राभावलक्षणं च वक्ष्यमाणमभावत्वमेवेति ।

२ तत्र प्रागभावस्योत्तरावधिकत्वम् । प्रध्वंसस्य पूर्वावधिकत्वम् । अन्योन्याभावस्य प्रतियोगिसमानाधिकरणत्वम् । अत्यन्ताभावस्य तु त्रितयवैधर्म्यमतश्चतुर्थोयमभावः । ( वै० उ० ९।१।५)

---

* अत्र भावत्वं च द्रव्यादिषट्कान्यतमत्वम् ।

**अभावत्वम्**–[ क ] इदमिह नास्ति इदमिदं न भवतीत्यादिप्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेषः । ( दीधि० २ )

[ ख ] द्रव्यादिषट्कान्योन्याभाववत्त्वम् । ( मु० १ )

[ ग ] समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वाभावः । ( दि० १ )

[ घ ] भावभिन्नत्वम् । ( वाक्य० १ )

[ ङ ] प्रतियोगिज्ञानाधीनज्ञानविषयत्वम् । ( सि० च० )

[ च ] भावव्यावृत्तोऽखण्डो धर्मविशेष इति संप्रदायः । ( मू० म० १ ) ( सि० च० )

[ छ ] अनुयोगिताविशेषो वेति केचित् । ( दि०१ )

**अभिघातः**–( संयोगः ) यः संयोगः शब्दनिमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः ( वै० उ० ५।२।१ )

**अभिचारः**–साक्षान्मरणजनकव्यापारः[1] । ( दि० गु० ) यथा श्येनेनाभिचरन्यजेतेत्यादावभिचारः । ( स्व० )

**अभिधा**–संकेतवदस्यार्थोऽनुसंधेयः । ( दि०१ )

**अभिधेयत्वम्**[2]–[ क ] भगवदिच्छारूपशब्दशक्तिविषयत्वम् । ( न्या० म० २ ) ( गा० अवतर० )

[ ख ] शब्दशक्तिविषयत्वम् । ( त० प्र० २ ) ( दि० १ ) यथा घटपटादेः सर्वस्याभिधेयत्वम् । ( स्व० )

**अभिभवः**–१ [क] बलवत्सजातीयसंबन्धः । यथा सुवर्णरूपस्य पार्थिवरूपेणाभिभवः[3] । ( वै० उ० २।१।७ ) ( दि० १।२ )

[ ख ] बलवत्सजातीयग्रहणकृतमग्रहणम् । यथा सुवर्णगतरूपवृत्तिशुक्लत्व-

---

१ मन्त्रविशेषोच्चारणरूपव्यापारविशेष इत्यर्थः

२ इदं च केवलान्वयीति विज्ञेयम् ।

3 तदुक्तम् । भूसंसर्गवशाच्चान्यद्रूपं नैव प्रकाशते । ( वै० उ० २।१।७ )

स्याभिभवः । सुवर्णगतरूपस्याभिभव इत्येके । (वै० उ० ४।१।९)
२ पराजय इति काव्यज्ञा वदन्ति ।

**अभिमानः**—१ अपकारिण्यकिंचित्करस्यात्मनि द्वेषः । (गौ० वृ० ४।३)
२ भ्रम इति गुरुचरणाः प्राहुः ।

**अभिहितान्वयवादः**[1]—शाब्दबोधाविषयस्य शक्तिज्ञानाविषयत्वनियम इति वादः । (स्व० )

**अभीष्टत्वम्**—स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् । (मू० म० १) यथा सुखस्याभीष्टत्वम् । (स्व० )

**अभेदः**—तादात्म्यम् । तच्च स्ववृत्त्यसाधारणधर्मः[2] । (गा० व्यु० १) यथा नीलो घट इत्यादौ घटे तन्नीलत्वरूपं तादात्म्यम् । (स्व० )

**अभ्यासः**—१ [क] पुनः पुनः संशीलनम् । (सर्व० रामा० )
[ख] पौनःपुन्यम् । (गौ० वृ० ४।१०३)
[ग] संस्कारबाहुल्यम् ।
[घ] दृढतरसंस्कार इति केचित् । (गौ० वृ० ३।११३)
[ङ] एकप्रकारासकृदुक्तिरभ्यास इति वेदान्तिनः ।
२ विहितयोर्द्वयोः पूर्वोऽभ्यास इति शाब्दिका वदन्ति ।

**अभ्यासदशा**—विशेषदर्शनाधिकरणकालः । (स्व० )

**अभ्युपगमः**—निश्चयविशेषः । (मू० म० १) यथास्तु शब्दो द्रव्यमिति । (वात्स्या० १।१।३१)

**अभ्युपगमसिद्धान्तः**—(सिद्धान्तः) [क] अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणम् । (गौ० १।३१) यत्र किंचिदर्थजातमभ्युपगम्यते 'अस्तु द्रव्यं

---

१ इदं भट्टाचार्यमतम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तप्रत्ययः प्रकृत्यर्थोपरक्तां भावनामभिधत्त इति सिद्धे व्युत्पत्तिमभ्युपगच्छन्ति भट्टाचार्या इति विज्ञेयम् । (सर्व० जैमि० )

२ अत्रासाधारण्यं चैकमात्रवृत्तित्वम् । तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टं यत्तदन्यत्वम् । (गा० व्यु० १)

शब्दः' स तु नित्योऽथानित्य इति । द्रव्यस्य सतो नित्यतानित्यता वा तद्विशेषः परीक्ष्यते । सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति । ( वात्स्या० १।१।३१ )

[ ख ] साक्षादसूत्रिताभ्युपगमः । यथा मनस इन्द्रियत्वमिति । ( गौ० वृ० १।३२ )

**अमर्षः**—कृतापराधेसमर्थस्य द्वेषः । ( गौ० वृ० ४।३ )

**अमूर्तगुणत्वम्**[1]—[ क ] मूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम् ।

[ ख ] मूर्तत्वाभावव्याप्यतावच्छेदकपरिमाणावृत्तिजातिमत्त्वम् । ( दि० गु० )

**अयथार्थबुद्धिः**[2]—अर्थव्यभिचार्यप्रमाणजन्यं[3] ज्ञानम् । ( त० भा० ) यथा शुक्ताविदं[4] रजतमिति ज्ञानम् । ( स्व० ) अयथार्थज्ञानमेवाप्रसिद्धमिति मीमांसका वदन्ति । ( सि० च० )

**अयथार्थानुभवः**—अप्रमावदस्यार्थोऽनुसंधेयः ।

**अयुतसिद्धः**[5]—ययोर्द्वयोर्मध्य एकमविनश्यद[6]पराश्रितमेवावातिष्ठते तौ । यथावयवावयविनौ । गुणगुणिनौ । क्रियाक्रियावन्तौ । जातिव्यक्ती । विशेषनित्यद्रव्ये चेति । ( त० सं० )

---

१ अमूर्तगुणाश्च बुद्ध्यादयोऽष्टौ भावना शब्दश्चेति । ( भा० प० गु० )

२ अत्रायथार्थत्वं च [ क ] तदभाववति तत्प्रकारकत्वम् । [ ख ] *प्रकारव्यधिकरणविषयकत्वम् । ( चि० १ )

३ इदं च लक्षणं स्मृतिसाधारणमपि भवति ।

४ शुक्ताविदं रजतमिति ज्ञाने प्रसिद्धशुक्तिरजतत्वयोरलौकिक एव समवायो भासत इत्यसत्ख्यातिं वाचस्पतिमिश्रा भङ्गीचक्रुः । ( सि० च० )

५ लक्षणं चानुयोगित्वप्रतियोगित्वान्यतरसंबन्धेन समवायवत्त्वमिति । अधिकं च युतसिद्धिशब्दव्याख्यानावसरे संपादयिष्यते ।

६ नाशपर्यन्तमित्यर्थः । ( वाक्य० )

---

* स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तन्निरूपकत्वमित्यर्थः ।

**अर्थः**–१ अर्थ इति द्रव्यगुणकर्मसु । ( वै० ८।२।३ ) [क] एतेषां द्रव्यगुणकर्मणामर्थ्यमानत्वं तेन तेन विधिनोक्तम् । तेन तेषु त्रिषु वैशेषिकाणामर्थ इति परिभाषा । ( वै० उ० )

[ख] अर्थ इति शब्दो द्रव्यगुणकर्मसु वर्तते स च तत्र पारिभाषिकः । गौतमीये तु रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्थाः । ( वै० वि० ८।२।३ ) २ षट् पदार्थाः । यथा द्रव्यगुणकर्मसामान्यविशेषसमवायाः । ( त० भा० )

३ [ क ] यत्परः शब्दः सः[1] । ( चि० )

[ ख ] वृत्त्या पदप्रतिपाद्यः । ( गा० श० ) यथा घटशब्दस्यार्थः कम्बुग्रीवादिमान् । ( स्व० ) ४ प्रकारत्वम् । ( वाक्य० ) यथार्थबोधो[2] योग्यतेत्यादावर्थः प्रकारत्वम् । ५ यदाकाङ्क्षया यत्प्रवर्तते स तस्यार्थ इति मीमांसकाः । ( मू० म० १ ) ६ विधिजन्यबोधविषय इत्यपि मीमांसकाः । वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिविधोर्थ इत्यालंकारिका वदन्ति ।

**अर्थनिश्चयप्रसङ्गः**–तत्कार्यनिष्कम्पप्रवृत्त्यादिप्रसङ्गः । ( गा० बाध० )

**अर्थपुनरुक्तम्**[3]–( निग्रहस्थानम् ) [ क ] अर्थस्य पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । ( गौ०५।२।१४ ) समानार्थकभिन्नानुपूर्विकशब्दस्य निष्प्रयोजनं पुनरभिधानम् । यथा घटः कलश इति । ( गौ० वृ० ५।५७ ) यथा वा अनित्यः शब्दो निरोधधर्मको ध्वान इति । ( वात्स्या० ५।२।१४ )

[ ख ] अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् । ( गौ०५।५८ ) निदर्शनम् । उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति । तच्च पुन-

---

१ अयं च शब्दार्थ इत्युच्यते । ( चि० ४ ) ( गा० श० )

२ अत्र जलेन सिञ्चतीत्यादौ जलकरणकत्वरूपप्रकारत्वस्य सेचनक्रियायामबाध इति ।

३ एतस्य प्रमादादिना संभवः । ( गौ० वृ० ५।५८ )

रुक्तं वेदितव्यम् । अर्थसंप्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोर्थोर्थापत्त्येति । ( वात्स्या० ५।२।१६ )

[ ग ] यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानम् । यथा वह्निरुष्णः[1] । उष्णो वह्निरिति[2] । ( गौ० वृ० ५।५८ )

**अर्थवादः**[3]—[ क ] विधिभिन्नं वाक्यम् । (न्या० म०)

[ ख ] प्राशस्त्यनिन्दान्यतरपरं वाक्यम् । ( लौ० भा० ) यथा वायुर्वै[4] क्षेपिष्ठा देवतेत्यादिः । सोरोदीदित्यादिर्वा[5] । ( स्व० ) स चतुर्विधः । स्तुतिः । निन्दा । परकृतिः । पुराकल्पः । ( गौ० २।६४ ) प्रकारान्तरेण स त्रिविधः[6] । गुणवादः । अनुवादः । भूतार्थवादः । ( न्या० म० ४ ) प्रकारान्तरेणाप्यर्थवादो द्विविधः । विधिशेषः । निषेधशेषः । ( लौ० भा० )

**अर्थान्तरम्**—( निग्रहस्थानम् ) [ क ] प्रकृतादर्थादसंबद्धार्थम् । ( गौ० ५।५० ) यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात् । नित्यः शब्दोस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम् । पदं च नामाख्यातोपसर्गनिपाता इत्यादि । तदर्थान्तरं वेदितव्यम् । ( वात्स्या० ५।२।७ ) ( नील० )

[ ख ] प्रकृतानाकाङ्क्षिताभिधानम् । यथा शब्दोनित्यः कृतकत्वादित्युक्त्वा

---

१ पूर्वपदाक्षिप्तोक्तिरियम् । ( गौ० वृ० ५।५८ )

२ उत्तरपदाक्षिप्तोक्तिरियम् । ( गौ० वृ० ५।५८ )

3 अर्थस्य प्रयोजनस्य वादनम् । विध्यर्थप्रशंसापरं वचनमित्यर्थः । अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति । ( गौ० वृ० २।६३ ) निषिद्धार्थं शीघ्रं निवृत्तये निन्दति च ।

४ अत्र च वायव्यꣳश्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति । ( कृष्णयजुःसंहिता २। १। १ ) इत्यादौ वायुर्वै क्षेपिष्ठेत्याद्यर्थवादो हि वायव्यꣳश्वेतमालभेतेत्यादिविध्यर्थं 'श्वेतपशुकरणको यागः प्रशस्त' इति प्रशंसतीति विज्ञेयम् ।

५ सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् । ( कृष्णय० १।५।१ ) इति वाक्यं तु कृतावृत्विग्भ्यो रजतदाक्षिणादानं निन्दतीति बोध्यम् ।

६ विरोधे गुणवादः स्यादनुवादोवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति । ( न्या० म० ४ )

शब्दो गुणः स चाकाशस्येत्यादि । ( गौ० वृ० ५।५० ) ( त० भा० )

[ग] परोक्तदूषणोद्दिधीर्षया पूर्वोक्तप्रकृतानाकाङ्क्षिताभिधानम् । (दि० १)

**अर्थापत्तिः**–(अनुमानम्)१ [क] वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव । ( वात्स्या० २।२।२ )

[ख] अनुपपद्यमानार्थदर्शनात्तदुपपादकभूतार्थान्तरकल्पनम् । ( त० भा० ४ ) ( गौ० वृ० २।६९ )

[ग] व्यतिरेकव्याप्तिज्ञानम् । ( भा० प० गु० ) यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा दिवाभुञ्जानस्य पीनत्वं रात्रिभोजनं विनानुपपन्नमित्यनुपपत्तिज्ञानमर्थापत्तिर्भवति । (सि० च०) २ यत्राभिधीयमानेर्थे योन्योर्थः प्रसज्यते सोर्थापत्तिः । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति किमत्र प्रसज्यते सत्सु भवतीति केचिदाहुः । ( वात्स्या० २।२।१ ) अर्थापत्तिं[2] प्रमाणान्तरं मन्यन्ते केचन मीमांसकाः । अर्थापत्तिरनुमानान्तर्गतैव न तु प्रमाणान्तरमिति नैयायिकाः प्राहुः । अर्थापत्तिर्द्विविधः । दृष्टार्थापत्तिः । श्रुतार्थापत्तिः । यथा दिवा न भुङ्क्ते इत्यर्थे दृष्टे प्रत्यक्षतो ज्ञाते दृष्टार्थापत्तिः । दिवा न भुङ्क्ते इति शब्दादवगते श्रुतार्थापत्तिः । (नील०)

**अर्थापत्तिसमः**–(जातिः) [क] अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः । (गौ० ५।२१)अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदिति स्थापिते पक्षेर्थापत्त्या प्रतिपक्षं साधयतोर्थापत्तिसमः । यदि प्रयत्नानन्तरीयकत्वादानित्यसाधर्म्यादनित्यः शब्द इत्यर्थादापद्यते । नित्यसाधर्म्यान्नित्य इति । अस्ति चास्य नित्येन साधर्म्यमस्पर्शत्वमिति । ( वात्स्या० ५।१।२१ )

---

१ अर्थापत्त्यानया च देवदत्तो रात्रौ भुङ्क्ते इत्यनुभवो जायते । तद्यथा देवदत्तो रात्रिभोजी दिवाभुञ्जानत्वे सति पीनत्वादिति । ( सि० च० )

२ तथाहि । यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतम् । जीविनो गृहासत्त्वं च प्रत्यक्षादवगतम् । तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनानुपपन्नमिति बहिःसत्त्वं कल्प्यते । तदनुमानेन गतार्थत्वान्नेष्यते नैयायिकैः । तथाहि । यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतम् । तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासत इति । ( मु० ४ )

[ ख ] अर्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानम् । अर्थापत्तिर्युक्तेनानुक्तमाक्षिपति । यथा शब्दोनित्य इत्युक्तेर्थादापद्यतेन्यान्नित्यम् । ( गौ० वृ०५।२१ )

[ ग ] अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् । यथा शब्दोनित्यः कार्यत्वादित्यादौ शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि तदार्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि । एकतरावधारणे नियामकाभावादिति । ( नील० )

**अलौकिकत्वम्**—१ [ क ] लोकावगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताश्रयान्यत्वम् । ( मू० म०१ ) यथा दर्शपूर्णमासाभ्यां यजेतेत्यादौ दर्शपूर्णमासादेरलौकिकत्वम् । ( स्व० )

[ ख ] रागतोप्राप्तत्वमिति गुरुचरणाः प्राहुः । २ वेदबोधितेष्टसाधनताकत्वमिति मीमांसकाः । ( मू० म० १ )

**अलौकिकप्रत्यक्षम्**—अलौकिक[1]सन्निकर्षजन्यं प्रत्यक्षम् । यथा धूमत्वज्ञानानन्तरं सर्वे धूमा धूमत्ववन्त इति सकलधूमविषयकं प्रत्यक्षम् । ( स्व० )

**अवगाहनम्**—विषयिता । यथा घटवद्भूतलमिति ज्ञानं घटाद्यवगाहीत्यादौ । ( स्व० )

**अवच्छिन्नत्वम्**—१ व्यापकत्वम् । (मू०मं०१) यथा ह्रदे वह्निमत्ताबुद्धिनिरूपितप्रतिबन्धकताया ह्रदो न वह्निमानिति निश्चयीयविषयित्वावच्छिन्नत्वम् । (गा० सामा०) २ स्वरूपस[2]बन्धविशेषः । यथाग्रे वृक्षः कपिसंयोगी न मूल इत्यादौ कपिसंयोगस्याग्रावच्छिन्नत्वम् । यथा वा वह्निव्याप्यधूमवान्पर्वत इति परामर्शे धूमनिष्ठविषय[3]तयोरवच्छेद्यावच्छेदकभावः । (स्व०)

---

१ अत्र सन्निकर्षेलौकिकत्वं च । [क] सामान्यलक्षणज्ञानलक्षणयोगजान्यतमत्वम । [ख] विषयताविशेषो वा ।

२ किंचिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वम् । तच्चावच्छेद्यस्वरूपमेव ।

३ अत्रेदं बोध्यम् । मध्यवृत्तिविषयतयोर्भेदपक्षे पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमनिष्ठप्रकारत्वस्य व्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वस्य चावच्छेद्यावच्छेदकभावः स्वीकृत इति ।

३ इदमेतद्विशिष्टे एतत्प्रकारकमिति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । (मू० म० १) यथायं घट इति ज्ञाननिष्ठयोरिदंत्ववद्विशेष्यकत्वघटत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावः[1] । ४ विशिष्टत्वम् । यथा घटत्वावच्छिन्नो घट इत्यादौ घटस्य घटत्वावच्छिन्नत्वम् । ५ अनुकूलत्वम् । यथा फलावच्छिन्नव्यापारो धात्वर्थ इत्यादौ व्यापारस्य फलावच्छिन्नत्वम् । (स्व०) ६ सामानाधिकरण्यमिति केचित् । (मू०म० १)

**अवच्छेदकत्वम्**—१ स्वरूपसंबन्धविशेषः[2] । (मू० म० १) यथेह पर्वते नितम्बे हुताशनो न शिखर इत्यत्र नितम्बस्य हुताशनावच्छेदकत्वम् । यथा वेदानीं[3] चत्वरे गौर्नास्तीत्यादावेतत्कालस्य गवाभावावच्छेदकत्वम् । २ अवच्छेदकमिति प्रतीतिसाक्षिको विषयतापरपर्यायः स्वरूपसंबन्धविशेषः । यथा पर्वते वह्निसाधने पर्वतत्वस्य वह्निनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वम् । ३ स्वाश्रयजन्यत्वम्[4] । यथा धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यादौ फलस्य धात्वर्थतायामवच्छेदकत्वम् । (स्व०) ४ अनतिरिक्तवृत्तित्वम्[5] । (दीधि० सामा०) यथा ह्रदो न वह्निमानिति निश्चयीयविषयताया ह्रदो वह्निमानिति ज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वम् । ५ तदाधिकरणावृत्तित्वेन ज्ञायमान-

---

१ अत्रायं नियमः । ययोर्विषयितयोर्निरूप्यनिरूपकभावस्तयोरवच्छेद्यावच्छेदकभाव इति ।

२ अत्रेदं बोध्यम् । *व्यावर्तकत्वसामानाधिकरण्यस्वनिष्ठावच्छेद्यताकत्वैतत्त्रितयसंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम् । यथा दण्डो घटकारणमित्यादौ दण्डत्वस्य घटकारणतायामवच्छेदकत्वम् ।

३ अत्र चावच्छेद्याधिकरणसंबन्धिनोवच्छेद्याधिकरणस्यैवावच्छेदकत्वमिति † नियमोङ्गीकर्तव्यः ।

४ स्वं धात्वर्थता । अत्रेदं बोध्यम् । न्यायनये ग्रामं गच्छतीत्यादौ संयोगावच्छिन्नव्यापाररूपविशिष्टस्य धात्वर्थत्वात्स्वाश्रयव्यापारजन्यत्वरूपमवच्छेदकत्वं संयोगरूपफलस्य संगच्छत इति ।

५ [१] स्वव्यापकतत्कत्वमित्यर्थः । (गा० सामा०) [२] स्वव्यापकतत्कान्यत्वतत्सामानाधिकरण्योभयाभाववत्त्वम् । तेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं संगच्छते । (गा०२ स्वल०)

---

* अत्र च संबन्धकोटावितरभेदानुमितिजनकज्ञानविषयत्वात्मकव्यावर्तकतायामवच्छेदकस्तु परंपरासंबन्धो बोध्यः ।

† तेन प्रलयस्य गवावच्छेदकत्वापत्त्यसंभवः ।

त्वम् । ( वै० उ० ९।१।८ ) यथा घटत्वेन[1] पटो नास्तीत्यादौ घटत्वस्य पटनिष्ठप्रतियोगितावच्छेदकत्वम् । ६ भेदकत्वमिति केचिद्वदन्ति । ( स्व० ) अवच्छेद्यावच्छेदकभावो द्विविधः । स्वरूपसंबन्धरूपः । व्याप्यव्यापकभावः । आद्यो यथा । इदानीं[2] चत्वरे गौर्नास्तीत्यादावेतत्कालगवाभावयोरवच्छेद्यावच्छेकभावः । द्वितीयो यथा । पृथिवी रूपवतीत्यादौ रूपपृथिवीत्वयोरवच्छेद्यावच्छेदकभावः । ( गा० पक्ष० )

**अवच्छेद्यत्वम्**—अवच्छिन्नत्ववदस्यार्थोनुसंधेयः ।

**अवच्छेद्यावच्छेदकभावावगाहिनी[3]**— ( अनुमितिः ) [ क ] पक्षतावच्छे[4]दकाक्रान्तयावद्व्यक्तिविषयकानुमितिः ।

[ ख ] पक्षतावच्छेदकव्यापकत्व[5]विशिष्टसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितिः । यथा पर्वतो वह्निमानिति । ( गा० पक्ष० )

**अवधानम्**—चित्तस्य विलक्षणः संबन्धविशेषः । तद्द्विविधम् । अनुपेक्षणीयत्वम् । विषयान्तरसंचाराराहित्यम् । ( त० प्र० २ )

**अवधारणम्[6]**—तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् । ( गौ० वृ० १।४० ) यथा घटे घटत्वप्रकारकमयं घट इति ज्ञानम् । ( स्व० )

---

१ अत्रायं नियमः । तृतीयान्तोल्लेख्यस्यावच्छेदकत्वमिति ।

२ अत्र स्वरूपसंबन्धरूपमवच्छेदकत्वं च देशकालयोरेवेति नियमः ।

३ अत्रेदमवधेयम् । यत्र देशकालयोः पक्षतावच्छेदकता । यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादावुत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यादौ च तत्र स्वरूपसंबन्धरूपावच्छेदकत्वावगाहिन्येवानुमितिर्भवति । यत्र तु देशकालभिन्नानां पक्षतावच्छेदकता । यथा पर्वतो वह्निमानित्यादौ पृथिवी रूपवतीत्यादौ वा तत्र व्याप्यव्यापकत्वरूपावच्छेद्यावच्छेदकत्वावगाहिन्यनुमितिर्भवतीति ।

४ इदं प्राचीनमतानुसारेण ।

५ इदं नवीनमतम् । तन्मते पक्षतावच्छेदकव्यापकत्वं साध्ये साध्यसंबन्धे वा भासत इति बोध्यम् ।

६ अत्रावधारणत्वं च [ क ] निश्चयनिष्ठो विषयताविशेषः । (मू० म० १) [ ख ] उत्कटनिश्चयत्वम् । औत्कट्यं च विषयताविशेष इति मिश्राः* । ( गा० सत्प्र० )

---

* तन्मते विशेषदर्शनजन्यज्ञान एवावधारणत्वं स्वीक्रियत इति विज्ञेयम् ।

**अवधित्वम्**–[ क ] संबन्धविशेषः । ( दीधि० २ )

[ ख ] स्वरूपसंबन्धविशेषः । यथा वृक्षाद्विभजत इत्यादौ पञ्चम्यर्थः । ( गा० व्यु० ५ )

**अवधिमत्त्वम्**–संबन्धविशेषः । ( दीधि० २ ) । ( गा० व्यु० ५ ) यथा वृक्षात्पर्णं पततीत्यादौ विभागेवधिमत्त्वं संबन्धः । ( गा० व्यु० ५ )

**अवयवः**–( द्रव्यावयवः ) द्रव्यसमवायिकारणम् । ( त० दी० ४ ) यथा कपालं घटस्यावयवः । ( स्व० ) स चावयवः परमाणूनारभ्य कपालपर्यन्तमनेकधा ।

**अवयवः**[1]–( न्यायावयवः ) [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । ( वात्स्या० १।१।१ )

[ ख ] परार्थानुमानवाक्यैकदेशः । ( सर्व० अक्ष० ) यथा प्रतिज्ञादिवाक्यं न्यायावयवः । ( स्व० ) ते चावयवाः पञ्च । प्रतिज्ञा । हेतुः । उदाहरणम् । उपनयः । निगमनम् । ( गौ० १।१।३२ ) ( त० भा० ) ( त० सं० )

**अवयवत्वम्**–( न्यायावयवत्वम् ) [ क ] अनुमानवाक्यैकदेशत्वम् । ( वात्स्या० १।१।३२ )

[ ख ] प्रतिज्ञादिपञ्चकान्यतमत्वम् । ( गौ० वृ० १।३२ ) ( न्या० म० २ ) ( न्या० वो० )

[ ग ] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम् । ( चि० अव० )

[ घ ] न्यायान्तर्गतत्वे[2] सति प्रतिज्ञाद्यन्यतमत्वम्[3] ।

---

१ तल्लक्षणं च वक्ष्यमाणमवयवत्वमेव ।

२ न्यायान्तर्गतत्वं च [ क ] स्वाविषयकप्रतीत्यविषयन्यायकत्वम् । [ ख ] न्यायत्वाश्रयत्वं वा । [ ग ] प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपञ्चकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वम् । [ घ ] तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयिताकत्वम् । ( गा० अव० )

३ प्रतिज्ञाद्यन्यतमत्वं च प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यः प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकीभूतो धर्मस्तद्वत्त्वम् । ( गा० अव० )

[ ङ ] प्रतिज्ञाद्यघटकत्वे[1] सत्युभयघटकभागद्वयाघटितत्वम् ।

[ च ] प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकत्वमित्यपि केचित् । ( दीधि० अव० )

**अवयवित्वम्**—द्रव्यसमवायिकारणजन्यत्वम् । ( त० दी० ४ ) यथा घटपटादेर्जन्यद्रव्यस्यावयवित्वम् । ( स्व० )

**अवर्ण्यसमः**—( जातिः ) [ क ] ख्यापनीयौ वर्ण्यौ विपर्ययादवर्ण्यः[2] । तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्य तौ वर्ण्यावर्ण्यसमौ भवतः । ( वात्स्या० ५।१।४ )

[ ख ] पक्षेसंदिग्धसाध्यकत्वापादनम् । ( गौ० वृ० ५।४ )

[ ग ] साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतया साधनम् । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम् । तथा च तुल्यतया यथा सिद्धेन क्रियाहेतुगुणेनात्मनि क्रियावत्त्वं साध्यते तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते नियामकाभावादिति । ( नील० )

**अवश्यक्लृप्तत्वम्**—लघूपस्थितिकत्वम् । यथा गन्धप्रागभावस्य गन्धं प्रति जनकत्वे रूपप्रागभावमपेक्ष्यावश्यक्लृप्तत्वम् । ( स्व० )

**अवसरः**—( संगतिः ) अनन्तरवक्तव्यत्वम् । यथा प्रत्यक्षनिरूपणान्तरं तत्कार्यत्वेनानुमानोपमानयोरुभयोर्निरूपणप्राप्तौ बहुवादिसंमतत्वेन प्रथममनुमान एव जिज्ञासोदयेनुमाननिरूपणेन प्रतिबन्धकजिज्ञासानिवृत्ताववसरसंगत्योपमाननिरूपणम् । ( राम० )

**अवाची**—दक्षिणवदस्यार्थोनुसंधेयः ।

**अवान्तरप्रलयः**—खण्डप्रलयवदस्यार्थोनुसंधेयः । ( त० दी० १ )

---

१ प्रतिज्ञाद्यघटकत्वं च मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नधर्मवत्त्वम् । ( गा० अव० )

२ अवर्ण्यत्वं संदिग्धसाध्यकत्वाभावः । ( गौ० वृ० ५।४ )

**अविज्ञातार्थम्**–( निग्रहस्थानम् ) [ क ] परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातम् । ( गौ० ५।५२ ) यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन । तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति । ( वात्स्या० ५।२।९ ) ( नील० )

[ ख ] अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगः । ( गौ० वृ० ५।५२ ) ( दि० ९ )

**अविशेषसमः**–( जातिः ) [ क ] एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः । (गौ० ५।२३) एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते । कथम् । सद्भावोपपत्तेः । एको धर्मः सद्भावः सर्वस्योपपद्यते । सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात्प्रत्यवस्थानमविशेषसमः । (वात्स्या० ५।१।२३ )

[ ख ] सन्मात्रवृत्तिधर्मेणाविशेषापादनम् । ( गौ० वृ० ५।२३ )

[ ग ] सर्वाविशेषोद्भावनम् । यथा शब्दोऽनित्यः कृतकत्वादित्यादौ कृतकत्वादिनानित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वं यदि तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात् । मदुक्तसाधर्म्येण तत्सिध्यति न तु त्वदुक्तेनेत्यत्र विनिगमकाभावादिति । ( नील० )

**अव्यवहितपूर्वत्वम्**–[ क ] तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्[१] । ( दीधि० पक्ष० )

[ ख ] तत्प्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति तत्प्रागभाववत्त्वम् । ( गा० पक्ष० ) यथा विशेषणज्ञानस्य विशिष्टज्ञानाव्यवहितपूर्वत्वम् । (स्व० )

---

१ तदुत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगिकालवृत्तिध्वंसाप्रतियोगित्वमित्यर्थः । इदं च प्रागभावानभ्युपगन्तृनये विज्ञेयम् । ( गा० पक्ष० )

**अव्यवहितोत्तरत्वम्**[1]—स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । यथा विशिष्टज्ञानस्य विशेषणज्ञानाव्यवहितोत्तरत्वम् । ( स्व० )

**अव्यापकविषयिताशून्यत्वम्**[2]—यद्रूपाव[3]च्छिन्नविषयितात्वं विशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वम् । यथा ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ध्रदरूपबाधविषयकस्य ह्रदो न वह्निमानिति निश्चयस्य जातित्वाद्यवच्छिन्नविषयिताशून्यत्वम् । ( गा० सामा० )

**अव्याप्तिः**—( लक्षणदोषः ) १ [ क ] लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । ( न्या० बो० )
[ ख ] लक्ष्यैकदेशा[4]वृत्तित्वम् । यथा गोर्लक्षणस्य कपिलत्वस्याव्याप्तिः । ( त० दी० १ ) २ भागासिद्धि[5]त्वम् । यथा गोर्लक्षणस्य शबलत्वस्य भागासिद्धिः । ( त० भा० )

**अव्याप्यवृत्तिगुणत्वम्**[6]—अव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वम् । ( दि० गु० )

**अव्याप्यवृत्तित्वम्**—स्वात्यन्ता[7]भावसमानाधिकरणत्वम् । ( त० दी० १ ) ( मू०

---

१ इदं च ज्ञानाद्युत्पत्तिद्वितीयक्षणसाधारणम् । तृतीयक्षणसाधारणं तु ज्ञानादेस्तृतीयक्षणे विनाशेन स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं ज्ञानाद्यव्यवहितोत्तरत्वं निर्वचनीयम् ।

२ इदं च निश्चयविशेषणं गादाधर्यां हेत्वाभाससामान्यनिरुक्तौ द्वितीयलक्षणे व्युपयुज्यते ।

३ स्वभिन्नत्वस्वनिरूपितसंसर्गतान्यविषयतानिरूपितत्वोभयसंबन्धेन यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयतानिरूपितविषयिताशून्यत्वमित्यर्थ इति गुरुचरणाः प्राहुः ।

४ लक्षणतावच्छेदकत्वाभिमतसंबन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थः । ( नील० )

५ इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेण ।

६ अव्याप्यवृत्तिगुणाश्च बुद्ध्यादयोऽष्टौ शब्दो भावना संयोगो विभागश्चेति । एते गुणा प्रादेशिकगुणा इत्यपि व्यवह्रियन्त इति विज्ञेयम् । ( भा० प० गु० )

७ स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसंबन्धेनाभाववत्त्वमिति निष्कर्षः । ( नील० )

म० ) ( गा० ) यथा वृक्षे कपिसंयोगतदत्यन्ताभावयोरव्याप्यवृत्तित्वम् । ( स्व० )

**अशिष्टः**—१ यो यदा वेदनिषिद्धकर्ता[1] स तदाशिष्टः । ( चि० ) यथा यवनादिरशिष्टः । २ समग्र इति काव्यज्ञा वदन्ति । ( स्व० )

**असंबन्धः**—१ असमवेतत्वम् । (नील०) यथाभावस्यासंबन्धः[2] । (स्व०) २ परस्परावच्छेद्यावच्छेदकभावापन्नविषयितानिरूपकत्वशून्यत्वम्[3] । (गा० अव०) यथा सुन्दरः पुरुषो दण्डीति वाक्यजन्यशाब्दबोधे पुरुषांशे दण्डसौन्दर्ययोर्विशेषणतया युगपद्भानस्वीकारेसंबन्धः । (स्व०)

**असंभवः**—(लक्षणदोषः) १ [ क ] लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् । (न्या० बो०)
[ ख ] लक्ष्यमात्रावर्तनम् । (त० दी० १) यथा गोरेकशफत्वरूपलक्षणस्यासंभवः । (स्व०) २ स्वरूपासिद्धिः[4] । यथा गोर्लक्षणस्यैकशफत्वस्येति । (त० भा०)

**असंसर्गाग्रहः**—बाधाभावः । (स्व०) ।

**असत्**—१ तत्कालीनध्वंसस्वजनकाभावान्यतरप्रतियोगि । यथा घटपटादि कार्यं स्वस्वोत्पत्तेः प्रागसत् । ( वै० उ० ९।१।१ ) २ यत्कालसामान्यासंबन्धि तत् । यथा शशशृङ्गकूर्मरोमादि । ( स्व० )

**असदर्थविषयकत्वम्**—विशेष्यावृत्तिप्रकारकत्वम् । यथा शुक्ताविदं रजतमिति ज्ञानस्यासदर्थविषयकत्वम् । ( स्व० )

**असमर्थविशेषणः**—( स्वरूपासिद्धः ) यद्धेतुघटकं यद्विशेषणं साध्यसाधनाप्र-

---

१ प्रतियोगित्वानुयोगित्वान्यतरसंबन्धेन समवायाभाव इत्यर्थः । ( दि० १ )

२ अयं चाभावत्वादेर्जातित्वे बाधक इति बोध्यम् ।

३ अयं चैकवाक्यत्वविघटको 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति जैमिनिसूत्रघटकासंबन्धपदार्थ इति विज्ञेयम् ।

४ इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेणेति विज्ञेयम् ।

योजकं तद्विशेषणविशिष्टः स हेतुः । ( ख० ) यथा शब्दो नित्यो गुण-[1]त्वे सत्यकारणत्वादिति । ( त० भा० )

**असमर्थविशेष्यः**—( स्वरूपासिद्धः ) यद्धेतुघटकं यद्विशेष्यं साध्यसाधनाप्रयोजकं तद्विशेष्यघटितः स हेतुः । (ख० ) यथा शब्दो नित्योकारणत्वे सति गुणत्वादिति[2] । ( त० भा० )

**असमवायिकारणम्**[3]—(कारणम् ) [क] कार्यैकार्थ[4]कारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नं[5] यत्तत् । (मु० १)

[ख] कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणं यत्तत् । यथा तन्तुसंयोगः पटस्यासमवायिकारणम् । तन्तुरूपं च पटगतरूपस्य । ( त० सं० ) अत्रासमवायिकारणता[6] द्विविधा । कार्यैकार्थसमवायात् । कारणैकार्थसमवायात् । प्रथमा[7] यथा । आत्ममनःसंयोगस्य ज्ञानादिकं प्रति कारणता । द्वितीया[8] यथा । तन्तुरूपाणां पटरूपं प्रति । ( वै० उ० २।१।२२ ) (५।२।२४ ) ( त० भा० )

---

१ अत्र च गुणत्वविशिष्टमकारणत्वं हेतुः । तत्र गुणत्वं तु न साध्यसाधने प्रयोजकमिति विज्ञेयम् ।

२ अत्र चाकारणत्वविशिष्टं गुणत्वं हेतुः । तत्र तु गुणत्वं न प्रकृतसाध्यसाधने प्रयोजकमिति विज्ञेयम् ।

३ तल्लक्षणं च समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्ना कारणता तदाश्रयत्वम् । ( न्या० बो० ) ( वाक्य० ) ( दि० १ ) ( वै० उ० १०।२।३ ) ( वै० वि० ५।२।२४ )

४ कार्यैकार्थप्रत्यासत्तिरत्र [ क ] समवायसंबन्धेन कार्यसामानाधिकरण्यम् । ( सि० च० ) [ख] समवायसंबन्धः । ( ख० )
कारणैकार्थप्रत्यासत्तिश्चात्र [ क ] स्वसमवायिसमवायसंबन्धेन कार्यसामानाधिकरण्यम् ( सि० च० ) [ ख ] स्वसमवायिसमवायः ।

५ अत्रायं सिद्धान्तः । आत्मविशेषगुणानां कुत्राप्यसमवायिकारणत्वं नास्तीति ।

६ इयं च गुणकर्ममात्रवृत्तिः । ( भा० प० )

७ इयं च लघ्वीति संज्ञां लभते । लघुप्रतिपत्तिकत्वात् । ( वै० उ० २।१।२२ )

८ इयं च महतीति संज्ञां लभते । गुरुप्रतिपत्तिकत्वात् । ( वै० उ० २।१। २२ )

**असाधारणः**[1]–(हेत्वाभासः) [क] सपक्षविपक्षव्यावृत्तो[2] हेतुः । (गौ० वृ० १।४५) (भा० प० २) (त० सं०)

[ख] साध्यासमानाधिकरणो[3] हेतुः । यथा शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वम् । (मु०)

**असाधारणकारणत्वम्**[4]–[क] कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । (त० प्र०) (वाक्य०)

[ख] कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् (न्या० बो०) यथा घटत्वावच्छिन्नं प्रति दण्डस्यासाधारणकारणत्वम् । (स्व०)

**असाधारणत्वम्**[5]–(हेतुदोषः) [क] सर्वसपक्षव्यावृत्तत्वम्[6] । (चि० सव्य०) (दीधि०) (नील०)

[ख] ज्ञाननिष्ठप्रकृतसाध्यविरोध्युन्नायकतानातिरिक्तवृत्तिः प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितयादृशविशिष्टविषयता तादृशविशिष्टवत्प्रकृतहेतुत्वम् । (गा० असा०)

---

१ स चानैकान्तिकप्रभेद इति ज्ञेयम् । लक्षणं तु वक्ष्यमाणमसाधरणत्वमेव ।

२ इदं लक्षणं च प्राचीनमतानुसारेणेति विज्ञेयम् ।
अत्र च साध्यसंदेहाद्व्याप्तिग्रहो न भवतीत्याशयः । (गौ० वृ० १।४५)

३ इदं च नवीनमतानुसारेण । प्राचीनमते त्वयं हेतुर्विरुद्ध एवेति मन्तव्यम् । एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् । (गौ० वृ १।४५)

४ अत्रेदं बोध्यम् । कार्यमात्रं प्रति कारणं कालादीत्येव व्यवहारात्कालादीनां साधारणकारणत्वम् । दण्डादिकं तु कार्यमात्रं प्रति कारणमिति न व्यवहारोपि तु घटादिकं प्रति कारणं दण्डादीत्येव व्यवहाराद्दण्डादीनामसाधारणकारणत्वमिति ।

५ तच्चासाधारणानैकान्तिकहेत्वाभासनिष्ठो दोष इति विज्ञेयम् ।

६ विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयितया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकं रूपमिति निष्कर्षः । (दीधि० २)

[ ग ] प्रकृत[1]हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्व[2]म् । (गा० सामा०) यथा शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वस्यासाधारणत्वम् । (न्या० म०)

**असाधा[3]रणधर्मः**—लक्ष्यतावच्छेदकसमनियतो धर्मः । (त० दी०) यथा गोर्लक्षणं हि सास्नादिमत्त्वमसाधारणधर्मः । (स्व०) स द्विविधः । व्यावर्तकः । अव्यावर्तकः । आद्यो गोः सास्नादिमत्त्वम् । द्वितीयं सप्तपदार्थानामभिधेयत्वम् । (सि० च०)

**असाधारण्यम्**—असाधारणत्ववदस्यार्थोऽनुसंधेयः । (स्व०)

**असाधुत्वम्**—महाजनपरिगृहीतव्याकरणस्मृतिनिषिद्धत्वम् । (चि० ४) यथार्चीक्रमतेत्यादिप्रयोगस्य स्वर्णस्तेयादेश्चासाधुत्वम् । (स्व०)

**असा[4]मर्थ्यम्**—वृत्त्य[5]घटकपदार्थान्वितस्वार्थबोधकत्वे सति वृत्तिजन्यबोधीयप्रकारताश्रयबोधकत्वम् । यथा ऋद्धस्य राजमा[6]तङ्ग इत्यादौ राजपदस्यासामर्थ्यम् । (गा० व्यु० १)

**अ[7]सिद्धः**—( हेत्वाभासः ) यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति सोऽसिद्धः । ( वै० वि० ३।१।१५) यथा घटो द्रव्यं श्रावणत्वादित्यादौ श्रावणत्वादिर्हेतुः ।

---

१ इदमेव सपक्षव्यावृत्तत्वं गायन्ति । ( न्या० म० २ )

२ इदं च मणिकृन्मताभिप्रायेण । दीधितिकृन्मते त्वयं विरोध एव । मणिकृन्मते विरोधस्तु साध्यासामानाधिकरण्यमेवेति सूक्ष्मतरमेतद्विज्ञेयम् ।

३ अत्र धर्मेऽसाधारणत्वं च [ क ] तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम् ( त० प्र० १ ) [ ख ] लक्ष्यतावच्छेदकसमनियतत्वम् ( त० दी० )

४ इदमेव सापेक्षत्वमित्युच्यते समासासाधुत्वप्रयोजकं चेति ।

५ वृत्त्यघटकपदार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या वृत्तिजन्यबोधीयप्रकारता तदाश्रयबोधजनकत्वमित्यर्थः ।

वृत्तिशब्देनात्र वैयाकरणसंमताः कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तयो गृह्यन्ते ।

६ अत्र ऋद्धपदार्थस्य राजपदार्थेऽन्वयो न संभवति सामर्थ्याभावात् । तत्तदर्थविशेष्यकान्वयबोधं प्रति तत्तत्सामर्थ्यस्य प्रयोजकत्वात् । 'समर्थः पदविधिः' इति सूत्रव्याख्यानावसरे तथैवोक्तत्वादिति । एवं च राजमातङ्ग इति समासोऽसाधुरेव । राजपदस्य सापेक्षत्वादिति ।

७ अयं साध्यसम इत्युच्यते । ( गौ० १।२।४८ ) लक्षणं तु वक्ष्यमाणासिद्धिमत्त्वमेव ।

(स्व०) असिद्धस्त्रिविधः । आश्रयासिद्धः । स्वरूपासिद्धः । व्याप्यत्वासिद्धः । (त० सं०)

**असिद्धिः**[1]—१ (हेतुदोषः) [क] आश्रयासिद्ध्याद्यन्यतमा[2] । (मु० २) (गौ० वृ० १।४८) यथा काञ्चनमयह्रदः काञ्चनमयवह्निमान्काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्ध्रदादिः । (स्व०)

[ख] व्यभिचाराद्यन्यपरामर्शप्रतिबन्धकतावच्छेदकधर्मवत्त्वम् । (न्या० म० २)

[ग] विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहविरोधिज्ञानभिन्नवृत्ति यद्व्याप्तिग्रहविरोधितावच्छेदकं यच्च विशिष्टपक्षज्ञानत्वस्य विशिष्टसाध्यज्ञानत्वस्य विशिष्टसाधनज्ञानत्वस्य चाव्यापकं व्याप्तिग्रहविरोधितावच्छेदकं तदुभयशून्यस्य, तादृशग्रहविरोधिज्ञानभिन्नवृत्तित्वे सति तादृशामव्यापकं यद्व्याप्तिग्रहविरोधितावच्छेदकं तच्छून्यस्य वा ज्ञानस्य विषयितया परामर्शविरोधितावच्छेदकं रूपम् । (दीधि० २)

[घ] पक्षधर्मताज्ञानाभावः ।

[ङ] व्याप्तस्य पक्षधर्मतया प्रमितिः सिद्धिस्तदभावोसिद्धिरित्युदयनाचार्याः । (गा० बाध०) सा त्रिविधा । आश्रयासिद्धिः । स्वरूपासिद्धिः । व्याप्यत्वासिद्धिः । (गौ० वृ० १।४८) (वै० वि० ३।१।१५)

**असूया**—[क] गुणिनि दोषाविष्करणम् । (गा० व्यु० ४) यथा शत्रवेसूयतीत्यादौ धात्वर्थः । (स्व०)

[ख] परगुणादौ द्वेषः । (गौ० वृ० ४।३)

**अस्तित्वम्**—कालसंबन्धित्वम् । (दि० १) यथा घटोस्तीत्यादौ घटादेरस्तित्वम् । (स्व०)

**अस्मद्**—अहंशब्दवदस्यार्थोनुसंधेयः ।

---

१ यत्र यासिद्धिस्तत्र तद्व्याप्योप्यासिद्धिरेव । (वै० वि० ३।१।१५)

२ आश्रयासिद्धिः स्वरूपासिद्धिर्व्याप्यत्वासिद्धिश्चैतेषामन्यतमेत्यर्थः ।

**अहंकारः**—अहमित्यभिमानः । स च शरीरादिविषयको मिथ्याज्ञानमुच्यते । (गौ० वृ० ४।६८)

**अहः**—संपूर्णादित्यमण्डलदर्शनयोग्यः कालः । (वै० उ०)

**अहम्**—[क] तत्कालीनस्वातन्त्र्योच्चारयितृचैत्रत्वादिविशिष्टः । (दि० ४)
[ख] स्वोच्चारणकर्तृतावच्छेदकधर्मावच्छिन्नः । (गा० श०) यथाहं करोमीत्यादावस्मदर्थः । (स्व०)

**अहेतुसमः**[1]—(जातिः) [क] त्रैकाल्यासिद्धेर्हेतोरहेतुसमः । (गौ० ५।१८) हेतुः साधनम् । तत्साध्यात्पूर्वं पश्चात्सह वा भवेत् । यदि पूर्वं साधनम् । असति साध्ये कस्य साधनम् । अथ पश्चात् । असति साधने कस्येदं साध्यम् । अथ युगपत्साध्यसाधने । द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुना न विशिष्यते । अहेतुना साधर्म्यात्प्रत्यवस्थानमहेतुसमः । (वात्स्या० ५।१।१८) (नील०)
[ख] कालसंबन्धखण्डनेनाहेतुतया प्रत्यवस्थानम् । (गौ० वृ० ५।१८)
[ग] कालत्रयेपि हेतुत्वासंभवेनाहेतुत्वकथनम् । (नील०)

## आ.

**आकस्मिकम्**—यत्किंचित्कारणानियम्यम् । (राम०) यथा ममागमनमाकस्मिकं संजातमित्यादौ । (स्व०)

**आकाङ्क्षा**[2]—१ [क] अभिधानापर्यवसानम्[3] । (चि०)
[ख] पदार्थसंसर्गावगमप्रागभावः । (कु० ३)
[ग] स्वरूपयोग्यत्वे सत्यजनितान्वयबोधकत्वम् । (तर्का० ४)
[घ] प्रकृतान्वयबोधसमानाकारस्वजन्यान्वयबोधविरहः ।

---

१ हेतुसमेति पाठे तु कालत्रयेपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः । (नील०)
२ इयं च शाब्दबोधे प्रयोजिका ।
३ यस्य येन विना न तदर्थानुभावकत्वं तस्य तदपर्यवसानम् । (चि०)

[ ङ ] यत्पदं यत्पदेन सह यादृशानुभवजनकं तत्पदस्य तत्पदसमभिव्याहारः । ( न्या० म० ४ )

[ च ] पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् । ( त० सं० ४ ) ( कु० ) ( मु० ) यथा घटमानयेत्यादौ क्रियापदकारकपदयोराकाङ्क्षा । ( मु० )

[ छ ] पदजन्यपदार्थोपस्थितिरिति नव्याः ।

[ ज ] एकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छेति शाब्दिका वदन्ति । २ इच्छेति काव्यज्ञाः । आकाङ्क्षा द्विविधा । उत्थाप्याकाङ्क्षा । उत्थिताकाङ्क्षा । ( स्व० )

**आकारः**—१ निरूप्यनिरूपकभावापन्नतत्तद्विषयता । यथायं घट इत्याकारकं ज्ञानमित्यादौ । ( स्व० ) २ वर्णविशेष इति शाब्दिकाः । ३ स्वरूपमिति काव्यज्ञा वदन्ति ।

**आकाशम्**[2]—( द्रव्यम् ) [ क ] संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणम् । ( सर्व० औलु० )

[ ख ] शब्दलिङ्गकम् । ( त० भा० )

[ ग ] शब्दगुणकम् । तच्चैकं व्यापकं[3] नित्यं च । ( त० सं० ) ( त० भा० ) आकाशे षड्गुणास्तिष्ठन्ति । संख्यादिपञ्चकं शब्दश्च । ( भा० प० ) ( त० भा० )

---

१ [ क ] अव्यवहितोत्तरत्वादिसंबन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो हि यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा । ( न्या० बो० ) [ ख ] यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वमित्यर्थः । ( नील० ) ( मु० )

२ लक्षणं चाकाशत्वमेव । तच्च शब्दसमवायिकारणत्वम् । ( मु० १ ) आकाशसत्त्वे प्रमाणमनुमानम् । तच्च । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यानाश्रितत्वे सति समवायिकारणवत्त्वाद्यन्नैवं तन्नैवं यथा रूपमिति । ( सि० च० )

आकाशस्येन्द्रियं श्रोत्रम् । ( भा० प० १ )

३ अत्र व्यापकत्वं च परममहत्परिमाणयोगः । ( वै० उ० ७ । १ । २२ )

**आकुञ्चनम्**[1]–(कर्म) शरीरसंनिकृष्टसंयोगहेतुः। (त० सं० ४)

**आकृतिः**–[क] जातिलिङ्गाख्या। (गौ० २।२।७०) यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विन्द्यात्। सा च नाना सत्त्वानां तदवयवानां च नियताद्व्यूहादिति। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गं शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। (वात्स्या० २।२।७०)

[ख] अवयवसंस्थानविशेषः। (दि० ४) यथा घटस्य कम्बुग्रीवादिराकृतिः। (गौ० वृ० २।१२४)

[ग] रूपक्रियादिविशिष्टमवयवसंस्थानं जातिलिङ्गमेवाकृतिरिति शाब्दिका वदन्ति।

**आक्षेपः**[2]–१ अर्थापत्तिवदस्यार्थानुसंधेयः। (न्या० म० ४) (नील०) २ समानवित्तिवेद्यत्वमाक्षेप इति गुरवः। (न्या० म० ४) ३ आक्षेपश्चानुमानमर्थापत्तिर्वेति भट्टाः। (गा० श०)

**आख्यातम्**[3]–(तिङ्प्रत्ययः) १ कृतिराख्यातार्थः। यथा चैत्रस्तण्डुलं पचतीत्यादौ तिबर्थः। २ अनुकूलव्यापारमात्रमिति मीमांसकाः। ३ कालः। ४ संख्या चेति मणिकृत्। (न्या० म० ४) ५ उत्पादना। सा चोत्पादकतेति रत्नकोशकृत्। (चि० ४) ६ कर्तेति शाब्दिका वदन्ति।

---

१ वक्रतासंपादकं कर्मेत्यर्थः। (त० दी० ४)

२ अत्र बहवो विवदन्ति। तथा हि। गवादिपदानां गोत्व एव शक्तिः। व्यक्तिलाभस्त्वाक्षेपादिति मीमांसकाः। गोत्वं हि स्वाश्रयं विनानुपपन्नमिति तमाक्षिपतीति भट्टाः। (न्या० म० ४) जातिवाचकपदाज्जातिबोधः। व्यक्तिबोधस्त्वौपादानिक एवेति श्रीकरमतम्। व्यक्तेरपि बोधः शब्दादेव न त्वाक्षेपादितः। व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति। लक्षणात एव तदुपपत्तिरिति मण्डनाचार्यमतम्। (गा० श०)

३ आख्यातत्वं दशलकारसाधारणम्। (लौ० भा०)

अत्राख्यातपदेन तिप् तस् झि इत्यादयोऽष्टादश प्रत्यया वैयाकरणसंमता गृह्यन्त इति।

**आगमः**—१ शास्त्रम् । २ प्रत्ययादेशभिन्नत्वे सति साक्षाल्लक्ष्यसंस्कारकतया शास्त्रविहितो यः स आगम इति शाब्दिका वदन्ति ।

**आग्नेयी**—( दिक् ) उदयगिरिसंनिहिता सुमेरुव्यवहिता च दिक् । ( वै० वि० २।२।१० ) यथा मुम्बापुरीत आग्नेय्यां दिशि झळकीग्रामः । ( स्व० )

**आचारः**—१ प्रवृत्तिः । ( मू० म० १ ) २ क्रिया । ( दि० १ ) यथा धर्ममाचरतीत्यादौ धात्वर्थः । ( स्व० ) ३ गुरूक्तस्यार्थस्याङ्गीकरणमाचार इति बौद्धा वदन्ति । ( सर्व० बौद्ध० )

**आज्ञा**—[ क ] यस्या इच्छाया भङ्गे भयं सा । ( कु० ५ ) यथा गच्छतु भवान्देशान्तरमिति राजाज्ञा । ( स्व० )

[ ख ] अभिप्रायः । ( कु० ५ )

**आत्मनेपदम्**—१ [ क ] कर्मत्वमात्मनेपदार्थः । यथा कर्मत्वं च गम्यते त्यज्यते ग्राम इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगविभागादिरेव विशिष्य तथा तिङ्वाच्यः ।

वा

[ ख ] कर्मेति[1] शाब्दिका वदन्ति । २ क्वचित्, कर्तृत्वम् । यथा ऋत्विग्यजत इत्यादौ । ( गा० व्यु० ल० )

**आत्मा**[2]—( द्रव्यम् ) ज्ञानाधिकरणम्[3] । स द्विविधः । जीवात्मा । परमात्मा । तत्रा-

---

१ कर्तृगामि क्रियाफलमित्यर्थः ।

२ लक्षणं च । [क] आत्मत्वमेव । तच्च अमूर्तसमवेतद्रव्यत्वापरजातिः । (सर्व० औलु०) [ख] ज्ञानेच्छाद्यधिकरणत्वम् ।

३ अत्र बहवो विप्रतिपद्यन्ते । तथा हि । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च विप्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे चार्वाकैकदेशिनः । मन एवात्मेत्यन्ये चार्वाकाः । प्राण एवात्मेतीतरे चार्वाकाः । पुत्र एवात्मेति केचित् । देहपरिमाण आत्मेति दिगम्बराः । शून्यमेवात्मेति माध्यमिकाः । क्षणिकं विज्ञानमेवात्मेति योगाचाराः । ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेति सौत्रान्तिकाः । क्षणिकबाह्यार्थ एवात्मेति वैभाषिकाः । अव्यापक इति जैनाः । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेति तार्किकाः । प्रकाश्य इति नैयायिकाः । भोक्तैव केवलं न कर्तेति सांख्याः । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति योगिनः । अगुक्षेत्रज्ञादिपदवेदनीय इति शैवाः । ब्रह्मैवात्मेति मायावादिनः ।

द्यः प्रतिशरीरं भिन्नो विभुर्नित्यश्च । द्वितीयः सर्वज्ञ ईश्वर एक एव । (त० सं०) जीवात्मा परमात्मा चाप्रत्यक्ष एवेति वैशेषिकाः । (वै० ८।१।२) नैयायिकास्तु तत्र जीवात्मैव मानसप्रत्यक्षविषय इति प्राहुः । (भा० प०)

**आदिः**—१ कारणम् । २ तत्प्रागभावाधिकरणकालः । (स्व०) ३ उत्पत्तिः । ४ परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिरिति शाब्दिका वदन्ति ।

**आदेशः**—१ आज्ञा । २ स्थान्यर्थाभिधानसमर्थ इति शाब्दिका वदन्ति । ३ कथनमुपदेशो वेति वेदान्तिन आहुः ।

**आधारता**—अधिकरणतावदस्यार्थोनुसंधेयः ।

**आधेयता**—[क] आधेयमिति प्रतीतिनियामको धर्मविशेषः । यथा भूतलं घटवदित्यादौ घटे भूतलाधेयता । (स्व०)

[ख] प्रकारताविशेष इति केचिद्वदन्ति । (गा० पक्ष०)

[ग] अखण्डोपाधिरित्यन्ये वदन्ति ।

**आनन्तर्यम्**—ध्वंसाधिकरणकालवृत्तित्वम् । (त० प्र० २) यथा वैशाखमासस्य चैत्रानन्तर्यम् । (स्व०)

**आन्वीक्षिकी**—प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा । तया प्रवर्तत इत्यान्वीक्षिकी । न्यायविद्या न्यायशास्त्रम् । (वात्स्या० १।१।१)

**आपः**[1]—(द्रव्यम्) [क] अप्त्वसामान्ययुक्ताः[2] । (त० भा०)

[ख] शीतस्पर्शवत्यः । ता द्विविधाः । नित्याः । अनित्याः । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । अनित्यास्त्रिविधाः । शरीरम् । इन्द्रियम् । विषयः । शरीरमयोनिजं वरुणलोके प्रसिद्धम् । इन्द्रियं रस-

---

१ तल्लक्षणं च । [क] अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् । (वै० उ० २।१।२) [ख] नीलासमानाधिकरणभास्वरशुक्लासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् । (वै० वि० २।१।२) [ग] शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वम् । त० दी०)

२ अत्राप्त्वसामान्यं च सरित्सागरसमवेतत्वे सति सलिलसमवेतसामान्यम् । (सर्व० औलु०)

ग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिर्हिमकरकादिश्च[1] । (त० सं०) (भा० प०) (त० भा०) अप्सु चतुर्दश गुणा वर्तन्ते । स्पर्शादयोऽष्टौ वेगो गुरुत्वं सांसिद्धिकद्रवत्वमभास्वरशुक्लरूपं मधुररसः स्नेहश्चेति । (त० भा०) । (भा० प०)

**आप्तः**[2]—[क] आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषयोपदेष्टा । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति । • • • (वात्स्या० १।१।७)

[ख] भ्रमादिशून्यः । (गौ० वृ० २।५२)

[ग] प्रयोगहेतुभूतयथार्थज्ञानवान् । (न्या० बो०) (गौ० वृ० १।७)

[घ] यथाभूतस्यार्थस्योपदेष्टा पुरुषः । (त० भा०)

[ङ] यथार्थवक्ता । (त० सं० ४) यथा व्यासगौतमादिराप्तः । (स्व०)

**आप्तोपदेशः**—(प्रमाणशब्दः) [क] यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः शब्दः । (वात्स्या० १।१।७)

[ख] प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः । (गौ० वृ० १।१।७) यथा ब्रह्मसूत्रन्यायसूत्रादिराप्तोपदेशः । (स्व०)

**आभासः**[3]—(निग्रहस्थानम्) व्यभिचारादावसिद्ध्याद्युद्भावनम् । (गौ० वृ० ५।६५)

**आभासः**—१ योऽप्रमाजनकः सः । (गा० बाध०) २ भ्रमः । ३ ज्ञानविषयः । यथा हेत्वाभास[4] इत्यादौ हेतुदोषः । (स्व०)

**आयतनम्**—१ अवच्छेदकम् । (नील०) यथा शरीरमात्मनो भोगायतनमित्यादौ । २ प्रतिमेति बौद्धादयो वदन्ति । ३ आश्रय इति काव्यज्ञाः ।

---

१ हिमकरकादीनां सांसिद्धिकं द्रवत्वमस्त्येव । परं तु तेषामदृष्टविशेषेण घनीभावात्सांसिद्धिकद्रवत्वप्रतिबन्धमात्रं कल्प्यत इति विज्ञेयम् । (मु०) (सि० च०)

२ साक्षात्करणमाप्तिस्तया प्रवर्तत इत्याप्त इत्यर्थः । (वात्स्या० १।१।७)

३ निरनुयोज्यानुयोगप्रभेदोयमिति विज्ञेयम् । (गौ० वृ० ५।६५)

४ अत्र हेत्वाभास इति व्युत्पत्त्याभासपदस्य दोषपरत्वम् । (न्या० र० सामा०)

**आयोजनम्**—१ कर्म । ( दि० १ ) ( कु० ५ ) २ व्याख्यानम् । (कु० ५)

**आरब्धकर्म**—१ चरम[1]वर्णजन्यतद्वितीयक्षणोत्पन्नं तत्सजातीयं वर्णान्तरम् । ( मू० म० १ ) यथारब्धं कर्म समाप्यतामित्यादौ । ( स्व० ) २ अदृष्टविशेष इति वेदान्तिनो वदन्ति ।

**आरम्भः**—१ आद्यकृतिः । यथाथेदमारभ्यत इत्यादावारम्भः । ( स्व० ) २ कर्तव्यकर्मचिकीर्षेति मीमांसकाः । ( मू० म० १ ) ३ औत्सुक्यमिति[2] नाटकालंकारज्ञा वदन्ति । ( स्व० )

**आराधना**—गौरवित[3]निष्ठप्रीतिहेतुभूता क्रिया । ( त० प्र० २ ) ( गा० श० ) यथा हरिमाराधयति भक्त इत्यादौ धात्वर्थः । ( स्व० )

**आरोपः**—भ्रमवदस्यार्थोनुसंधेयः ।

**आलस्यम्**—कृत्यभावः । ( सि० च० )

**आवरणम्**—प्राप्तिप्रतिषेधः । ( वात्स्या० ) ( १।२।४९ )

**आवृत्तिः**—स्वस्थानस्थितस्य पुनरनुसंधानम् । ( दि० ४ ) यथा 'हलन्त्यम्' ( १।३।३ ) इति पाणिनिसूत्रस्यान्योन्याश्रयदोषवारणाय पुनरनुसंधानम् । ( स्व० )

**आशीः**—[ क ] वक्त्रिच्छाविषयत्वम् । (तर्का० ४ ) यथायुराशास्तेयं यजमानोसौ ( तैत्तिरीयब्राह्मणे । ३।५।१० ) इत्यादावाङ्पूर्वकशास्धात्वर्थः । [ ख ] इष्टप्राप्तीच्छेति शाब्दिका वदन्ति ।

**आश्रया[4]सिद्धः**—( हेत्वाभासः ) [ क ] यस्य हेतोराश्रयो नावगम्यते सः । ( त० भा० ) यथा गगनारविन्दं सुरभ्यरविन्दत्वात्सरोजारविन्दवदित्यत्रारविन्दत्वम् । ( त० सं० )

---

१ इदं चारब्धकर्म ग्रन्थनिर्मितविवानुसंधेयम् ।

२ तदुक्तम् । औत्सुक्यमात्रमारम्भः परिरम्भाय भूयस इति ।

३ अत्र गौरविततवृत्तित्वमुपलक्षणम् । ( कृष्ण० शा० )

४ लक्षणं च वक्ष्यमाणाश्रयासिद्धिमत्त्वमेव । ( वाक्य० )

**आश्रयासिद्धिः**–( हेतुदोषः ) [ क ] विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपम् । ( दीधि० २ )

[ ख ] पक्षतावच्छेदकविशिष्टपक्षासिद्धिः । ( न्या० बो० )

[ ग ] पक्षे पक्षतावच्छेदकस्याभावः । यथा काञ्चनमयः पर्वतो वह्निमानित्यादौ पर्वते काञ्चनमयत्वस्याभावः । ( मु० ) ( गौ० वृ० १।४८ )

**आसत्तिः**[1]–[ क ] अविनाभाववृत्तिः । ( वात्स्या० २।२।६१ )

[ ख ] एकेनैव पुंसाविलम्बेनोच्चारितत्वम् । ( त० भा० ४ )

[ ग ] अव्यवधानेनान्वयप्रतियोग्युपस्थितिः । ( चि० ) ( तर्का० ४ )

[ घ ] प्रकृतान्वयबोधानुकूलव्यवधानाभावः । ( न्या० म० ४ )

[ ङ ] यत्पदार्थस्य यत्पदार्थेनान्वयोपेक्षितस्तयोरव्यवधानेनोपस्थितिः । ( मु० ४ )

[ च ] पदानामविलम्बेनोच्चारणम्[2] । ( त० सं० ) यथा गामानयेति वाक्ये संनिधिरूपासत्तिः । ( स्व० )

[ छ ] वृत्त्या पदजन्यपदार्थोपस्थितिरिति नव्याः । ( न्या० म० ४ )

**आहार्यम्**–( प्रत्यक्षम् ) [ क ] स्वविरुद्धधर्मावच्छिन्नधर्मितावच्छेदककस्वावच्छिन्नप्रकारकं ज्ञानम् । यथा धूमव्यभिचारविशिष्टवन्ह्यादिधर्मितावच्छेदकको धूमव्याप्यतया वन्ह्यादिप्रकारको 'धूमव्याभिचारिवह्निमान्धूमव्याप्यवह्निमान्' इत्याकारको ग्रहः ।

[ ख ] स्वविरोधिधर्मधर्मितावच्छेदककं स्वप्रकारकं ज्ञानम् । यथा निर्वह्निः पर्वतो वह्निमानिति ज्ञानम् ।

[ ग ] स्वस्मिन्स्वावृत्तित्वावच्छिन्नप्रकारकं ज्ञानम् । यथा पर्वतः पर्वतावृत्तिवह्निमानिति ज्ञानम् । ( गा० सामा० )

---

१ सा च शाब्दबोधे प्रयोजिकेति विज्ञेयम् ।

२ तदर्थश्च [ क ] अविलम्बेन पदार्थोपस्थितिः । ( त० दी० ४ ) [ ख ] तत्पदे तत्पदाव्यवहितत्वम् । ( वाक्य० )

[ घ ] स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षम् [1] । ( गा० स०प्र० )

[ ङ ] बाधकालीनेच्छाजन्यं ज्ञानम् । यथा ह्रदो वह्निमान्धूमादित्यादौ ह्रदो वन्ह्यभाववानिति ज्ञानम् [2] । ( स्व० )

## इ.

**इच्छा** [3]–(गुणः) कामः । ( त० सं० ४) यथा पर्वते वन्ह्यनुमितिर्मे जायतामित्याकारिकेच्छा । (स्व०) इच्छा द्विविधा । फलविषयिणी [4] । उपायविषयिणी [5] । (मु०)

**इतरबाधग्रहः**–साध्यतावच्छेदकव्याप्ययत्किंचिद्धर्मावच्छिन्नेतरसाध्यतावच्छेदकाविशिष्टाभाववत्पक्षविषयकं ज्ञानम् । यथा पर्वतो वह्निमानित्यादौ महानसीयेतरवन्ह्यभाववान्पर्वत इति ज्ञानम् । (स्व०)

**इतरबाधग्रहसहकृतानुमितिः**–सामान्यधर्मावच्छिन्नस्य साध्यत्वे विशेषधर्मावच्छिन्नेतरबाधग्रहसत्वे जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः [6] । यथा पर्वतो वह्निमानित्यादौ पर्वतो महानसीयवह्निमानित्यनुमितिः । ( स्व० )

**इदम्**–[ क ] प्रत्यक्षबुद्धिविषयः । (दि० ४) (गा० श०) यथायं पुरुष इत्यादाविदंपदार्थः । (स्व०)

---

१ विषयत्वस्वाव्यवहितोत्तरत्वोभयसंबन्धेनेच्छावच्छिन्नप्रत्यक्षमित्यर्थः । ( गा० स०प्र० )

२ अत्र च ह्रदो वह्निमानित्यनुमित्यनन्तरं* ह्रदे वन्ह्यभावप्रत्यक्षं मे जायतामितीच्छासत्वे केवलं ह्रदो वन्ह्यभाववानित्याहार्यज्ञानमुत्पद्यत इति बोध्यम् ।

३ सा च मनोग्राह्यात्ममात्रवृत्तिश्चेति विज्ञेयम् । (भा० प०) इच्छालक्षणं च प्रवृत्तेः साक्षादनुकूलत्वम् । (वाक्य०)

४ फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव स्वतः पुरुषार्थः संभवति । ( मु० )

५ उपायेच्छां प्रति स्विष्टसाधनताज्ञानं कारणम् । ( मु० )

६ अत्र च सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शादपि विशेषधर्मावच्छिन्नविधेयकानुमितिः स्वीक्रियत इति विज्ञेयम् ।

---

* अत्र बाधज्ञानं चेयमनुमितिरेव । बाधत्वं तु विरुद्धधर्मप्रकारकत्वमेवेति बोध्यम् ।

[ख] समीपतरवृत्तिप्रत्यक्षगतव्यक्तिरिति केचित्। (दि० ४)

**इन्द्रियम्**[1]–[क] भोगसाधनानीन्द्रियाणि। (वात्स्या० १।१।९)

[ख] स्वविषयग्रहणलक्षणानीन्द्रियाणीति। (वात्स्या० १।१।१२)

[ग] शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियम्। इन्द्रियाणि षट्। घ्राणम्। रसनम्। चक्षुः। श्रोत्रम्। त्वक्। मनः। (गौ० १।१।१२) (त० भा० ४) प्रकारान्तरेणेन्द्रियं द्विविधम्। आन्तरेन्द्रियम्। बहिरिन्द्रियम्। तत्राद्यं मनः। द्वितीयं घ्राणादि। (ख०) मनो नेन्द्रियमिति केचिद्वदन्ति।

**इन्द्रियार्थसंनिकर्षः**[2]–प्रत्यक्षात्मकज्ञानहेतुरिन्द्रियसंबन्धः। (राम०) स च द्विविधः। लौकिकः। अलौकिकः। तत्राद्यः[3] षड्विधः। संयोगः। संयुक्तसमवायः। संयुक्तसमवेतसमवायः। समवायः। समवेतसमवायः। विशेषणविशेष्यभाव इति। चक्षुषा घटप्रत्यक्षजनने संयोगः[4] संनिकर्षः। घटरूपादिप्रत्यक्षजनने संयुक्तसमवायः[5]। रूपत्वादिसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः[6]। श्रोत्रेण शब्दसाक्षात्कारे समवायः। शब्दत्वसामान्यप्रत्यक्षे समवेतसमवायः। अभावप्रत्यक्षे विशेषणविशेष्यभाव[7] इति। (त०

---

१ तच्च प्रत्यक्षप्रमाणमित्युच्यते। (त० सं०) लक्षणं चेन्द्रियत्वमेव। तच्च [क] स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वम्। (चि०) [ख] शब्देतरोद्भू*तविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्। (त० प्र० १) (वाक्य०) (त० दी०) (वै० उ०) (वै० वि० ४।२ १) [ग] घ्राणाद्यन्यान्यत्वम्। [घ] प्रत्यक्षजनकतावच्छेदकतयेन्द्रियत्वमखण्डोपाधिरित्यन्ये। (गौ० वृ० १।१।१२)

२ लक्षणं च संयोगाद्यन्यतमत्वम्। (त० प्र०) विस्तरस्तु (वै० उ० ८।१।५) तत्रानुसंधेयः।

३ स च लौकिकप्रत्यक्षे कारणम्।

४ द्रव्यचाक्षुषस्पार्शनमानसेष्विन्द्रियसंयोग एव संनिकर्ष इति भावः। (सि० च०)

५ द्रव्यसमवेतचाक्षुषस्पार्शनमानसरासनघ्राणजेष्विन्द्रियसंयुक्तसमवाय एव संनिकर्षः। (सि० च०)

६ द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेष्विन्द्रियसंयुक्तसमवेतसमवाय एव संनिकर्षः। (सि० च०)

७ इन्द्रियसंबद्धविशेषणत्वं† इन्द्रियसंबद्धविशेष्यत्वं चेत्यर्थः। (त० भा०) (सि० च०)

---

* अत्रेदं बोध्यम्। शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वम्। तदभावकूटश्चोद्भूतत्वमिति। (मु० १)

† तच्च संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायविशेषणसंयुक्तविशेषणतादि। (मू० म०) स्वोपरक्तबुद्धिजनकत्वं यत्स्वरूपं तदेव विशेषणत्वं न तु तदर्थान्तरम् (त० भा०)

सं०१) द्वितीयस्तु त्रिविधः । सामान्यलक्षणः । ज्ञानलक्षणः । योगजः । (भा०प०२) (मु०)

**इष्टत्वम्**-[ क ] इच्छाविषयत्वम् । (स्व०)

[ ख ] समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् । यथौदनकामः पचेत स्वर्गकामो यजेतेत्यादावोदनस्वर्गयोरिष्टत्वम् । (गा० व्यु० ल०)

## ई.

**ईर्ष्या**–१ [ क ] अक्षान्तिः । सा च परोत्कर्षासहिष्णुता[2] । यथा शत्रव ईर्ष्यतीत्यादौ धात्वर्थः । (गा० व्यु० ४)

[ ख ] साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः । यथा दुरन्तदायादानामीर्ष्या । (गौ० वृ० ४।३)

## उ.

**उच्छ्वासः**–प्राणवायोर्व्यापारविशेषः । ( गौ० वृ० ३।३० )

**उत्कर्षः**–१ अविद्यमानधर्मारोपः[3] । ( गौ० वृ० ५।४ ) यथा त्वं राजेति[4] ।

२ गुरुनिष्ठजातिविशेषः । यथेदमस्मादुत्कृष्टमित्यादावुत्कर्षः । ( राम० )

**उत्कर्षसमः**–( जातिः ) [ क ] दृष्टान्तधर्मं साध्येन समासजत उत्कर्षसमः । यदि क्रियाहेतुगुणयोगाल्लोष्टवत्क्रियावानेवात्मा । लोष्टवदेव स्पर्शवानपि प्राप्नोति । अथ न स्पर्शवान् । लोष्टवत्क्रियावानपि न प्राप्नोति । विपर्यये वा विशेषो वक्तव्य इति । ( वात्स्या० ५।१।४ )

[ ख ] व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन्साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनम् । यथा शब्दोनित्यः कृतकत्वादिति स्थापनाया-

---

१ स चालौकिकप्रत्यक्षे कारणम् ।

२ परोत्कर्षगोचरो द्वेष इति परमार्थः । ( गा० व्यु० ४ )

३ अत्र धर्मशब्देनोत्कृष्टत्वेन प्रतीतो धर्मो गृह्यते ।

४ अत्र च कश्चिद्दरिद्रो याचक उदारं धनिकमभ्येत्य 'त्वमेव राजेति' राजधर्मानारोपयतीति लोकप्रसिद्धिः ।

मनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोपि रूपवान्स्यादिति। ( गौ० वृ० ५।४ )

[ ग ] परोक्तसाधनादेव तदव्यापकधर्मस्य पक्ष आपादनम्। यथा शब्दोनित्यः कृतकत्वाद्घटवदित्यादौ कश्चिदेवमाह । यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत्सावयवः स्यादिति । ( नील० )

**उत्क्षेपणम्**[1]–( कर्म ) ऊर्ध्वदेशसंयोगहेतुः । ( त० सं० )

**उत्तरत्वम्**–१ स्वाधिकरणक्षणध्वंसाधिकरणत्वम्। यथा चैत्रोत्तरत्वमाषाढमासस्य । यथा वा भुक्त्वा व्रजतीत्यादौ व्रजनस्य भोजनोत्तरत्वम्। २ मेरुसंनिहितदेशावच्छिन्नत्वम्। यथा वायव्यैशान्योर्मध्यदिश उत्तरत्वम्। (स्व०)

**उत्तरम्**–१ परपक्षप्रतिषेधः। (वात्स्या० ५।२।१९) यथोत्तरस्याप्रतिपत्तिरप्रतिभेत्यादौ। २ प्रश्ननिवर्तकं वाक्यम्। यथा कोसीति पृष्टे देवदत्तोहमस्मीति वचनम्। ( स्व० )

**उत्तीर्णता**–निश्चयः । (गा० सव्य०) यथासाधारण्योत्तीर्णतादशायामित्यादौ। ( स्व० )

**उत्तेजकत्वम्**–प्रतिबन्धककोटिप्रविष्टाभावप्रतियोगित्वम् । यथा दाहं[2] प्रति मणिविशेषस्योत्तेजकत्वम्। (स्व०)

**उत्थाप्याकाङ्क्षा**–( आकाङ्क्षा ) अनियताकाङ्क्षा। ( राम० ) यथोदयति चन्द्रः कुमुदबान्धव इत्यादौ चन्द्रपदकुमुदबान्धव[3]पदयोरनियताकाङ्क्षा। (स्व०)

**उत्थिताकाङ्क्षा**–( आकाङ्क्षा ) नियता[4]काङ्क्षा। यथा क्रियाकारकपदानां परस्प-

---

१ तल्लक्षणं चोर्ध्वदेशसंयोगासमवायिकारणप्रमेयसमवेतकर्मत्वापरजातिरेव । ( सर्व० औलु० )

२ अत्र च दाहं प्रति मणेः प्रतिबन्धकत्वं लोकसिद्धम्। परं तु मणिविशेषस्य समवधाने दाहोत्पत्त्या मणिविशेषाभावविशिष्टमणेरेव प्रतिबन्धकत्वस्यावश्यं वक्तव्यतया मणिविशेषस्योत्तेजकत्वमुपपद्यत इति ।

३ अत्रोदेति चन्द्रोम्बुजिबान्धव इति पाठः साधुः ।

४ नियतत्वं चात्रावश्यंभावित्वम ।

राकाङ्क्षा । यथा वा पुत्रादिपदानां पित्रादिरूपप्रतियोगिवाचकपदाकाङ्क्षा[1] । ( राम० )

**उत्पत्तिः**—१ जन्मवदस्यार्थोनुसंधेयः । २ [ क ] स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसंबन्धः ।
[ ख ] स्वाधिकरणक्षणध्वंसानधिकरणक्षणसंबन्धः । ( त० प्र० १ )
[ ग ] स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्वम् । (दि० १।२) यथा घटपटादेरुत्पत्तिः । ( स्व० )
[ घ ] यत्समयवृत्तिध्वंसप्रतियोगिताव्यापकं तत्कार्याधिकरणक्षणवृत्तित्वं तत्समयवृत्तित्वमिति केचित् । ( दि० ) सा द्विविधा । स्वत उत्पत्तिः । परत उत्पत्तिः । आद्या मीमांसकनये स्वतःप्रमात्वस्योत्पत्तिः । द्वितीया घटादीनाम् । ( स्व० )

**उत्पत्तिकालावच्छिन्नत्वम्**—स्वाधिकरणसमयध्वंसवदन्यकालसंबन्धः[2] । ( गा० पक्ष० ) यथा यदा यो घट उत्पद्यते तदा तस्य घटस्योत्पत्तिकालावच्छिन्नत्वम् । ( स्व० )

**उत्सर्जनम्**—१ स्वानुयोगिकप्राप्तवस्तुप्रतियोगिकसंबन्धविरहेच्छा[3] । यथोत्सृजति धनं देवदत्त इत्यादौ धात्वर्थः । (स्व०) २ कर्मविशेष इति याजका वदन्ति ।

**उदानः**—( वायुः ) अन्नादेरूर्ध्वनयनादुदानः । ( सि० च० ) ( दि० १।२ )

**उदाहरणम्**[4]—( न्यायावयवः ) [ क ] दृष्टान्त उदाहरणम् । ( गौ० १।१।३६ )
[ ख ] सव्याप्तिकं दृष्टान्तवचनम् । यथा पर्वते धूमेन वह्निसाधने यो यो

---

१ अत्र च पुत्र इत्युक्ते कस्येत्याकाङ्क्षोदयाद्देवदत्तस्येत्याद्यपेक्ष्यत इति देवदत्तपदपुत्रपदयोर्नियताकाङ्क्षेति ज्ञेयम् ।

२ स्वप्रतियोगिकत्वस्वाधिकरणक्षणध्वंसाधिकरणक्षणानुयोगिकत्वोभयसंबन्धेन यत्किंचित्पदार्थविशिष्टसंबन्धाभाववत्त्वमिति फलितोर्थः ।

3 स्वपदार्थ इच्छाकर्ता ।

४ तल्लक्षणं चोदाहरणत्वमेव तच्च [ क ] अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसंबन्धबोधजनकशब्दत्वम् । ( चि० अव० ) [ ख ] अवयवार्थानन्विनार्थकावयवत्वम् । (दीधि०) ( गौ० वृ० १।३५ )

धूमवान्सोग्निमान्यथा महानस इति। (गौ० वृ० १।३५ (त० भा०)

[ग] व्याप्तिप्रतिपादकवचनम्। (त० दी० २) तद्विविधम्। अन्वय्युदाहरणम्। व्यतिरेक्युदाहरणम्। (गौ० वृ० १।३५)

उदीची-(दिक्) [क] प्राच्यभिमुखपुरुषवामप्रदेशावच्छिन्ना[1] दिगुदीची। (वै० उ० २।२।१०)

[ख] मेरुसंनिहितदेशावच्छिन्ना दिक्। (वाक्य० १) (न्या० बो०) यथा झळकीग्रामादुदीच्यां[2] सोलापुरग्रामः। (स्व०)

उद्देशः-१ [क] नामधेयेन पदार्थमात्रस्याभिधानम्[3]। (वात्स्या० १।१।२) (त० भा० १) (त० दी० १)

[ख] वस्तुप्रतिपादकनाममात्रम्। (नील०) २ इच्छा। (स्व०)

उद्देश्यत्वम्-[क] विषयताविशेषः। यथा पर्वतो वह्निमानित्यनुमितौ पर्वतस्योद्देश्यत्वम्।

[ख] इच्छाविशेष्यत्वमिति[4] केचित्। (न्या० र०)

[ग] यच्छब्दप्रतिपाद्यत्वे सति सिद्धत्वेन प्रतीयमानत्वे सत्यनुवाद्यत्वमिति शाब्दिका वदन्ति।

[घ] मानान्तरप्राप्तत्वे सति विधेयान्वयित्वेन निवेश्यत्वमिति मीमांसकाः।

उद्बोधकत्वम्-स्मृतिसंपादकत्वम्। (स्व०) यथा प्रणिधाननिबन्धादीनामुद्बोधकत्वम्। (गौ० ३।१।१३)

उद्भवः-[क] बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वोपाधिः। यथा रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः।

---

१ वामत्वं तु शरीरावयववृत्तिजातिविशेषः। (वै० उ० २।२।१०)

२ अत्र च झळकीग्रामनिष्ठमेरुगिरिसंयुक्तसंयोगपर्याप्तसंख्यात्र्याप्यसंख्यापर्याप्त्यधिकरणमेरुगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः सोलापुरग्राम इत्यन्वयबोधः।

३ स च शास्त्रस्य प्रवृत्तिः (वात्स्या० १।१।२)

४ अत्रेच्छा च पर्वते वन्ह्यनुमितिर्मे जायतामित्याद्याकारिका।

५ अत्रोद्बोधश्च सहकारिलाभः। (त० भा०)

[ ख ] अनुद्भवाभाव इति केचित् । ( वै० उ० ४।१।८ )

**उद्भूतत्वम्**–[ क ] प्रत्यक्षत्वप्रयोजको धर्मविशेषः । ( त० दी० १ ) यथा रूपत्वव्याप्यजातिमत्त्वम्[1] । ( चि० १ ) यथा वा नीलत्वादिव्याप्यानुद्भूतत्वाभावकूटवत्त्वम् । ( स्व० )

[ ख ] प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगाद्यन्यतमत्वम् ।

[ ग ] उद्भूतत्वं जातिस्तदभावोनुद्भूतत्वमिति[2] जरन्नैयायिकाः ।

[ घ ] अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति गङ्गेशोपाध्यायः । ( सि० च० )

**उन्नायकत्वम्**–ज्ञापकत्वम्[3] । यथा पर्वते धूमेन वह्निसाधने वह्निमत्पर्वतोन्नायकत्वं वह्निव्याप्यवत्पर्वतस्य । ( स्व० )

**उन्नेयत्वम्**–ज्ञाप्यत्वम्[4] । यथा पर्वते धूमेन वह्निसाधने वह्निव्याप्यवत्पर्वतोन्नेयत्वं वह्निमत्पर्वतस्य । ( स्व० )

**उपक्रमः**–आरम्भवदस्यार्थोनुसंधेयः ।

**उपचारः**–१ सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानम्[5] । ( वात्स्या० १।२।५५ ) २ ज्ञानम् । ( गौ० वृ० २।१२४ )

**उपचारच्छलम्**–( छलम् ) [ क ] धर्मविकल्पनिर्देशेर्थसद्भावप्रतिषेधः । ( गौ० १।५५ ) अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पोन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे धर्मविकल्पनिर्देशे । यथा मञ्चाः क्रोशन्तीति । अर्थसद्भावेन प्रतिषेधः । मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति । ( वात्स्या० १।२।५५ )

[ ख ] शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः

---

१ इयं जातिश्च घटादिगतशुक्लादिरूपवृत्तिरिति विज्ञेयम् ।

२ उद्भूतत्वं जातिर्न भवति शुक्लत्वादिना संकरात् । ( सि० च० ) अन्यत्सर्वमुद्भूतवदनुसंधेयम् ।

३ अत्र ज्ञापकत्वं च जनकज्ञानविषयत्वम् ।

४ अत्र ज्ञाप्यत्वं च जन्यज्ञानविषयत्वमिति बोध्यम् ।

५ अत्र त्वन्वयानुपपत्तिरेवोपचारबीजम् । ( वै० उ० ५।१।६ )

सः । यथाहं नित्य इति शतया प्रयुक्तेमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधः । ( गौ० वृ० १।५४ )

**उपजीवकत्वम्**–[ क ] कार्यत्वम् ।

[ ख ] प्रयोज्यत्वम् । ( राम० ) यथा घटस्य दण्डोपजीवकत्वम् ( स्व० )

**उपजीव्यत्वम्**–कारणत्वम् । ( स्व० )

**उपदेशः**–१ [ क ] शब्दः । ( गौ० वृ० २।५२ )

[ ख ] तत्तद्व्यक्तिस्वरूपादिनिरूपणम् । यथोपदिशति धर्मं छात्रेभ्यो गुरुरित्यादौ । ( स्व० ) २ आद्योच्चारणमिति शाब्दिका वदन्ति ।[1]

**उपधानम्**–उपधायकत्ववदस्यार्थोनुसंधेयः ।

**उपधायकत्वम्**–अव्यवहितपूर्ववृत्तित्वसंबन्धेन फलविशिष्टत्वम् । यथा परामर्शस्यानुमित्युपधायकत्वम् । यथा वा विशेषणज्ञानस्य विशिष्टज्ञानोपधायकत्वम् । ( स्व० )

**उपनयः**[2]–( न्यायावयवः ) [ क ] उदाहरणापेक्षः साध्यस्योपसंहारः[3] । ( गौ० १।१।३८ )

[ ख ] प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविशिष्टबोधजनको न्यायावयवः । ( गौ० वृ० १।३७ )

[ ग ] पक्षे व्याप्तलिङ्गोपसंहारः । ( त० भा० )

[ घ ] उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् ।

---

१ तदुक्तम् । धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिता इति ॥

२ लक्षणं तूपनयत्वमेव । तच्च [ क ] अनुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वम् । ( चि० अव० ) [ ख ] इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वम् । [ ग ] स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वम् । ( दीधि० २ ) [ घ ] एतद्वाह्निव्याप्यधूमवानयमिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० )

३ साध्यस्य पक्षस्योदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः स इत्यर्थः । ( गौ० वृ० १।३७ )

(सि० च०) यथा पर्वते धूमेन वह्निसाधने वह्निव्याप्यधूमवान्[1]यमिति वाक्यम् । (स्व०) यथा वा तद्व्याप्यहेतुमान्, तद्वान्वेति । (दीधि० २) [ङ] पक्षधर्मताप्रतिपादकं वचनम् । (त० दी०) यथा पर्वतो वह्निमान्धूमवत्त्वादित्यादौ धूमवांश्चा[2]यमिति । (त० भा०) यथा वा तथा चायमिति वाक्यम् । (त० सं०) उपनयो द्विविधः । अन्वय्युपनयः । व्यतिरेक्युपनयः । (गौ० वृ० १।३७)

**उपनयः**—ज्ञानम् । यथा सुरभि चन्दनमित्यादि प्रत्यक्षे प्रयोजको ज्ञानल[3]क्षणसंनिकर्षः । (मु० म० १) (गा० बाध०)

**उपनीतभानम्**—१ उपनीततत्त्वादिविषयकत्वम् । यथा सुरभि चन्दनमिति प्रत्यक्षादौ । (गा० बाध०) २ लौकिकालौकिकोभयसंनिकर्षजन्यं ज्ञानम् । यथा सुरभि चन्दनमिति प्रत्यक्ष[4]म् । (स्व०)

**उपपत्तिः**—१ संभववदस्यार्थोनुसंधेयः । (वात्स्या० १।१।४०) २ ज्ञानम् । (गौ० वृ० १।१।२३)

**उपपत्तिसमः**–(जातिः) [क] उभयकारणोपपत्तेरुपपत्तिसमः । (गौ० ५।२५) यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दः । नित्यत्वकारणमप्युपपद्यतेस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः । (वात्स्या० ५।१।२५) [ख] व्याप्तिमपुरस्कृत्य यत्किंचिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानम् । यथा शब्दोनित्यः कृतकत्वादित्युक्ते, यथा त्वत्पक्षेनित्यत्वे प्रमाणमस्ति तथा मत्पक्षोपि सप्रमाणकस्त्वत्पक्षमत्पक्षान्यतरत्वात्त्वत्पक्षवत् । (गौ० वृ० ५।२५)

---

१ इदं नव्यमतानुसारेण ।

२ इदं च प्राचीनमतानुसारेण ।

३ स्वविषये मानसः संनिकर्ष इत्यर्थः । (गा० बाध०)

४ तत्र, सौरभ्यांशेलौकिकसंनिकर्षश्चन्दनांशे तु लौकिकसंनिकर्षश्चैतदुभाभ्यां जन्यत इति बोध्यम् ।

[ ग ] उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम् । यथा यदि चानित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यादिति । ( नील० )

**उपमर्दः**–१ एकरूपनिवृत्तौ रूपान्तरोपजनः । ( वात्स्या० २।२।५९ ) यथा सांख्यमते दुग्धादौ दध्याद्युपमर्दः । ( स्व० ) २ धर्मिनिवृत्तौ धर्म्यन्तरप्रयोग इति शाब्दिका वदन्ति । (गौ० वृ० २।१२२) ३ नाश इति मायावादिनः काव्यज्ञाश्च ।

**उपमानम्**–( प्रमाणम् ) [ क ] प्रसिद्धसाधर्म्यात्साध्यसाधनम् । ( गौ० १।१।६ ) प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति ।...... यथा मुद्गस्तथा मुद्गपर्णी , यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात्संज्ञासंज्ञिसंबन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति । ( वात्स्या० १।१।२ )

[ ख ] सप्रतियोगिपदार्थज्ञानेन तत्प्रतियोगिकपदार्थज्ञानम् । ( चि० ३ ) तच्चातिदेशवाक्यार्थस्मरणसहकृतं सादृश्यविशिष्टज्ञानम् । यथा गोसादृश्यविशिष्टपिण्डज्ञानम् । ( त० भा० ३ )

[ ग ] उपमितिकरणम्[२] । तच्च सादृश्यज्ञानम्[३] । यथा गोसदृशो गवय इति ज्ञानम् । ( त० सं० ३ ) ( वात्स्या० १।१।२ )

[ घ ] सादृश्यप्रमाकरणमिति केचित् । ( चि० ३ ) वैशेषिकास्तु पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात्पदवाच्यत्वस्यानुमितिरेवातो नोपमानं

---

१ व्याकरणशास्त्रे चार्धधातुकप्रत्ययविवक्षायामस्धातोर्भू इत्यादेशो बभूवेत्यादि रूपं सिध्यतीति विज्ञेयम् ।

२ तच्चातिदेशवाक्यार्थज्ञानम् । ( न्या० बो० )

३ तथाहि । कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवय' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति । तदनन्तरं 'अयं गवयपदवाच्य' इत्युपमितिरुत्पद्यत इति । ( त० सं० )

प्रमाणान्तरमित्याहुः[1] । ( नील० ३ ) नैयायिकाश्च शक्तिसाधकत्वेनोपमानं प्रमाणान्तरमेवेति प्राहुः । ( भा० प० ) उपमानं त्रिविधम् । सादृश्यविशिष्टपिण्डज्ञानम् । असाधारणधर्मविशिष्टपिण्डज्ञानम् । वैधर्म्यविशिष्टपिण्डज्ञानम् । तत्राद्यं यथा गोसादृश्यविशिष्टपिण्डज्ञानम् । द्वितीयं खड्गमृगज्ञानम्[2] । तृतीयमुष्ट्रज्ञानम्[3] । ( सि० च० )

**उपमितिः**[4]–( अनुभवः ) [ क ] नियतसमानाधिकरणशब्दप्रवृत्तिनिमित्तज्ञानम्[5] ।

[ ख ] अगृहीतसमयसंज्ञाया वाक्यार्थसामानाधिकरण्येन निमित्तविशेषपरिच्छेदः ।

[ ग ] वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरिच्छेदः । यथा गवि गोसदृश इत्यत्र । ( चि० ३ )

[ घ ] लिङ्गत्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्या । ( दीधि० )

[ ङ ] सादृश्यज्ञानकरणकं ज्ञानम् । ( मु० १ ) ( न्या० म० ) ( त० सं० )

[ च ] संज्ञासंज्ञिसंबन्धज्ञानम्[6] । ( त० सं० ) तच्च शब्दशक्तिग्रहविशेषः । ( भा० प० ) यथासौ गवयपदवाच्य इति ज्ञानम् । ( त० सं० ३ ) ( न्या० बो० )

---

१ तच्चिन्त्यम् । व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेरनुभवसिद्धत्वात् । (नील०)

२ अत्रासाधारणधर्मश्च नासिकालसदेकशृङ्गत्वम् । (सि० च०)

३ अत्र च वैधर्म्यं तुन्नतपृष्ठदीर्घग्रीवादि । (सि० च०)

४ लक्षणं तूपमितित्वमेव । तच्च [ क ] उपमिनोमीत्यनुभवसिद्धो* जातिविशेषः । [ ख ] शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वम् । ( न्या० म० ३ ) ( नील० ) [ ग ] सादृश्यविशिष्टे पदवाच्यत्वप्रकारकस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । ( वाक्य० )

५ प्रकारतया शक्तिग्रहविषयत्वं प्रवृत्तिनिमित्तत्वम् । ( चि० ३ )

६ संज्ञा पदम् । संज्ञी पदार्थः । [ क ] तयोः संबन्धः शक्तिः । तज्ज्ञानमित्यर्थः । ( नील० ) [ ख ] तयोः संबन्धो वाच्यवाचकभावः । ( वाक्य० ) ( न्या० बो० )

---

* अत्रानुव्यवसायगम्य इति पाठान्तरम् । ( नील० )

**उपयोगः**—इष्टसाधनत्वम् । यथा यागः स्वर्गोपयोगीत्यादौ । ( स्व० )

**उपलक्षणत्वम्**[1]—[ क ] तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वम् । ( दि० ४) यथा काकवद्देवदत्तगृहमित्यादौ[2] काकस्योपलक्षणत्वम् । ( स्व० )

[ ख ] भगवदिच्छायां बोधविषयत्वेनाभासमानत्वे सति भासमानविषयांशे प्रकारत्वमिति मिश्राः ।

[ ग ] विषयित्वाविशेषणतया विषयविशेषणतया पदजन्यतावच्छेदकनिष्ठत्वमिति गुरवः । ( कृष्ण० श० )

**उपलक्षणम्**—( व्यावर्तकम् ) [ क ] प्रत्याय्य व्यावृत्त्यधिकरणतावच्छेदकान्यद्व्यावर्तकम् ।

[ ख ] विवक्षितान्वयप्रतियोगितानवच्छेदकम् ।

[ ग ] यदन्विततया ज्ञात एव विशेष्यतात्पर्यविषयीभूतेतरान्वयधीस्तद्व्यवच्छेदकं यत्तद्भिन्नम् । यथा काकवद्देवदत्तगृहमित्यादौ काको न गृहस्य देवदत्तान्वयप्रतियोगितावच्छेदकः । ( चि० १ )

[ घ ] अविद्यमानं सद्व्यावर्तकम् । यथा जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीयजटादिकम् । यथा वा, यदा तु देवदत्तगृह उपरि भ्रमन्नसन्काकस्तदोपलक्षणम् । ( वै० उ० ७।२।८ )

[ ङ ] क्वचित्, विधेयान्तरसमानकालीनमपि विशेषणं तदन्वयितया तदन्वयिन्युपलक्षणमित्युच्यते । यथा रूपवान्रसवानित्यादौ रूपादिकं रसान्वयिनि । सास्नावान्गोपदवाच्य इत्यादौ सास्नादिकं गवादिपदवाच्ये । ( गा० व्यु० ३ )

[ च ] सदसद्वा समानाधिकरणं व्यावर्तकं विशेषणं, व्यधिकरणमुपलक्षणमित्युदयनाचार्याः । ( चि० १ )

---

१ शाब्दस्थल एवार्थस्येदमुपलक्षणत्वमिति विज्ञेयम् । ( स्व० )

२ अत्र च प्रयोगकाले गृहे काकासत्त्वेऽपि यदा कदाचित्काकसमवधानेऽपि च काकवद्देवदत्तगृहमिति प्रयोगदर्शनात्काकस्योपलक्षणत्वमिति बोध्यम् ।

**उपलक्षणम्**—अजहत्स्वार्थलक्षणयान्यग्राहकम् । यथा, अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं ( चि० सामा० ) इत्यत्रानुमितिपदं परामर्शग्राहकम् । ( गा० सामा० )

**उपलब्धिः**—१ बुद्धिवदस्यार्थोनुसंधेयः । ( गौ० १।१५ ) ( वै० ८।१।१ )
२ ज्ञानेन पुरुषस्य योतात्त्विकः संबन्धः स इति सांख्याः । ( दि० १।२ )

**उपलब्धिसमः**—( जातिः ) [ क ] निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमः । ( गौ० ५।२७ ) निर्दिष्टप्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेपि वायुनोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते । निर्दिष्टस्य साधनस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः । ( वात्स्या० ५।१।२७ )

[ ख ] वादिना निर्दिष्टस्य साधनस्याभावेपि साध्यस्योपलम्भात्प्रत्यवस्थानम् । तथा हि । पर्वतो वह्निमान्धूमादित्यादिकं वन्ह्यवधारणार्थमुच्यते । न च तत्संभवति । धूमं विनालोकादितोपि वह्निसिद्धेः । तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः । ( गौ० वृ० ५।२७ )

[ ग ) वाद्युपदर्शितसाधनाभावेपि साध्यस्योपलब्धिकथनम् । यथा शब्दोनित्यः प्रयत्नानुविधायित्वाद्घटवदित्यत्र प्रयत्नं विनापि वायुनोदनवशाद्वृक्षशाखाभङ्गजन्यत्वोपलब्धेर्न प्रयत्नानुविधायित्वं शब्देस्तीति । ( नील० )

**उपसंहारः**—१ सहचारः । २ निश्चयः । ( दीधि० २ ) ३ उपन्यासः । ( गौ० वृ० १।३७ ) ४ सामान्यतः प्राप्तस्य विशेषे पर्यवसानमिति मीमांसकाः ।

**उपसर्गः**—जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमः । यथा प्रादिरुपसर्गः[1] ।

**उपसर्जनत्वम्**—१ वृत्ति[2]जन्यबोधीयप्रकारताश्रयत्वम् । यथा धनवान्देवदत्त इत्यादौ

---

१ उपसर्गा द्वाविंशतिः । प्र । परा । अप । सम् । अव । अनु । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप ।
२ वृत्तिशब्देनात्र वैयाकरणसंमताः कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तयो गृह्यन्ते ।

धनस्योपसर्जनत्वम् । (स्व०) २ स्वार्थविशिष्टार्थान्तरबोधकत्वमिति शाब्दिका वदन्ति ।

**उपस्थितिः**--बुद्धिवदस्यार्थोनुसंधेयः ।

**उपहितत्वम्**—उपधायकत्ववदस्यार्थोनुसंधेयः ।

**उपादानम्**—१ समवायिकारणवदस्यार्थोनुसंधेयः । २ [क] प्रवृत्तिप्रयोजकेष्टसाधनताज्ञानम् । (स्व०)

[ख] सुखसाधनत्वज्ञानम् । यथा स्रक्चन्दनवनितादिकं मत्सुखसाधनमिति । (सि० च०) ३ असहकृतं कारणमिति विज्ञानवादिनो बौद्धा वदन्ति । (राम०)

**उपाधिः**—१ निमित्तम्[1] । (स्व०) यथा वायोः प्राणापानादिसंज्ञायां हृदादि[2]स्थानं मुखनिर्गमादिक्रिया चोपाधिः । (मु० १) २ जातिभिन्नो धर्मः । स द्विविधः । सखण्डः । अखण्डः । आद्य आकाशत्वादिः । द्वितीयः प्रतियोगित्वादिः । (सि० च०)

**उपाधिः**[3]–[क] स्वानाधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकः ।

१ प्रयोजकमित्यर्थः । (त० भा०)

२ एतद्वायुनिरूपणावसरे सविस्तरं संपादयिष्यत इत्यत्र विरम्यते ।

३ लक्षणं चोपाधित्वमेव । तच्च [क] पर्यव*सितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । (वै० उ० ३।१।१४) [ख] साध्यव्यापकत्वाश्रयसाधनाव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किंचिद्धर्मव्यापकतावच्छेदकरूपवत्त्वम् । (दीधि०२) [ग] साधनाव्यापकत्वे सति साध्यसम†व्याप्तिः । (सर्व० चार्वा०) [घ] यदभावो व्यभिचारविरोधी तत्त्वम् । (गा० चतु०)

उपाधेः प्रयोजनं तूपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान्वह्नेरित्यादौ 'वह्निर्धूमव्यभिचार्यार्द्रेन्धनव्यभिचारित्वात्' इति । (मु०)

उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । (त० दी०)

* पर्यवसितं च साध्यं, यद्धर्मावच्छेदेनोपाधेर्व्यापकत्वमभग्नं तद्धर्मावच्छिन्नम् । (वै० उ० ३।१।१४)

† साध्यसमव्याप्तिश्च साध्यव्यापकत्वे सति साध्यव्याप्यत्वम् । (स्व०) अत्र शब्दोनित्यत्वे साध्ये सकर्तृकत्वस्य घटत्वस्याश्रावणत्वस्य चोपाधित्ववारणार्थं क्रमेण विशेषणत्रयम । (सर्व० चार्वा०)

[ ख ] स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकवान्[1] । यथा धूमवान्वह्नेरित्यादावार्द्रेन्धनमुपाधिः[2] । यथा वा स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिः[3] ।

[ ग ] साध्यव्यापकत्वे[4] सति साधनाव्यापक उपाधिरित्याचार्याः । (न्या० म० २) (त० सं०)

[ घ ] यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिरिति नव्या वदन्ति । ( दि० गु० ) स उपाधिश्चतुर्विधः । केवलसाध्यव्यापकः । पक्षधर्मावच्छिन्नसाध्यव्यापकः । साधनावच्छिन्नसाध्यव्यापकः । उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्यो, धूमसाध्यकवह्निहेतुकस्थल आर्द्रेन्धनसंयोगः । द्वितीयो, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिः । तृतीयो, ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम् । चतुर्थस्तु, प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम् । ( त०दी०२ )

**उपायः**—कारणवदस्यार्थोनुसंधेयः ।

---

१ *स्वावच्छिन्नानधिकरणहेतुमन्निष्ठयत्किंचिद्धर्मावच्छिन्नसाध्याधिकरणवृत्तियावद्धर्मा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्वानिति परमार्थः । (न्या० म० २)

२ भवन्ति हि, आर्द्रेन्धनत्वावच्छिन्नानधिकरणवह्निमन्निष्ठद्रव्यत्वावच्छिन्नधूमाधिकरणनिष्ठा यावन्तो धर्मा आर्द्रेन्धनत्वावच्छिन्नसमानाधिकरणाः । अतस्तद्वदार्द्रेन्धनमुपाधिः । (न्या० म०)

३ भवन्ति हि, शाकपाकजत्वत्वावच्छिन्नानधिकरणं यन्मित्रातनयत्ववत्तन्निष्ठमित्रातनयत्वावच्छिन्नश्यामत्वाधिकरणं यत्तन्निष्ठा यावन्तो धर्माः शाकपाकजत्वत्वावच्छिन्नसमानाधिकरणाः । अतस्तद्वच्छाकपाकजत्वमुपाधिः । (न्या० म०)

४ एवमेवात्र दीधितिकृदुक्तिः । यो यद्व्यापकत्वे सति† यदव्यापकः स तत्रोपाधिरिति ।

---

* स्वपदमुपाधिवृत्तितत्तद्धर्मपरम् । अन्वयस्तु, स्वावच्छिन्नानधिकरणं यद्धेतुमत्तन्निष्ठो यो यत्किंचिद्धर्मस्तद्धर्मावच्छिन्नं यत्साध्यं तदधिकरणवृत्तयो यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मवानिति । अयमेवोपाधिस्वरूपः ।

† यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः । (मु०) (दि० गु०)

**उपालम्भः**–१ परपक्षदूषणम् । ( गौ०वृ०१।४० ) यथा प्रमाणतर्कसाधनोपालम्भ इत्यादौ । २ अहितेच्छेति काव्यज्ञा वदन्ति ।

**उपासना**–१ मुक्तिप्रयोजकविद्या । ( कु०१ ) २ स्वहितेच्छया प्रयुक्तो महतः संतोषहेतुर्व्यापारः । यथा भृत्यो राजानमुपास्त इत्यादावुपासना । (स्व०)

**उपेक्षा**– सुखदुःखोभयासाधनत्वज्ञानम् । यथा तृणं सुखदुःखासाधनमिति । ( सि०च० )

**उपोद्घातः**–( संगतिः ) [ क ] प्रकृतोपपादकत्वम् । ( दि०२ )

[ ख ] प्रकृतोपसाधकत्वम् । यथा परामर्शजन्यज्ञानत्वरूपेनुमितिलक्षणे विशिष्टपरामर्शस्यानुमितिहेतुत्वमुपोद्घातसंगत्या व्यवस्थाप्यते । ( राम० ) यथा वा प्रमाकरणरूपे प्रमाणे निरूपणीये सत्युपोद्घातसंगत्या करणानिरूपणम् । ( वाक्य० )

[ ग ] चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षत इति मीमांसकाः । ( सर्व०जैमि० )

**उभयत्वम्**[१]– [ क ] उभयव्यवहारविषयतावच्छेदको धर्मः ( गा० सिद्धा० ) यथा घटपटोभयमित्यादौ घटपटोभयपर्याप्तमुभयत्वम् । ( स्व० )

[ ख ] अपेक्षाबुद्धिविशेषविषयत्वमिति केचित् ।

## ऊ.

**ऊर्ध्वा**–( दिक् ) अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिक् । ( वै० उ० २।२।१० ) यथोर्ध्वं गत इत्यादौ ।

**ऊष्मा**–उष्णस्पर्शः । ( राम० ) यथा चक्षुरूष्मादिसंततेः ( मु० १ ) इत्यादौ ।

## ए.

**एकः**–सजातीयनिष्ठभेदाप्रतियोगी । यथायमेको भुङ्क्ते इत्यादावेकपदार्थः । (गा० श०)

**एकत्वम्**–१ एकामिति व्यवहारहेतुः संख्या । यथैको घट इत्यादावेकत्वम् ।

---

१ अयं च धर्मो व्यासज्यवृत्तिर्भवति ।

( स्व० ) २ स्वसजा[1]तीयनिष्ठभेदप्रतियोगितानव[2]च्छेदकैकत्वम् । यथा संपन्नो व्रीहिरित्यादौ व्रीह्यादिगतमेकत्वं सुबर्थः । ( गा० व्यु० १ ) ३ [ क ] आत्मानात्मोभय[3]वृत्तिभिन्नदुःखासमानाधिकरणद्वित्वशून्य[4]त्वम् । ( गा० बाध० ) ( कु० ५ ) ( दि० १ )

[ ख ] स्वाधिक[5]रणावृत्तिस्वभिन्नज्ञानकत्वम् । ( दि० १ )

**एकपदत्वम्**– [ क ] एका[6]र्थविषयकशक्तिनिरूपकत्वम् । यथा राम इति पदस्यैकपदत्वम् ।

[ ख ] शक्तिनिरूपकत्वाभाववदुत्तरत्वे सति शक्तिनिरूपकत्वम् । यथा घट इत्यस्यैकपदत्वम् । ( स्व० )

[ ग ] अखण्ड[7]पदत्वमिति शाब्दिका वदन्ति ।

**एकवाक्यत्वम्**– १ विशि[8]ष्टैकार्थप्रतिपादकत्वम् । ( गा० अव० ) यथा देवदत्तो ग्रामं गच्छतीत्यस्यैकवाक्यत्वम् । ( स्व० ) २ [ क ] तदुत्थाप्य[9]ाकाङ्क्षानिवर्तकत्वतन्निवर्तनीय[10]ाकाङ्क्षोत्थापकत्वान्यतरवत्त्वम् । ( गा० अव० ) यथा प्रतिज्ञादीनां पञ्चानामवयवानामेकवाक्यत्वम् । ( स्व० )

---

१ साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण बोध्यम् । ( गा० व्यु० १ )

२ इदं च पारिभाषिकं जात्येकत्वमिति बोध्यम् ।

३ स्ववृत्तित्वस्वभिन्नवृत्तित्वोभयसंबन्धेन यत्किंचिद्विशिष्टान्यत्वमिति निष्कर्षः ।

४ ईश्वरनित्यज्ञानयोरिदमेकत्वमित्यवधेयम् ।

५ स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकत्वमिति भावः । ( राम० )

६ अत्रार्थनिष्ठमेकत्वं च स्वेतरावृत्तिस्तद्व्यक्तित्वादिरूपोसाधारणधर्म एवेति न काचिदनुपपत्तिरिति ।

७ अत्राखण्डत्वं च पदत्वाभाववदुत्तरखण्डकत्वम् ।

८ निरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकवाक्यत्वमित्यर्थः ।

९ तदुत्थाप्याकाङ्क्षानिवर्तकत्वं च *तत्प्रतिपाद्यार्थविषयकज्ञानजन्या याकाङ्क्षा तत्प्रतियोगिकनिवृत्तिजनकज्ञानजनकत्वम् । इदं च हेतूदाहरणादीनामेकवाक्यत्वम् ।

१० तन्निवर्तनीयाकाङ्क्षोत्थापकत्वं च† तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या निवृत्तिस्तत्प्रतियोग्याकाङ्क्षाजनकज्ञानजनकत्वम् । इदं च प्रतिज्ञादीनामेकवाक्यत्वमित्यवधेयम् ।

---

* अत्र तत्पदं प्रतिज्ञापरम् ।

† अत्र तु तत्पदं हेत्वादिपरम् ।

[ ख ] स्वभिन्नत्वस्वानवच्छिन्नत्वस्वसामानाधिकरण्यैतत्त्रितयसंबन्धेन विषयताविशिष्टविषयताशून्यबोधजनकवाक्यत्वमिति गुरुचरणाः प्राहुः ।

**एकविशेषबाधः**—इतरबाधग्रहवदस्यार्थोनुसंधेयः ।

**एकमात्रवृत्तित्वम्**—१ स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वम्[1] । ( राम० ) यथाकाशत्वस्यैकमात्रवृत्तित्वम् । ( स्व० ) २ [ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वम् । [ ख ] एकत्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वम् । ( दि० गु० ) यथा रूपरसादिगुणानामेकैकवृत्तित्वम् । ( भा० प० गु० )

**एकार्थसमवायः**—स्वसमवायिसमवेतत्वम् । यथैकं रूपमित्यादावेकत्वरूपयोरेकार्थसमवायः । ( स्व० )

**एकैकवृत्तिगुणत्वम्**[2]—१ [ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वे सति गुणत्वम् ।

[ ख ] स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिगुणत्वम् । ( दि० गु० )

**एतत्**—प्रत्यक्षबुद्धिविषयः । ( दि० ४ ) ( गा० श० ) यथैतज्जलमिति प्रत्यक्षे विषयो जलम् । ( स्व० )

**एव**—एवकारार्थस्तु त्रिविध इति प्राञ्चः । तथा हि । विशेषणसंगतः । विशेष्यसंगतः । क्रियासंगतश्चेति । तत्राद्यः । अयोगव्यवच्छेदः । यथा शङ्खः पाण्डुर एवेत्यादौ[3] । द्वितीयः । अन्ययोगव्यवच्छेदः । यथा पार्थ एव धनुर्धर इत्यादौ[4] । ( नील० ) तृतीयः । अत्यन्तायोगव्यवच्छेदः । यथा

---

१ इदं च जातित्वे बाधकम् । इदमेवासाधारणधर्म इत्यत्रासाधारणत्वमिति जेगीयते ।

२ एकैकवृत्तिगुणाश्च, रूपादिचतुष्टयमेकत्वं परिमाणमेकपृथक्त्वं परत्वादिसंस्कारान्ताः पञ्चदश चेति । (मु० गु०)

३ अत्र शङ्खत्वावच्छेदेन पाण्डुरत्वायोगव्यवच्छेदो बुध्यते ।

४ अत्र धनुर्धरे पार्थान्यतादात्म्यव्यवच्छेदो बुध्यते ।

नीलं सरोजं भवत्येवेत्यादौ[1] । शिरोमणिभट्टाचार्यस्तु सर्वत्रान्ययोगव्यवच्छेदेनैवोपपत्तावयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदौ न स्वीकार्यावित्यवीवदत् ।

## ऐ.

**ऐकान्तिकः**—एकमात्रव्याप्तिग्राहकसहचारः । (गौ० वृ० १।४५) यथानैकान्तिक इत्यादौ ।

**ऐतिह्यम्**—[क] इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यम् । (वात्स्या० २।२।१)

[ख] अनिर्दिष्टप्रवक्तृकं परंपरागतं वाक्यम् । यथा वटेवटे यक्ष इत्यादि । तद्धि, इति होचुरित्यनेन प्रकारेण यदुच्यते । (गौ० वृ० २।६९)

[ग] अज्ञातमूल[2]वक्तृकः शब्दः । यथा इह वटे यक्षस्तिष्ठतीति । (त० दी० )

**ऐशानी**—(दिक्) सुमेरुसंनिहितोदयगिरिसंनिहिता च दिक् । (वै० उ० २।२।१०) यथा झळकीग्रामत ऐशान्यामक्कलकोटग्रामः । (स्व० )

## क.

**कठिनत्वम्**—१ अवयवसंयोगविशेषः । (त० दी० १) २ स्पर्शविशेषः । (सि० च० )

**कथा**—[क] नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः । (त० भा० ) (त० दी० )

[ख] तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यो न्यायानुगतवचनसंदर्भः । (गौ० वृ० १।४१)

[ग] वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः । (सर्व० अक्ष० )

---

१ अत्र चान्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदो बुध्यते ।

२ विशिष्यानिश्चितप्रथमवक्तृकः शब्द इत्यर्थः । (नील० )

[ घ ] विचारसमयः। ( गा० अव० ) तिस्रः कथा भवन्ति। वादो जल्पो वितण्डा चेति। (वात्स्या० १।२।४२)

**कथाभासः**[1]–यत्र वादिप्रतिवादिभ्यां परस्परमसद्दूषणमुद्भाव्यते सः। ( स्व० ) यथा, प्रतिषेधेपि समानो दोषः। ( गौ० ५।३९ ) शब्दोनित्यः प्रयत्नानन्तरीयकत्वादित्यत्र प्रयत्नानन्तरीयकत्वं न शब्दानित्यत्वं साधयत्यनैकान्तिकत्वादिति यो दोषः स त्वत्पक्षेपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वादिति। ( गौ० वृ० ५।३९ )

**कनिष्ठत्वम्**–[ क ] अल्पतरस्पन्दान्तरितजन्मत्वम्। ( दि० गु० )

[ ख ] कालकृतमपरत्वम्। ( सि० च० ) यथा लक्ष्मणस्य राममपेक्ष्य कनिष्ठत्वम्। ( स्व० )

**करणम्**–[ क ] तत् यस्मिन्सति क्रिया भवत्येव। ( चि० ४ )

[ ख ] साधकतमम्। ( त० भा० )

[ ग ] व्यापारवदसाधारणकारणम्[2]। ( न्या० म० १ ) ( न्या० बो० ) ( मु० ) (त० सं०) यथानुमितिं प्रति व्याप्तिज्ञानं करणम्। (नील०)

[ घ ] फलायोगव्यवच्छिन्नं कारणम्[3]। ( नील० ) (सि० च०) यथानुमितिं प्रति परामर्शः करणम्। ( त० सं० ) ( नील० )

---

१ अत्र षट्पक्षाः * प्रवर्तन्ते। तथा हि। शब्दोनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्यसम इति प्रतिवादिनो द्वितीयः पक्षः। प्रतिषेधाप्रतिषेधेप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः। विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः। ( गौ०वृ०५।४१ ) प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानप्रसङ्गो मतानुज्ञा। ( गौ०५।४२ ) इति पञ्चमः पक्षः। स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः। ( गौ०५।४३ ) इति षष्ठः पक्षः।

२ जनकतासंबन्धेन स्वजनकवत्त्वे सति स्वासाधारण † कारणमित्यर्थः। ( वाक्य० ) इदं प्राचीनमतम्।

३ इदं च नवीनमतम्।

---

* अत्र च त्रयः पक्षा अपि संभवेयुः।

† अत्रासाधारणत्वं च कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। ( वाक्य० )

[ ङ ] यद्विलम्बात्प्रकृतकार्यानुत्पादस्तदिति नव्याः । ( नील० )

[ च ] क्रियामात्रजनकत्वे सति व्यापारवदिति शाब्दिका वदन्ति ।

**कर्तृत्वम्**—१ [ क ] क्रियायाः कृतेर्वा[1] समवायित्वम् । ( चि० १ )

[ ख ] उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्[2] । यथा कुलालस्य घटकर्तृत्वम् । ( त० दी० )

[ ग ] इतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम् । ( सर्व० अक्ष० ) यथा चैत्रो ग्रामं गच्छतीत्यादौ चैत्रस्य कर्तृत्वम् ।

[ घ ] क्वचित्, व्यापाराश्रयत्वम्[3] । यथा रथो गच्छतीत्यादौ रथस्य कर्तृत्वम् ।

[ ङ ] प्रतियोगित्वम्[3] । यथा घटो नश्यतीत्यादौ घटस्य कर्तृत्वम् । (स्व०)

[ च ] कर्तृप्रत्ययसमभिव्याहारस्थले प्रधानीभूतधात्वर्थाश्रयत्वमिति[4] शाब्दिका वदन्ति । कर्तृत्वं द्विविधम् । मुख्यम् । गौणम् । तत्राद्यं कृतिमत्त्वम् । द्वितीयमाश्रयत्वप्रतियोगित्वादि । (स्व०) २ कृत्यवच्छेदकत्वम्[5] । यथा शरीरस्य कृत्यवच्छेदकत्वम् । ( गौ० वृ० ३।६ )

**कर्म**[6]—( पदार्थः ) १ [ क ] एकद्रव्यम्[7] अगुणं संयोगविभागेष्वनपेक्षकारणम्[8] । ( वै० १।१।१७ )

[ ख ] स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षम् । ( वै० उ० १।१।१७ )

[ ग ] चलनात्मकम् । ( त० सं० )

---

१ इदं नव्यमतानुसारि मुख्यं कर्तृत्वम् ।

२ इदं च प्राचीनमतानुसारि मुख्यं कर्तृत्वम् ।

३ इमे च सर्वेषां मते गौणे कर्तृत्वे ।

४ तच्चेतरव्यापारानधीनव्यापाराश्रयत्वमित्यर्थः ।

५ अत्र कृतिपदं ज्ञानेच्छयोरुपलक्षणम् ।

६ तल्लक्षणं च [ क ] विभागासमवायिकारणत्वे सति संयोगहेतुत्वम् । ( दि० गु० ) [ ख ] नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिरूपं कर्मत्वम् । ( वै०उ०१।१।१७ ) [ ग ] स्वोत्तरवृत्तिभावान्तरानपेक्षत्वमिति वैशेषिकाः । ( मु० गु० )

७ अत्रैकद्रव्यत्वं चैकमात्रमूर्तसमवायिकारणकत्वम् । ( वै०उ०१।१।१७ )

८ संयोगविभागानुकूलमित्यर्थः । ( वाक्य० )

[घ] संयोगभिन्नत्वे सति संयोगासमवायिकारणम् ।

[ङ] कर्मत्वजातिमत् । (त० दी० १) २ संयोग इति भूषणमतम् । (दि० १) कर्म पञ्चविधम् । उत्क्षेपणम् । अपक्षेपणम् । आकुञ्चनम् । प्रसारणम् । गमनम् । (त०सं०) गमनं[1] बहुविधम् । भ्रमणम्[2] । रेचनम् । स्पन्दनम् । ऊर्ध्वज्वलनम् । तिर्यग्गमनमित्यादि । (भा० प० १)

कर्म—[क] परसमवेतक्रियाफलशालि[3] । (चि० १)

[ख] फलाश्रयत्वेष्टम्[4] । (गा० व्यु० ४) यथा देवदत्तो ग्रामं गच्छतीत्यादौ ग्रामः कर्म । (स्व०)

[ग] करणव्यापारविषयः । (चि० १) यथा कुठारेण वृक्षं छिनत्तीत्यादौ वृक्षः कर्म । (स्व०)

[घ] क्वचित्, विषयः कर्म । (त० प्र०) यथा घटं जानातीत्यादौ घटः कर्म ।

[ङ] क्वचित्, प्रतियोग्यादि । यथा घटं नाशयतीत्यादौ घटः कर्मेति । (स्व०) कर्म हि त्रिविधं[5] भवति । प्राप्यम् । प्रकृतिः । विकृतिः । तत्राद्यं क्रियाजन्यफलशालि । यथा गम्यादेर्ग्रामादि ज्ञानादेर्विषयश्च । द्वितीयं च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वत्रावशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत् । यथा पाकादेस्तण्डुलादि कृतेश्च पुष्पकाशादि । तृतीयं

---

१ तल्लक्षणं चोत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्वव्याप्यजातिमत्त्वम् ।

२ भ्रमणादिप्रकारोऽश्वगत्यादौ प्रसिद्ध इति श्रूयते ।

3 अत्र, क्रियाजन्यफलशालि कर्मेति प्राञ्चो वदन्ति । नव्यास्तु धात्वर्थतावच्छेदकफलशालि कर्मेति । (गा०व्यु०२)

४ अत्र शाब्दिकाश्च, प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनेच्छोद्देश्यं कर्मेति वदन्ति ।

५ तत्र प्रकृतिविकृती कर्मणी विकार्यशब्देन व्यवह्रियेते । (गा० व्यु०२) शाब्दिकमते तु सप्तविधं कर्म । तदुक्तम् । निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥ औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकमिति ॥

च क्रियानिष्पाद्यं यत्तत् । यथा पाकादेरोदनादि । यथा वा कृतेर्मल्यादि कटादि चेति । ( गा० व्यु० २ ) प्रकारान्तरेण कर्म द्विविधम् । प्रधानकर्म । अप्रधानकर्म । यथा गां दोग्धि पय इत्यादौ पयः प्रधानकर्म, गौस्त्वप्रधानकर्मेति । ( स्व० )

**कर्मप्रवचनीयः**—क्रियानुयोगिकसंबन्धविशेषद्योतकत्वे सत्यन्वाद्यन्यतमः । यथानूपादिः[1] ( स्व० )

**कलिकापूर्वम्**[2]—(अपूर्वम्) परमापूर्वजनकमपूर्वम् । यथोत्पत्त्यपूर्वाणि[3] । (दि० गु०)

**कल्पनम्**—अनुमानवदस्यार्थोनुसंधेयः । ( दि० १) ( नील० )

**काम्यत्वम्**—१ अभिलाषविषयत्वम् । (मु०) यथा भोजनादेः काम्यत्वम् । (स्व०) २ आरब्धकर्मोत्पत्तिकामनाधीनकामनाविषयत्वमिति मीमांसकाः । ( मू० म० १ )

**कायिकः**—( नमस्कारः ) कराशिरःसंयोगाद्यनुकूलचेष्टाविशेषः । ( मू० म० १) यथा देवदत्तः कराभ्यां यज्ञदत्तं नमस्करोतीत्यादौ कायिको नमस्कारः । ( स्व० )

**कारणगुणपूर्वकत्वम्**—कारणगुणोत्पन्नत्ववदस्यार्थोनुसंधेयः ।

**कारणगुणोत्पन्नगुणत्वम्**[4]—स्वाश्रयसमवायिमात्रसमवेतस्वसजातीय[5]गुणजन्यवृत्तिः

---

१ कर्मप्रवचनीया एकादश । अनु । उप । अप । परि । आङ् । प्रति । अभि । अधि । सु । अति । अपि ।

२ कालिकापूर्वमिति क्वचित्पाठः ।

3 उत्पत्त्यपूर्वाणि च पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आग्नेयादिभ्य उत्पन्नानि षट् । पञ्च वाक्यानि तु, यदाग्नेयोष्टाकपालोमावास्यायां च पौर्णमास्यां चाच्युतो भवति । ( तैत्तिरीयसंहिता २।६।3 ) उपांशु याजमन्तरा यजति । ( तै०२।६।६ ) ताभ्यामेतदग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छन् । ( तै०२।५।२ ) ऐन्द्रं दध्यमावास्यायाम् । ( तै०२।५।४ ) ऐन्द्रं पयोमावास्यायामिति । दि०गु० )

४ कारणगुणोत्पन्नगुणाश्च, अपाकजं रूपादित्रयमनुष्णः स्पर्शोपाकजं द्रवत्वं स्नेहवेगगुरुत्वैकत्वान्यैकपृथक्त्वं परिमाणं स्थितिस्थापकश्चेति । ( भा० प० गु० )

५ अत्र साजात्यं च गुणत्वव्याप्यव्याप्यजात्या विवक्षणीयम् । ( दि० गु० )

पृथक्त्वसंख्यात्वातिरिक्ता भावनावृत्त्यन्या च या जातिस्तादृशजातिमत्त्वे सत्यपाकजत्वम् । ( दि० गु० )

**कारणगुणोत्पन्नत्वम्**—स्वाश्रयसमवायिसमवेतगुणजन्यत्वम् । ( दि० गु० ) यथा कार्यजलसमवेतरूपस्य कारणगुणोत्पन्नत्वम् । ( स्व० )

**कारणम्**[1]—[ क ] यस्य कार्यात्पूर्वभावो नियतोनन्यथासिद्धश्च तत् । ( त० भा० १ )

[ ख ] अनन्यथासिद्धकार्यनियत[2]पूर्ववृत्ति । यथा तन्तुवेमादिकं पटस्य कारणम् । प्रतिबन्धकसंसर्गाभावः कार्यमात्रं प्रति कारणमिति प्राञ्चः । प्राभाकरास्तु कारणमात्रं कार्यसह[3]भावनिरूपकमेव सत् कार्यकारीति, प्रतिबन्धकाभावोपि कार्यसह[4]भावेन कारणमिति च वदन्ति । कारणं द्विविधम् । मुख्यम् । अमुख्य[5]म् । मुख्यं यथानुमितौ परामर्शः, अमुख्यं तु सहचारज्ञानम् । मुख्यं तावत्त्रिविधम् । समवायि । असमवायि । नि-

---

१ तल्लक्षणं च कारणत्वमेव । तच्च [ क ] कार्या*नुकृतान्वयव्यतिरेकस्वरूपम् । ( त० भा० ४ ) [ ख ] कार्याधिकरणवृत्तिर्या स्वप्रतियोग्यधिकरणता तदनवच्छेदककार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति कार्याधिकरणे सत्त्वम् । ( त० प्र० २ ) [ ग ] कार्याधिकरणनिरूपितनिरवच्छिन्नाधेयतावदभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति कार्याव्यवहितपूर्वकालसंबन्धः । ( स्व० ) [ घ ] †स्वाव्यवहितपूर्ववृत्तिस्वस्वव्यापारान्यतरकत्वम् । ( दि० ४ )

२ [ क ] कार्यान्नियतावश्यंभाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्यस्य तत्तथेत्यर्थः । ( सि० च० ) [ ख ] नियतान्यथासिद्धभिन्नत्वे सति कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणदेशनिरूपिताधेयतावदभावप्रतियोगितानवच्छेदकधर्मवदित्यर्थः । ( वाक्य० ) ( नील० )

३ कार्यसहभावनिरूपकत्वं चात्र कार्योत्पत्तिक्षणावच्छिन्ना याधिकरणता तन्निरूपकत्वम् ।

४ तदर्थश्च, स्वोत्पत्तिस्वाव्यवहितपूर्वत्वान्यतरसंबन्धेन यदा कार्यं तदा प्रतिबन्धकाभावादिरिति प्रत्यासत्त्या कारणमिति । ( मू० म० १ ) यथा दाहोत्पत्तिकाले मण्याद्यभावः ।

५ तदेवान्यथासिद्धमिति जेगीयते ।

---

* कार्यानुकृदिति पाठान्तरम् । ( त० भा० )

† इदं कारणत्वं च व्यापारद्वारापि कारणसाधारणमिति विज्ञेयम् ।

मित्तम् । तत्र प्रथमद्वितीये च कारणे असाधारणे एव । तृतीयं च साधारणासाधारणभेदेन द्विविधम् । तत्र साधारणकारणान्यष्टौ । ईश्वरस्तज्ज्ञानेच्छाकृतयः प्रागभावो दिक्कालादृष्टमिति । असाधारणं च कार्यभेदेन बहुविधम् । अमुख्यं तु कारणं निमित्तमेवानेकधा चेति । ( त० सं० ) ( वाक्य० ) ( स्व० )

**कारुण्यम्**—स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा । ( सर्व० अक्ष० )

**कार्पण्यम्**[1]—उचितव्ययाकरणेनापि धनरक्षणेच्छा । ( गौ० वृ० ४।३ )

**कार्यम्**[2]—[ क ] प्रागभावप्रतियोगि । ( त० सं० १ )

[ ख ] जन्यम्[3] । ( वाक्य० ) यथा घटपटादि । ( स्व० )

**कार्यसमः**[4]—( जातिः ) [ क ] प्रयत्नकार्यानेकत्वात्कार्यसमः । ( गौ० ५।३७ ) प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति । यस्य प्रयत्नानन्तरमात्मलाभस्तत्खल्वभूत्वा भवति । यथा घटादिकार्यमनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते । एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते । कार्याविशेषेण प्रत्यवस्थानं कार्यसमः । ( वात्स्या० ५।१।३७ )

[ ख ] सामान्यत उक्ते हेतोरनभिमतविशेषनिराकरणेन प्रत्यवस्थानम् । यथा शब्दोनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टम् । तत्र

---

१ कार्पण्यमपि तृष्णाप्रभेद एव । ( गौ० वृ० ४।३ )

२ लक्षणं च कार्यत्वमेव । तच्च [ क ] स्वाश्रयप्रतियोगिताकत्वसंबन्धेन प्रागभाववत्त्वकत्वम् । ( कु० ५ ) [ ख ] अनन्यथासिद्धनियतपश्चाद्भावित्वम् । ( त० भा० १ ) [ ग ] स्वरूपसंबन्धविशेषः । ( दि० १ )

3 अत्र चतुर्धा विप्रतिपत्तिः । असतः सज्जायत इति सौगताः संगिरन्ते । सतोसज्जायत इति नैयायिकादयः । सतो विवर्तं कार्यजातं, न वस्तु सदिति मायावादिनो वेदान्तिनः । सतः सज्जायत इति सांख्याः । ( सर्व० सांख्य० )

४ अस्याकृतिगणत्वात्सूत्रानुपदर्शितानामपि परिग्रहः । यथा शाठीसमानुपकारसमेत्यादि । ( गौ० वृ० ५।३७ ) क्वचित् , कारणसमेति पाठः । तस्याप्ययमेवार्थः । ( नील० )

द्वितीयं न जन्यत्वसाधकम् । आद्ये त्वसिद्धम् । (गौ० वृ० ५।२७)(नील०)

[ ग ] वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानम् । ( नील० )

**कार्यैक्यम्**–( संगतिः ) एककार्यानुकूलत्वम् । ( राम० ) यथा व्याप्तिपक्षधर्मतयोरनुमितिलक्षणकार्यैक्यं संगतिः । ( दीधि० पक्ष० )

**कालः**[१]–( द्रव्यम् ) [ क ] विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणम् । ( सर्व० औलु० )

[ ख ] दिग्विपरीतपरत्वापरत्वानुमेयः । ( त० भा० )

[ ग ] अपरमिति प्रत्ययो युगपदिति प्रत्ययश्चिरमिति प्रत्ययः काललिङ्गानि । ( वै० उ० २।२।६ )

[ घ ] परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणं द्रव्यम् । ( वै० उ० ७।१।२५ ) ( भा० प० )

[ ङ ] अतीतादिव्यवहारहेतुः । स ऐको[२] विभुर्नित्यश्च । ( त० सं० ) काले संख्यादयः पञ्च गुणा वर्तन्ते । (त० भा०) (भा० प० १) (मु०)

**कालातीतः**–कालात्ययापदिष्टवदस्यार्थोनुसंधेयः । ( गौ० १।४९ )

**कालात्ययापदिष्टः**[३]–( हेत्वाभासः ) १ [ क ] कालात्ययेन युक्तो यस्यार्थस्यैकदेशोपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम् । नित्यः शब्दः संयोगव्यङ्ग्यत्वाद्रूपवत् । (वात्स्या० १।२।५०)

---

१ लक्षणं तु कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिताधिकरणतया निमित्तत्वम् । ( दि० १।२ ) कालसत्त्वे प्रमाणं चानुमानम् । तच्च, परत्वापरत्वे सासमवायि*कारणके भावकार्यत्वाद्घटवदिति । ( दि० १ )

२ कालस्त्वेकोऽप्युपाधि†भेदादतीतानागतक्षणदिनवर्षादिव्यवहारः ।

३ कालस्य साधनकालस्यात्ययेऽभावे प्रदिष्टः प्रयुक्तो हेतुः । एतेन साध्याभावप्रमा लक्षणार्थ इति सूचितम् । अयमेव बाधितसाध्यक इति गीयते । यथा वह्निरनुष्णः कृतकत्वादित्यादौ । ( गौ० वृ० १।४२ )

---

* अत्रासमवायिकारणं च कालपिण्डसंयोग एव । तदाश्रयः काल इति । ( दि० १ )

† अत्रोपाधिस्तु कालोपाधिशब्दव्याख्यानावसरे संग्रहिष्यते ।

[ ख ] यस्य प्रत्यक्षादिप्रमाणेन पक्षे साध्याभावः परिच्छिन्नः सः । स एव बाधितविषय इत्युच्यते । यथाग्निरनुष्णः पदार्थत्वाज्जलवदिति ।

[ ग ] बाधितवदस्यार्थोनुसंधेयः । २ बाधवदस्यार्थोनुसंधेयः । ( त० भा० )

**कालिकविशेषणता**—( स्वरूपसंबन्धः ) कालिकसंबन्धवदस्यार्थोनुसंधेयः ।

**कालिकसंबन्धः**[1]—कालेन वस्तुनः संबन्धः[2] । यथा कालगन्धयोः[3] संबन्धः । (स्व०)

**कालीनत्वम्**[4]—कालवृत्तित्वम् । यथा घटकालीनः पट इत्यादौ पटस्य घटकालीनत्वम् । ( स्व० )

**कालोपाधिः**—क्षणदिनादिव्यवहारोपपादको धर्मः । ( स्व० ) यथा जन्यमात्रं क्रियामात्रं वा कालोपाधिः । ( सि० च० ) स चतुर्विधः[5] । स्वजन्यविभागप्रागभावावच्छिन्नं कर्म । पूर्वसंयोगावच्छिन्नविभागः । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः । उत्तरसंयोगावच्छिन्नं कर्म । ( मु० १ )

**किम्**—१ जिज्ञासितम्[6] । ( गा० श० ) ( दि० ४ ) यथा किं तव नामधेयमित्यादौ । (स्व० ) २ वितर्कः । स च प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा, किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं किमब्जे किं मीनौ

१ स च सर्वाधारताप्रयोजकसंबन्ध इति जैगीषते ।

२ स च स्वरूपादनतिरिक्त इत्यन्ये । ( गा० सिद्धा० )

३ अत्र च कालातिरिक्ते नित्ये कालिकायोगादिति सिद्धान्तः ।

४ प्राक्कालीनोत्तरकालीनार्वाक्कालीनप्रभृतिप्रयोगेषु खप्रत्ययो दृश्यते । स चानुक्तोप्यव*गन्तव्यः । अन्यथा बहुतरलक्ष्यक्षतिप्रसङ्गः स्यात् । ( गण० )

५. अत्र, प्रथमक्षणे क्रियोत्पद्यते । अनन्तरं क्रियातो विभागस्ततः पूर्वसंयोगनाशस्तत उत्तरदेशसंयोग उत्पद्यत इति क्षणचतुष्टयनियम, इति नैयायिकप्रक्रिया ।

६ अत्र, उद्देश्यवाचककिंपदप्रवृत्तिनिमित्तं च समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः । यथा कः पचतीत्यादौ । एवं विधेयवाचककिंपदप्रवृत्तिनिमित्तं च स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्मः सः । यथा, अयं क इत्यादौ । ( गा० श० )

* अत्र च, 'कालाट्ठञ्' (४।३।११ ) इति पाणिनिसूत्रे कालादिति योगं विभज्य युष्मदस्मदोरन्यतरस्यां खञ् च इति सूत्रान्मण्डूकप्लुत्या खञनुवर्त्य विधेय इत्याकूतम् ।

किमु मदनबाणौ किमु दृशा[1]वित्यादौ किंशब्दार्थः । ३ कुत्सा । यथा किंगौरित्यादौ । ( गा० श० )

कुर्वद्रूपत्वम्—यत्किंचित्कार्यजनकतावच्छेदकतया सिद्धो जातिविशेषः । यथा विज्ञानवादिमतेऽङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिर्बीजत्वव्याप्या जातिः । ( दि० १ ) ( राम० )

कृतिः—प्रयत्नः । स च प्रवृत्तिरूपः । ( मु० ) यथा घटं करोतीत्यादौ धात्वर्थः ( स्व० )

कृषिः—[ क ] विलेखनम्[2] । यथा भूतिभुजः कर्षन्ति हलैरित्यादौ धात्वर्थः । ( स्व० )

[ ख ] क्वचित्, प्रतिविधानम्[3] । यथा पञ्चभिर्हलैः कर्षति गृहीत्यादौ धात्वर्थः । ( गा० व्यु० ३ )

केवलव्यतिरेकि[4]—( लिङ्गम् ) [ क ] अगृहीतान्वयव्यतिरेकिसाध्यकम् । ( दीधि० २ )

[ ख ] असत्सपक्षः[5] । ( मु० ) ( न्या० म० २ )

[ ग ] व्यतिरेकमात्रव्याप्तिकम् । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वा[6]दित्यत्र गन्धवत्त्वं केवलव्यतिरेकि । ( त० सं० ) ( न्या० म० २ )

केवलान्वयि[7]—यो धर्मः सर्वत्र वर्तते यस्य चात्यन्ताभावोऽप्रसिद्धः सः । यथा प्रमेयत्वमभिधेयत्वं ज्ञेयत्वादि । ( स्व० )

---

१ अत्रोत्तरार्धे तु ' तडिद्वा तारा वा कनकलतिका वा किमबला खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ' इति ।

२ विलेखनं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारः ।

३ प्रतिविधानं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारानुकूलव्यापारः ।

४ केवलव्यतिरेकि तु चतूरूपोपपन्नं भवति । चत्वारि रूपाणि च, पक्षधर्मत्वम् । विपक्षाद्व्यावृत्तिः । अबाधितविषयत्वम् । असत्प्रतिपक्षत्वं चेति । ( सि० च० )

५ असत्सपक्षत्वं च पक्षातिरिक्तोनिश्चितसाध्यसाधनसहचारकत्वम् । ( न्या० म० २ )

६ अत्र सपक्षो नास्ति । ( मु० २ )

७ लक्षणं च केवलान्वयित्वमेव । तच्च [ क ] अत्यन्ताभावाप्रतियोगित्वम् । ( त० दी० ) ( न्या० बो० ) [ ख ] वृत्तिमदत्यन्ताभावाप्रतियोगित्वम् । ( मु० )

**केवलान्वयि**[1]–(लिङ्गम्) [ क ] अत्यन्ताभावाप्रतियोगिसाध्यकम् । (दीधि० २) [ ख ] असद्विपक्षः । यथा ज्ञेयमभिधेयत्वा[2]दित्यादौ । (मु०)

[ ग ] अन्वयमा[3]त्रव्याप्तिकम् । यथा घटोभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वं केवलान्वयि । (त० सं०)

**केवलान्वयि**–(अवयवः) अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणं पक्षसपक्षवचनम् । (चि० अव०) यथा घटोभिधेयः प्रमेयत्वादित्यादौ प्रमेयत्वादिति हेतुपदम् । (स्व०)

**कोटिता**–प्रकारता । (गा० सत्प्र०) यथा वह्निमान्न वेति संशये वन्ह्यादेः कोटिता । (स्व०)

**कोमलत्वम्**–१ स्पर्शविशेषः । २ अवयवसंयोगविशेष इति केचित् । (सि० च०)

**क्त्वा**–(प्रत्ययः) [ क ] पूर्व[4]कालीनत्वं तदर्थः । (तर्का० ४)

[ ख ] उत्तरकालीनत्वम् । यथा भुक्त्वा व्रजतीत्यादौ व्रजनस्य भोजनोत्तरकालीनत्वम् । (स्व०)

**क्रमः**–उद्दिष्टानामर्थवशाद्यथावद्ग्रहणम् । यथा द्रव्यानिरूपणानन्तरं क्रमेण गुणादिकं निरूप्यत इत्यादौ । (स्व०)

**क्रियात्वम्**–१ [ क ] कर्मत्वापरनामा कर्मवृत्तिर्जातिविशेषः । यथा चैत्रस्तण्डुलं पचतीत्यादौ पचनादिक्रियायाः क्रियात्वम् । (स्व०)

[ ख ] साध्यत्वसाधनत्वान्यतररूपेण प्रतीयमानत्वमिति शाब्दिका वदन्ति । २ प्रवृत्तिविषयत्वमिति मीमांसकाः । (मू० म० १)

**क्रोधः**–नेत्रलौहित्यादिहेतुर्दोषविशेषः । (गौ० वृ० ४।३)

**क्लेदः**–१ [ क ] जलविशेषः । (गौ० वृ० ३।३१)

---

१ केवलान्वयि तु चतूरूपोपपन्नं भवति । चत्वारि रूपाणि च, पक्षधर्मत्वम् । सपक्षे सत्त्वम् । अबाधितविषयत्वम् । असत्प्रतिपक्षत्वं चेति । (सि० च० २)

२ अत्र विपक्षो नास्ति । (मु० २)

३ व्यतिरेकाप्रतियोगिसाध्यकमित्यर्थः । (वाक्य०)

४ अत्र पूर्वत्वं च संनिहितक्रियापेक्षया बोध्यम् । (तर्का० ४)

[ ख ] क्षरणम्[१] । (दि० १) २ जलविशिष्टपृथिवी । (गौ० वृ० ३।२।१)

क्षणः[२]–(कालः) [ क ] वर्तमानार्थग्राहित्वेन स्वोत्पत्त्याश्रयः । (मू० म० १)

[ ख ] स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयः ।(दि० १।२)

क्षणिकत्वम्–[ क ] तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । यथा योग्यविभुविशेषगुणानां[३] ज्ञानादीनां क्षणिकत्वम् (मु०)

[ ख ] द्वितीयक्षणोत्पन्नध्वंसप्रतियोगित्वमिति बौद्धा आहुः । (स्व० )

क्षेमः–सिद्धस्य रक्षणम् । ( दि० गु० )

## ख.

खण्डप्रलयः–( प्रलयः ) [ क ] कार्यद्रव्यानधिकरणकार्याधिकरणकालः । ( न्या० म० ४ ) ( दि० ४ )

[ ख ] सर्वकार्यद्रव्यध्वंसः । ( त० दी० १ ) यथा युगप्रलयः । ( स्व० )

ख्यातिः–अयथार्थज्ञानम् । (स्व०) सा त्रिविधा[४] । असत्ख्यातिः । अन्यथाख्यातिः । उभयख्यातिः । आद्या तु स्वयमूह्या[५] । द्वितीया । रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वविशिष्टख्यातिः । तृतीया । शुक्तिविशेष्यकरजतत्वप्रकारकख्यातिः । ( मू० म० १ ) षड्विधा ख्यातिरित्यन्ये ।

## ग.

गन्धः[६]–( गुणः ) [ क ] घ्राणग्रहणो योऽर्थः सः । ( वै० उ० ३।१।१ )

---

१ स्वेद इति यावत् । (दि० १)

२ तल्लक्षणं तु क्षणत्वमेव । तच्च स्ववृत्तियावद्ध्वंसविशिष्टत्वम् । (गा० सार्व० पक्ष०)

३ अत्र च योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वमिति सिद्धान्तोऽनुसंधेयः ।

४ अत्र चैवं श्रूयते, त्रिविधोऽयं प्रकारो मीमांसकमत एव । नैयायिकास्त्वन्यथाख्यातिमेव स्वीकुर्वन्ति न त्वन्यामिति ।

५ शशविषाणकूर्मरोमादिविषयकख्यातिरिति ।

६ स च पृथिवीमात्रवृत्तिः । (त० सं०) बाह्यैकेन्द्रियग्राह्यश्च । (वै० उ० ३।१।१) गन्धलक्षणं च गन्धत्वमेव । तच्च [ क ] घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वम । [ ख ] पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् । (वै० उ० ३।१।१) (७।१।६)

[ख] घ्राणमात्र[1]ग्राह्यो गुणः। (वै० उ० ७।१।६) स च द्विविधः। सुरभिः। असुरभिः। पृथिव्यां पाकजोनित्यश्च। (त० सं०)

**गीतम्**–[क] छन्दस्यहार्दान्यतरस्वरेण गुणकीर्तनम्। यथा ध्रुवकादिगानम् (स्व०)

[ख] गान्धर्वशास्त्रसमयानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां चिन्तनमिति नकुलीशाचार्यो वक्ति। (सर्व० नकु०)

**गमनम्**–(कर्म) उत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्ववत्। (स्व०) यथा ग्रामं गच्छतीत्यादौ संयोगावच्छिन्नस्पन्दो[2] गच्छत्यर्थः। (गा० व्यु० २)

**गुणः**–प्रमासाधा[3]रणकारणम्। यथा प्रत्यक्षे संनिकर्षः। अनुमितौ च परामर्शो गुणः। (भा० प०) (त० दी०)

**गुणः**–(पदार्थः[4]) १ [क] सामान्यवानसमवायिकारणमस्पन्दात्मा। (त० भा०)

[ख] द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमान्। (मु० गु०)

[ग] द्रव्यकर्मभिन्नत्वे सति सामान्यवान्।

[घ] गुणत्वरूपजातिमान्। (त० दी०) २ सत्त्वे निविशतेपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोसत्त्वप्रकृतिर्गुण इति शाब्दिका

---

१ अत्र मात्रपदप्रयोजनं चिन्त्यम्।

२ एवं सकर्मकधातूनामर्थाः स्वयमूह्याः। (गा० व्यु० २)

३ प्रमात्वाधिकरदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः। (नील० ४)

४ तल्लक्षणं च गुणत्वमेव। तच्च, [क] समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम्। [ख] कार्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा। (वै०उ०७।१।१) [ग] समवायिकारणासमवायिकारणभिन्नसमवेतसत्तासाक्षाद्व्याप्यजातिः। (सर्व०औलु०) [घ] द्रव्येतरवृत्तितानवच्छेदकद्रव्यसामान्यवृत्तितावच्छेदकपदार्थविभाजकोपाधिमत्त्वम्। (वाक्य०)

वदन्ति । न्यायनये गुणाश्चतुर्विंशतिः । रूपं[1] रसो गन्धः स्पर्शः संख्या परिमाणं पृथक्त्वं संयोगो विभागः परत्वमपरत्वं गुरुत्वं द्रवत्वं स्नेहः शब्दो बुद्धिः सुखं दुःखमिच्छा द्वेषः प्रयत्नो धर्मोऽधर्मः संस्कार इति । रूपाद्यपरत्वान्ता बुद्ध्यादिप्रयत्नान्ताः सप्तदश गुणा इति कणादो वक्ति । कणादसूत्रस्थचकारो गुरुत्वादीनवशिष्टान्सप्त गुणान्समुच्चिनोतीति चतुर्विंशतिर्गुणा इति सूत्रोपस्कारकृद्वक्ति । अकार एकार ओकारस्त्रयो गुणा इति शाब्दिकाः संगिरन्ते । सत्त्वं रजस्तम इति त्रयो गुणा इति सांख्याः । ज्ञानानन्दादयोऽपि गुणा इति वेदान्तिनः । हवनादौ दध्यादयो गुणा इति मीमांसकाः । शमदमतितिक्षादय इति योगिनः । अकार्पण्यास्पृहत्वादय इति धर्मज्ञाः । श्लेषादयो गुणा इति काव्यज्ञाः । आरोग्यादयो गुणा इति भिषजः । चित्रादिकर्मकौशलमिति शिल्पिनः । सत्यवचनार्जवादयो गुणा इति लौकिकजनाः ।

---

१ रूपादिचतुष्टयं, परत्वादिपञ्चकं, वेगः, स्थितिस्थापकः, एते मूर्तगुणा इत्युच्यन्ते । बुद्ध्यादयोऽष्टौ, भावना, शब्दः, एतेऽमूर्तगुणाः । संख्यादयो विभागान्ता मूर्तामूर्तगुणाः । संयोगो, विभागो, द्वित्वादिकाः संख्याः, द्विपृथक्त्वादयः, एतेऽनेकाश्रिताः । एतद्भिन्नाः शिष्टास्त्वेकैकवृत्तयः । बुद्ध्याद्यष्टकं, रूपादिचतुष्टयः, स्नेहः, सांसिद्धिकद्रवत्वं, भावना, शब्दः, एते विशेषगुणाः । संख्यादिसप्तकं, नैमित्तिकद्रवत्वं, गुरुत्वं, वेगः, एते सामान्यगुणाः । संख्यादिसप्तकं, द्रवत्वं, स्नेहः, एते द्वीन्द्रियग्राह्यगुणाः । रूपादिचतुष्टयं, शब्दः, एते बाह्यैकैकेन्द्रियग्राह्यगुणाः । गुरुत्वं, अदृष्टं, भावना, एतेऽतीन्द्रियगुणाः । बुद्ध्याद्यष्टकं, भावना, शब्दश्च, एतेऽकारणगुणोत्पन्नाः । अपाकजं रूपादित्रयं, अनुष्णः स्पर्शः, अपाकजं द्रवत्वं, स्नेहवेगगुरुत्वैकत्वानि, एकपृथक्त्वं, परिमाणं, स्थितिस्थापकः, एते कारणगुणोत्पन्नाः । संयोगो, विभागो, वेगः, एते कर्मजा गुणाः । रूपादिचतुष्टयं, परिमाणं, एकपृथक्त्वं, स्नेहः, शब्दः, एतेऽसमवायिकारणानि भवन्ति । बुद्ध्यादयोऽष्टौ, भावना, एते निमित्तकारणान्येव भवन्ति । उष्णस्पर्शो, गुरुत्वं, वेगो, द्रवत्वं, संयोगविभागौ, परत्वं, अपरत्वं, द्वित्वादि, द्विपृथक्त्वादि, एते गुणा असमवायिकारणानि निमित्तकारणानि च भवन्ति । बुद्ध्यादयोऽष्टौ, शब्दो, भावना, संयोगो, विभागः, एतेऽव्याप्यवृत्तिगुणा उच्यन्ते । ( भा० प० गु० ) सविकल्पकज्ञानं, इच्छा, प्रयत्नः, सुखं, दुःखं, द्वेषः, तदेकत्वं, परिमाणं, चेत आत्मयोग्यगुणा भवन्ति । तदेकत्वपरिमाणे न योग्ये इति टीकाकृतः । ( न्या० म० ) रूपादीनामेकैकेन्द्रियग्राह्यत्वं, संख्यादीनां द्वीन्द्रियग्राह्यत्वं, सुखादीनां मानसत्वं, सत्तागुणत्वयोः सामान्ययोः सर्वेन्द्रियग्राह्यत्वम् । ( वै० उ० ४।१।१३ )

**गुणवादः**—( अर्थवादः ) प्रमाणान्तरविरोधे सत्यर्थवादः । यथादित्यो यूपो[1], यजमानः प्रस्तर इत्यादिः । ( सि० च० ) ( लौ० भा० )

**गुणान्तरापत्तिः**—धर्मिणि सत्येव धर्मान्तरापत्तिः । यथा शाब्दिकनय उदात्तेनुदात्तत्वम् । ( गौ० वृ० २।१।२२ )

**गुरुत्वम्**[2]—( गुणः ) १ आद्यपतना[3]समवायिकारणम् । ( त० सं० ) यथा रक्तिकमाषकतोलकत्वादि । ( दि० १ ) २ स्पर्शविशेषः प्रत्यक्षसिद्ध इति वल्लभाचार्या आहुः ।

**गुरुधर्मः**[4]--[ क ] अव्यावर्तकपदार्थघटितो धर्मः ।

[ ख ] अवच्छेदकत्वाद्यप्रयोजकपदार्थघटितो धर्मः । यथा पर्वतो वन्हिमान्नीलधूमादित्यादौ नीलधूमत्वं[5] गुरुधर्मः । यथा वा कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्त्वम्[6] । ( स्व० )

**गौणत्वम्**—अमुख्यत्वम् । ( स्व० ) यथा, अग्निर्माणवक इत्यादौ लक्षणाया गौणीत्वम् । ( त० दी० ४ ) यथा वा, गां दोग्धि पय इत्यादौ गोनिष्ठकर्मत्वस्य गौणत्वम् । ( स्व० )

**ग्रन्थः**—चरमवर्णपर्यन्तवर्णसमूहः । यथा महाभारतरामायणादिः । ( स्व० )

---

१ अत्र च, यूप आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणयोगेन लक्षणया प्रतिपाद्यते । ( लौ० भा० )

२ तत्, पृथिवीजलवृत्त्यतीन्द्रियं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । ( मु० )

३ पतनं नाम, वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः । तत्र प्राथमिकव्यापारो गुरुत्वजन्यः । द्वितीयादिस्तु वेगजन्य इति । ( वाक्य० ) आद्यत्वमिह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इति भावः । ( नील० )

४ तल्लक्षणं चाप्रयोजकवस्त्वपेक्षोपस्थितिकत्वम् ।

५ अत्र, नीलधूमत्वं शुद्धधूमत्वमपेक्ष्य गुरुधर्म इति व्याप्यतावच्छेदकं न भवतीति विज्ञेयम् ।

६ अत्र च, लघोर्घटत्वस्याभावप्रतियोगितावच्छेदकत्वसंभवे कम्बुग्रीवादिमत्त्वं गुरुतया नावच्छेदकमिति बोध्यम् । तथा च न्यायः, संभवति लघौ धर्मेवच्छेदकेतिप्रसङ्गानापादके गुरुधर्मो नावच्छेदक इति ।

**ग्रहः**—१ बुद्धिवदस्यार्थोनुसंधेयः । २ भौमादिर्ग्रह इति ज्योतिर्विदो वदन्ति ।

**ग्राह्यः**—१ प्रतिबध्यज्ञाने प्रकारीभूतो धर्मः । यथा ह्रदो वह्निमानिति[1] ज्ञाने वह्निर्ग्राह्यः । २ ग्रहविषयः । यथा, चक्षुर्मात्रग्राह्यो गुणो रूपमित्यादौ रूपं ग्राह्यम् । ( स्व० )

## घ.

**घटकत्वम्**—तद्विषयता[2]व्यापकविषयतावत्त्वम् । यथा वह्नेर्वन्ह्यभावघटकत्वम् । ( स्व० )

**घटितत्वम्**—तद्विषयताव्याप्यविषयतावत्त्वम् । यथा वन्ह्यभावस्य वह्निघटितत्वम् । ( स्व० )

**घ्राणम्**[3]—(इन्द्रियम् ) [ क ] गन्धोपलब्धिसाधनमिन्द्रियम् । (त० भा० प्रमे०) [ ख ] गन्धग्राहकं महदिन्द्रियम् । ( न्या० म० १ )

## च.

**चक्षुः**[4]—( इन्द्रियम् ) [ क ] रूपोपलब्धिसाधनमिन्द्रियम् । ( त० भा० प्रमे० ) [ ख ] रूपग्राहकं महदिन्द्रियम् । ( न्या० म० १ ) (त० भा०)

**चतुरणुकम्**[5]—चतुर्भिस्त्र्यणुकैर्यदुत्पद्यते तत् । ( त० दी० १ )

---

१ अत्र च, ह्रदो वन्ह्यभाववानिति निश्चयप्रतिबध्ये ‘ ह्रदो वह्निमान’ इति ज्ञाने प्रकारो वह्निर्भवतीति विज्ञेयम् ।

२ स्वभिन्नस्वस्वव्यापकत्वैतदुभयसंबन्धेन विषयताविशिष्टविषयतावत्त्वमित्यर्थः ।

३ तच्च पार्थिवम् । ( त० भा० ) ( न्या० म० ) घ्राणस्य पार्थिवत्वे प्रमाणं चानुमानम् । तच्च, घ्राणं पार्थिवं द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये गन्धस्यैव व्यञ्जकत्वाद्घ्रायूपनीतसुरभिभागवदिति ।( मु० १ )

४ तच्च तैजसम् । ( न्या० म० ) ( त० भा० ) चक्षुषस्तैजसत्वेनुमानं प्रमाणम् । तच्च, चक्षुस्तैजसं स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्प्रभावदिति ।(मु० १) चक्षुष्यनुद्भूतशुक्लोस्ति । संख्यादिसप्तकं, द्रवत्वं, स्नेहः, उद्भूतरूपं, उद्भूतरूपवद्द्रव्यं, एते चक्षुर्ग्राह्याः । (भा० प० )

५ तच्च जन्यद्रव्यावयवः ।

**चरमत्वम्**—१ स्वसजातीयवस्तुप्रागभावानधिकरणत्वम् । ( राम० ) यथा, तन्तुः पटस्य चरमावयव इत्यादाववयवस्य चरमत्वम् । ( स्व० ) २ स्वेतरभावकारणानपेक्षकार्यकत्वम्[1] । यथानुमितिकारणस्य परामर्शस्य चरमत्वमिति गुरुचरणाः प्राहुः ।

**चाकचिक्यम्**—भ्रमोत्पादको दोषविशेषः । यथा शुक्तौ चाकचिक्यम्[2] । ( नील० )

**चिकीर्षा**[3]—[ क ] कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयेच्छा । यथा पाकं कृत्या साधयामीति । ( चि० ४ ) ( मु० )

[ ख ] कृतिसाध्यत्वप्रकारकेच्छेति गुरवः । ( मु० )

**चेष्टा**[4]—[ क ] ईप्सितं जिहासितं वार्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा । ( वात्स्या० प्रस्तावना )

[ ख ] प्रयत्नवदात्मसंयोगासमवायिकारणकक्रिया ।

[ ग ] स्वासमवेतस्वातिरिक्तस्पर्शवदन्यप्रयत्नजन्यक्रिया । ( वै० उ० ५।१।१ )

[ घ ] हिताहितप्राप्तिपरिहारार्थक्रियाविशेषः । ( त० भा० ४ ) चेष्टा प्रमाणान्तरमिति तान्त्रिका आहुः । चेष्टा न प्रमाणान्तरं, किं त्वनुमानप्रयोजिकैवेति नैयायिकाः । ( सि० च० )

**चैतन्यम्**—१ ज्ञानवत्त्वम् । ( दि० १।२ ) यथा, आत्मनश्चैतन्यम् । ( स्व० ) २ बुद्ध्यादावात्माध्यासाच्चैतन्यमिति मायावादिनो वदन्ति ।

**चोदना**—विधिवाक्यम् । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि । ( लौ० भा० )

---

१ इदं च कारणवृत्ति चरमत्वमित्यवधेयम् ।

२ अत्र च, शुक्तौ चाकचिक्यदोषवशात् ‘ इदं रजतं’ इति ज्ञानमुत्पद्यत इति ध्येयम् ।

3 अत्र, कृतिसाध्यताज्ञानं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानं च चिकीर्षां प्रति कारणम् । बलवद्द्विष्टसाधनताज्ञानं च तत्र प्रतिबन्धकमित्यवधेयम् ।
कृतिसाध्यताज्ञानमात्रं चिकीर्षां प्रति कारणमिति गुरवः । ( मु० गु० )

४ तल्लक्षणं च चेष्टात्वमेव । तच्च प्रयत्नजन्यतावच्छेदको जातिविशेषः । ( गौ० वृ० १।१।११ )

च्विः–( प्रत्ययः ) अभूततद्भाव[1]श्च्व्यर्थः । स चाधेयतासंबन्धेन पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टः । यथा घटं शुक्लीकरोतीत्यादौ शौक्ल्यादि । ( गा० न्यु० ४ )

छ.

छलम्–[ क ] वचनविघातोर्थविकल्पोपपत्त्या छलम् । ( गौ० १।२।१० )
[ ख ] वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानम् । ( गौ० वृ० १।२।१० )
[ ग ] अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणाभिधानम् । ( त० भा० ) ( त० दी० ) यथा, 'नवकम्बलोयं देवदत्त' इति वाक्यस्य नूतनाभिप्रायेण प्रयुक्तस्यार्थान्तरमाशङ्क्य कश्चिद्दूषयति । नास्य नव कम्बलाः सन्ति दरिद्रत्वादिति । ( त० भा० ) ( नील० )
[ घ ] शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुः । ( सर्व० अक्ष० ) तत्त्रिविधम् । वाक्छलम् । सामान्यच्छलम् । उपचारच्छलम् । ( गौ० १।२।११ ) प्रकारान्तरेण तच्च त्रिविधम् । अभिधानतात्पर्योपचारव्यत्ययवृत्तिभेदादिति । ( सर्व० अक्ष० )

ज.

जनकत्वम्–कारणत्ववदस्यार्थोनुसंधेयः । तद्द्विविधम् । स्वरूपयोग्यत्वम् । फलोपहितत्वम् । आद्यं[2] यथा, घटं प्रत्यरण्यस्थस्यापि दण्डादेः । द्वितीयं[3] यथा, इच्छां प्रति ज्ञानस्य जनकत्वम् । ( स्व० )

जननम्–उत्पत्तिवदस्यार्थोनुसंधेयः ।

जन्म–[क] शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः । (वात्स्या० १।१।२)
[ ख ] विशिष्टशरीरसंबन्धः । (गौ० वृ० १।१।२) (वात्स्या० १।१।१९)

---

१ अत्र स्वपदं शौक्ल्यादिपरम् ।
२ स्वरूपयोग्यत्वं च जनकतावच्छेदकधर्मवत्त्वम् । स चात्र धर्मो दण्डत्वादिः ।
३ फलोपहितत्वं चाव्यवहितपूर्ववर्तित्वसंबन्धेन फलविशिष्टत्वम् ।

[ ग ] विजातीयशरीराद्यप्राणसंयोगः । ( गौ० वृ ३।१।१९ )

[ घ ] आद्यशरीर[2]प्राणसंयोगः । ( दि० १ ) ( राम० )

[ ङ ] धर्माधर्माभ्यां संयोगः[3] । (वै० उ० ६।२।१५) यथा, अस्मदादीनां जन्म । ( स्व० )

**जन्यत्वम्**–यदधीनो यस्य समयसंबन्धो यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकस्तत्त्वम् । ( मू० म० १ ) यथा पटस्य तन्तुजन्यत्वम् । ( स्व० )

**जरायुः**–गर्भवेष्टनचर्मपुटकम् । (दि० १) यथा जरायुजं शरीरमित्यादौ । (स्व०)

**जलम्**–अप्शब्दार्थवदस्यार्थोनुसंधेयः ।

**जल्पः**–( कथा ) [ क ] यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भः । ( गौ० १।४३ ) यथोक्तोपपन्न इति । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रहस्थानसाधनोपालम्भ इति । छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन्क्रियत इति । एवंविशेषणो जल्पः । ( वात्स्या० १।२।४३ )

[ ख ] उभयपक्षस्थापनवती विजिगीषुकथा । (गौ० वृ० १।४२) ( त० भा० ) ( त० दी० ) ( सर्व० अक्ष० )

**जहत्स्वार्था**–( लक्षणा ) [ क ] यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहती । यथा मञ्चाः क्रोशन्तीति । (त० दी० ४)

[ ख ] लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधिका । (न्या० बो०) यथा गङ्गायां[4] घोष इत्यादौ गङ्गापदस्य तीरे लक्षणा । ( मु० ४ )

---

१ शरीरप्राणसंयोग आद्यत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगध्वंसानधिकरणत्वम् । ( राम० )

२ शरीर आद्यत्वं च स्वसजातीयशरीरध्वंसानधिकरणत्वम् । ( राम० )

३ अपूर्वाभिः शरीरेन्द्रियवेदनाभिः संबन्धः संयोग इहोच्यते । ( वै० उ० ६।२।१५ )

४ अत्र च, यदा गङ्गापदात्तीरत्वेन तीरमात्रबोधस्तदा जहत्स्वार्थैव लक्षणा । यदा तु गङ्गापदाद्गङ्गातीरत्वेन गङ्गातीरबोधस्तदाजहत्स्वार्था लक्षणेत्यवधेयम् । ( दि० ४ ) एवमेव मञ्चाः क्रोशन्तीत्यादावपि बोध्यम् ।

**जहदजहत्स्वार्था**–( लक्षणा ) यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहती । यथा सोयं देवदत्तः, तत्त्वमसीत्यादौ[2] । ( त० दी० ४ )

**जहदजहल्लक्षणा**–जहदजहत्स्वार्थावदस्यार्थोनुसंधेयः ।

**जहल्लक्षणा**– जहत्स्वार्थावदस्यार्थोनुसंधेयः ।

**जातिः**–( सामान्यम् ) १[ क ] समानप्रसवात्मिका[3] । ( गौ० २।१३४ )

[ ख ] यच्च केषांचिद्भेदं कुतश्चिद्भेदं करोति तत्सामान्यविशेषो जातिरिति । ( वात्स्या० २।२।७१ )

[ ग ] नित्यानेकसमवेतम् । ( त० प्र० १ ) यथा द्रव्यत्वघटत्वादिः । ( स्व० )

[ घ ] समानाकारबुद्धिजननयोग्यधर्मविशेष इत्यपि वदन्ति । ( गौ० वृ० २।१३४ )२ आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सहेति शाब्दिका वदन्ति ।

**जातिः**–[ क ] साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम् । ( गौ० १।५८ ) प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः । स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोर्थो जातिरिति । ( वात्स्या० १।२।५९ )

[ ख ] छलादिभिन्नदूषणासमर्थमुत्तरम् ।

---

१ सोयं देवदत्त इत्यादौ तत्तांशस्येदानीमसंभवाद्धानम् । इदंतांशस्य संभवादहानमिति जहदजहल्लक्षणामाचक्षते नैयायिकाः । ( नील० )

२ तत्त्वमसीत्यादौ तु तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे चैतन्ये त्वंपदवाच्यस्य किंचिज्ज्ञत्वादिविशिष्टस्याभेदान्वयानुपपत्त्योभयत्र विशेषणांशपरित्यागः । तथा च तत्पदलक्ष्यस्य शुद्धचैतन्यस्य त्वंपदलक्ष्येण तेन सहाभेदान्वयोपपत्तिरित्याभिप्रायः ।

इदमुदाहरणं च, जीवब्रह्मणोरैक्यं ब्रुवता मायावादिना सिद्धान्ताभिप्रायेण । ( नील० )

३ समानः समानाकारकः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा । तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः । ( गौ० वृ० २।१३४ )

[ ग ] स्वव्याघातकमुत्तरम् । (गौ० वृ० ५।५८) (सर्व० अक्ष०) (नील०)

[ घ ] असदुत्तरम् । ( त० भा० ) । जातयश्चतुर्विंशतिः । साधर्म्यसमो वैधर्म्यसम उत्कर्षसमोपकर्षसमो वर्ण्यसमोवर्ण्यसमो विकल्पसमः साध्यसमः प्राप्तिसमोप्राप्तिसमः प्रसङ्गसमः प्रतिदृष्टान्तसमोनुत्पत्तिसमः संशयसमः प्रकरणसमोहेतुसमोर्थापत्तिसमोविशेषसम उपपत्तिसम उपलब्धिसमोनुपलब्धिसमो नित्यसमोनित्यसमः कार्यसमः । ( गौ० ५।१ ) ( त० भा० ) ( त० दी० )

जिज्ञासा— १ [ क ] प्रश्नवदस्यार्थोनुसंधेयः । ( गा० अव० हेतु० ) यथा कुत इति । ( दीधि० हेतु० )

[ ख ] अवान्तरधर्मप्रकारकज्ञानेच्छा[1] । ( गा० सव्य० ) यथा घटे द्रव्यत्वेन ज्ञातेपि 'कोसौ' इति जिज्ञासोदेति । ( स्व० ) २ विचार इति वेदान्तिन आहुः ।

जीवः[2]—( आत्मा ) [ क ] यो घ्राणादीनां[3] करणानां प्रयोक्ता स आत्मा । (वै० उ० ३।१।२ ) ( भा० प० )

[ ख ] शरीरस्य परंपरया चैतन्यसंपादकः । ( मु० )

[ ग ] बन्धमोक्षयोग्यः । (सि० च०) जीवः सुखदुःखवैचित्र्यान्नानाभूत एव । ( त० भा० ) जीवः प्रतिशरीरं भिन्नो[4] विभुर्नित्यश्च । (त० सं०) जीवोणुरिति वेदान्तिनो वदन्ति । मध्यमपरिमाणरूप इति चार्वाकादयः ।

---

१ इयं च विशेषजिज्ञासेत्युच्यते । ( गा० सव्य० )

२ जीवलक्षणं च [क] सुखदुःखादिकम् । (त० दी०) [ख] जन्यज्ञानाधिकरणत्वम् । (सि० च०) जीवलिङ्गं तु सुषुप्तिदशायां प्राणापानयोरूर्ध्वाधोगत्योरनुकूलः प्रयत्नः । ( वै० उ० ३।२।४ ) जीवो मानसप्रत्यक्षविषय इति नैयायिकाः । नेति वैशेषिका वदन्ति ।

३ घ्राणादि तु, घ्राणं रसनं चक्षुः श्रोत्रं त्वङ्मनश्चेति ।

४ तदर्थश्च [क] एकैकात्मा यत्किंचिन्मनोविशिष्टशरीरावच्छिन्नभोगवत्त्वे सति तादृशशरीरानवच्छिन्नभोगवद्भिन्नः । ( वाक्य० १ ) [ ख ] एतच्छरीरावच्छिन्नभोगवान्समानकालिकयोगजधर्माद्यजन्यशरीरावच्छिन्नभोगवद्भिन्नः । ( नील० )

जीवात्मनि चतुर्दश गुणा वर्तन्त इति न्यायसिद्धान्तः। बुद्ध्यादयोऽष्टौ संख्यादिपञ्चकं भावना चेति। (भा० प० १)

**जीवनम्**—सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितः। (वात्स्या० ३।२।२७)

**जीवनयोनियत्नः**[1]—(प्रयत्नः) [क] साहजिकप्राणसंचारविषयकयत्नः। (दि० गु०) (वै० उ० ३।२।४)
[ख] जीवनादृष्टजन्यो गुणः। (सि० च०)

**ज्ञप्तिः**—ज्ञानम्। (स्व०)

**ज्ञातता**—१ ज्ञानविषयता। यथा ज्ञातो घट इत्यादौ घटस्य ज्ञातता। (स्व०) २ ज्ञात इति प्रतीतिसिद्धो ज्ञानजन्यो विषयसमवेतः प्राकट्यापरनामा पदार्थविशेष इति भट्टाः। (मू० म० प्रामा० १) (नील०) ३ या शक्यमनुभावयति सा शक्तिरिति केचित्। (चि० १)

**ज्ञानजन्यत्वम्**[2]—[क] स्वसमानाधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वम्[3]।
[ख] स्वसमानाधिकरणक्षणवृत्तीच्छाधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वम्[4]। (मू० म० १)

**ज्ञानम्**—१ बुद्धिवदस्यार्थोनुसंधेयः। (गौ० १।२५) (वै० ८।१।२) २ बुद्धितत्त्वस्य महत्तत्त्वापरपर्यायस्य परिणामविशेष इति सांख्याः। (गौ० वृ० १।१।१५) ३ चैतन्यविशेष इति मायावादिनो वदन्ति। ज्ञानमतीन्द्रियमेवेति भट्टाः। मानसप्रत्यक्षविषय इति नैयायिकाः प्राहुः।

---

१ स चातीन्द्रियः प्राणसंचारानुमेयश्चेति बोध्यम्। (वै० उ० ५।२।१६)
२ अत्र च, प्रथमं जानाति ज्ञात्वेच्छतीष्ट्वा च यतत इति स्थितिमनुरुध्येदम्।
३ इदं चेच्छोत्पत्तौ ज्ञेयम्।
४ इदं च कृत्युत्पत्तौ ज्ञेयम्।

**ज्ञानलक्षणः**[1]–( सन्निकर्षः ) स्वविषयविषयकप्रत्यक्षजनको ज्ञानविशेषः । यथा सुरभित्वज्ञानम्[2] । ( स्व० )

**ज्ञापकत्वम्**–[ क ] जनकज्ञानविषयत्वम् । यथा पर्वतो वह्निमान्धूमादित्यादौ धूमस्य ज्ञापकत्वम् । (गा० अव० हेतु०)

[ ख ] ज्ञानजनकत्वमिति केचिद्वदन्ति ।

**ज्ञापनम्**–[ क ] ज्ञानानुकूलशब्दः ।

[ ख ] ज्ञानानुकूलव्यापारः । यथा चैत्रः स्ववृत्तान्तं मैत्रं ज्ञापयतीत्यादौ । ( स्व० )

**ज्ञाप्यत्वम्**–[ क ] जन्यज्ञानविषयत्वम् । यथा धूमाद्वह्निमानित्यादौ वन्ह्यन्वयी पञ्चम्यर्थः[3] । ( गा० अव० हेतु० )

[ ख ] ज्ञानजन्यत्वमिति केचिद्वदन्ति ।

**ज्ञेयत्वम्**[4]–[ क ] भगवज्ज्ञानविषयत्वम् । ( न्या० म० २ )

[ ख ] ज्ञानविषयत्वम् । ( मु० १ ) यथा घटपटादेः सर्वस्य जगतो ज्ञेयत्वम् । ( स्व० )

**ज्येष्ठत्वम्**–[ क ] वहुतरस्पन्दान्तरितजन्मत्वम् । ( दि० गु० )

[ ख ] कालकृतं परत्वम् । ( सि० च० ) यथा रामस्य लक्ष्मणमपेक्ष्य ज्येष्ठत्वम् । ( स्व० )

---

१ सोऽलौकिकप्रत्यक्षे कारणम् ।

२ अत्र च, [क] सुरभित्वज्ञानं तु 'सुरभि चन्दनम्' इति चाक्षुषोपनीतभानं जनयतीति विज्ञेयम् । (स्व०) [ख] यत्र सौरभज्ञानलक्षणया चाक्षुषसामग्र्या च 'सुरभि चन्दनखण्डम्' इति सौरभांशेऽलौकिकं चंदनखण्डांशे लौकिकं चाक्षुषं जायते, तत्र सौरभज्ञाने सौरभस्मरणमेव प्रत्यासत्तिः । सौरभांशे चक्षुःसंनिकर्षासंभवात् । ( सि० च० )

३ अयमर्थो नवीनमतानुसारेण । प्राचीनमते तु ज्ञापकत्वमेव पञ्चम्यर्थ इति बोध्यम् ।

४ तच्च केवलान्वयीति विज्ञेयम् । ( मु० १ )

## ण.

णिच्–( प्रत्ययः ) [ क ] कर्तृत्वप्रयोजकव्यापारो[1] णिजर्थः । यथा पाचयत्यन्नं सहायेनेत्यादौ ।

[ ख ] हेतुकर्तृत्वमिति[2] केचित् । ( गा० व्यु० २ )

ण्वुल्–( प्रत्ययः ) तुमुन्प्रत्ययवदस्यार्थोनुसंधेयः । ( गा० व्यु० ४ )

## त.

तत्–[ क ] वक्तृबुद्धिविषयः[3] । यथा, यस्यास्ति वित्तं स नरः कुलीनः स पण्डित इत्यादौ तच्छब्दार्थः । ( स्व० )

[ ख ] यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयो विधेयभूतस्तत्पदार्थ इति शाब्दिका वदन्ति ।

तत्त्वज्ञानम्–१ यथार्थज्ञानम्[4] । यथा, सति घटादिवस्तुनि सदिति ज्ञानम्, असति च शशशृङ्गादावसदिति । ( स्व० ) २ [ क ] निखिललोकविमोक्षमुख्योपायं[5] मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति । ( न्या० म० ) यथा, आत्मा शरीरादिभ्यो भिन्न इत्याकारकं ज्ञानम् । ( त० प्र० १ )

[ ख ] इतरनिवृत्तिपूर्वको ब्रह्मात्मावगम इति मायावादिनो वदन्ति ।

[ ग ] भगवद्विषयकमपरोक्षज्ञानमिति द्वैतवादिनो वेदान्तिनः ।

तत्त्वम्–[ क ] सतश्च सद्भावोसतश्चासद्भावः । सत् 'सत्' इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । असच्च 'असत्' इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । ( वात्स्या० प्रस्तावना)

---

१ अत्रेदं बोध्यम् । कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः । विशिष्टलाभस्त्वन्वयबलादिति । (गा० व्यु० २)

२ तच्च स्वतन्त्रकर्तृप्रेरणा । अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा । कर्तृत्वं क्वचित्प्रयत्नः, क्वचिदाश्रयत्वादिकम् । अत एव पाचयतीत्यादौ पाकादिकृतिनिर्वाहकः, ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः, नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहको, व्यापारः प्रतीयते । ( गा० व्यु० २ )

३ वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न इति फलितार्थ इति गुरुचरणाः प्राहुः ।

४ तदुक्तम् । तत्त्वज्ञानं खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम् । ( वात्स्या० १। १।२ )

५ इदं च परमात्मविषयकं तत्त्वज्ञानं निःश्रेयससाधनं चेति बोध्यम् ।

दिति । (त० सं०) तर्को द्विविधः । विषयपरिशोधकः । व्याप्तिग्राहकः। आद्यो, निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः । द्वितीयस्तु, धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः। (दि० गु०) प्रकारान्तरेण स च तर्क एकादशविधः ।व्याघातः । आत्माश्रयः। इतरेतराश्रयः । चक्रकाश्रयः । अनवस्था । प्रतिबन्धिकल्पना । लाघवकल्पना । गौरवम् । उत्सर्गः । अपवादः । वैजात्यम् । (सर्व० अक्ष०)

**तात्पर्यम्**[1]–[क] इतरपदस्येतरपदार्थसंसर्गज्ञानपरत्वम् । (चि०)

[ख] तदर्थप्रतीतीच्छयोच्चारितत्वम् । (तर्का० ४) (त० दी०)

[ग] इदमेतस्मिन्नर्थेस्यान्वयं प्रत्यायत्विति प्रयोक्तुरिच्छा[2] । (न्या० म० ४) (भा० प० ४)

**तादर्थ्यम्**[3]–[क] तत्प्रयोजनकत्वम्[4] । यथा, यूपाय दार्वित्यादौ दारुणस्तादर्थ्यम् । (गा० व्यु० ४)

[ख] उपकार्योपकारकभावरूपः संबन्ध इति शाब्दिका वदन्ति ।

**तादात्म्यम्**[5]–१ तद्वृत्तिधर्मः । (गा० व्यु० १) यथा घटतादात्म्यं घटत्वम् । (त० प्र० १) २ भेदसहिष्णुरभेदस्तादात्म्यमिति केचिद्वेदान्तिन आहुः।[6]

**तिप्**–(प्रत्ययः) १ यत्नस्तिवर्थः[7] । (त० दी०) २ एकत्वसंख्या । ३ वर्तमानकालः । यथा चैत्रस्तण्डुलं पचतीत्यादौ । ४ क्वचित्, आश्रयत्वम् । यथा रथो गच्छतीत्यादौ । ५ क्वचित्, प्रतियोगित्वादि । यथा घटो नश्यतीत्यादौ । (दि० ४)

---

१ तात्पर्यस्य निश्चयः शाब्दबोधे कारणमिति ज्ञेयम् । (न्या० म० ४)

२ प्रयोक्ता चाभिसंधाता । (न्या०म०४) (सि०च०)

३ स एवार्थः प्रयोजनं यस्य तत्त्वम् । (गा० व्यु० ४)

४ अत्र, तत्प्रयोजनत्वं च समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वम् । तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाश्रीनेच्छाविषयव्यापाराश्रयत्वम् । (गा० व्यु०४)

५ तादात्म्यत्वं तु संबन्धताविशेषः प्रतीतिसाक्षिकः । (त० प्र०१)

६ शिष्टं चाभेदशब्दव्याख्यानावसरे संपादितम् ।

७ एवंरीत्यैव तसादिप्रत्ययानामप्यर्था यथायोग्यं स्वयमूह्याः ।

**तुमुन्**–( प्रत्ययः ) [ क ] प्रकृतक्रियासमानकर्तृकत्वसहिततद्विषयकेच्छाधीनेच्छाविषयत्वम् । यथा पक्तुं व्रजतीत्यत्र तुमर्थः । ( तर्का० ४ ) ( गा० व्यु० ४ ) [ ख ] तत्प्रागभावकालीनतद्विषयकेच्छा । यथा भोक्तुं व्रजतीत्यादौ । ( सि० च० )

**तुल्यत्वम्**–१ सादृश्यवदस्यार्थोनुसंधेयः । यथा कुम्भोदरं नाम निकुम्भतुल्यमित्यादौ कुम्भोदरस्य निकुम्भतुल्यत्वम् । ( स्व० ) २ [ क ] अन्यूनानतिरिक्तव्यक्तिकत्वम्[1] । ( त० प्र० १ )

[ ख ] तुल्यव्यक्तिवृत्तित्वम्[2] । (स्व०) यथा घटत्वकलशत्वयोस्तुल्यत्वम् । ( त० प्र० १ )

**तुल्यवित्तिवेद्यत्वम्**–एकज्ञानविषयत्वम् । ( स्व० ) यथा प्राचीनमते वह्निमद्वृत्तिर्धूमाभाव इति ज्ञानेपि वह्नौ धूमाभाववद्वृत्तित्वस्य तुल्यवित्तिवेद्यतया भानम् । ( गा० सामा० )

**तृप्तिः**–फलेच्छाविच्छेदः । ( कु० ५ ) यथा भोजनेन तृप्तोस्मीत्यादौ । ( स्व० )

**तृष्णा**–( दोषः ) इदं मे न क्षीयतामितीच्छा । ( गौ० वृ० ४।२ )

**तेजः**[3]–( द्रव्यम् ) [ क ] उष्णस्पर्शवत् ।

[ ख ] तेजस्त्वसामान्यवत् । यथा प्रौढप्रकाशः । ( त० दी० ) यथा वा, चक्षुःशरीरसवितृसुवर्णवह्निविद्युदादिप्रभेदम् । ( त० भा० ) तद्विविधम् । नित्यम् । अनित्यम् । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । अनित्यं त्रिविधम् । शरीरम् । इन्द्रियम् । विषयः । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः, कृष्णताराग्रवर्ति । विषयश्चतुर्विधः । भौमम् । दिव्यम् । औदर्यम् । आकरजम् । भौमं वन्ह्यादिकम् । दिव्यम-

---

१ इदं तु घटत्वकलशत्वादीनां भेदे भिन्नजातित्वे वा बाधकमिति बोध्यम् । ( दि० १ ) ( नील० )

२ स्वभिन्नजातिसमनियतत्वमिति फलितार्थ इति गुरुचरणाः प्राहुः ।

३ तल्लक्षणं च तेजस्त्वमेव । तच्च [ क ] चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतसामान्यम् । ( सर्व० कौमु० ) [ ख ] जन्यतेजस्त्वावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । ( मु० १ )

विन्धनं विद्युदादि । औदर्यं भुक्तस्य परिणामहेतुः । आकरजं सुवर्णादि । (त० सं० १) (मु०) प्रकारान्तरेण तेजश्चतुर्विधम् । किंचित्, उद्भूतरूपस्पर्शम् । यथा सौरादि । किंचित्, उद्भूतरूपमनुद्भूतस्पर्शम् । यथा चान्द्रम् । किंचित्, अनुद्भूतरूपस्पर्शम् । यथा नायनम् । किंचित्, अनुद्भूतरूपमुद्भूतस्पर्शम् । यथा नैदाघं वारि, भर्जनकपालादिगतं च तेजः । (वै० उ० २।१।३) तेजस्येकादश गुणा वर्तन्ते । संख्यादिसप्तकं भास्वरशुक्लरूपमुष्णस्पर्शो नैमित्तिकद्रवत्वं वेगाख्यसंस्कारश्च । (त० भा०) (भा० प०) (मु०)

**त्यागः**—तस्यायं भवत्वित्यादिफलेच्छाधीनस्वस्वत्वाभावेच्छा । यथा, एषोर्घ्यः शिवाय नम इत्यादौ नमःशब्दार्थः । (गा० व्यु० ४)

**त्रसरेणुः**—[1]त्र्यणुकवदस्यार्थोनुसंधेयः । तद्यथा 'जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुरिति स्मृतः' इति । २ त्रिभिः सहितो रेणुस्त्रसरेणुः । स च द्व्यणुक एवेति महादेवो वक्ति । (राम०) ३ त्रयोणवस्त्रसरेणुरिति बादरायणाचार्याः ।

**त्राणम्**—अनि[2]ष्टनिवृत्त्यनुकूलो व्यापारः । यथा दस्युभ्यो रक्षति, कुलालाद्घटं रक्षतीत्यादौ रक्षत्यर्थः । (गा० व्यु० ५)

**[3]त्रुटिः**—१ द्व्यणु[4]कवदस्यार्थोनुसंधेयः । २ त्र्यणु[4]कवदस्यार्थोनुसंधेयः । (स्व०) यथा, परं वा त्रुटेः (गौ० ४।८२) इत्यत्र त्रुटिशब्दार्थः । ३ त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृत इति बादरायणाचार्याः ।

**त्र्यणु[5]कम्**—१ त्रिभिर्द्व्यणुकैर्यदुत्पद्यते तत् । (त० दी० १) (दि० १।२)

---

१ स च जन्यद्रव्यावयव इति ज्ञेयम् ।

२ तन्निष्ठसदुःखोत्पादकव्यापारविरहानुकूलव्यापारस्तदपादानकं स्वकर्मकं रक्षणमिति परमार्थः । घटाद्यचेतनकर्मकरक्षणं च विनाशोत्पादकव्यापारविरहगर्भं निर्वाच्यम् । (गा०व्यु०५)

३ स च जन्यद्रव्यावयव इति ज्ञेयम् ।

४ तदुक्तम् । त्रुटिरवयवस्तदवयवो वा परमाणुरिति । (गौ०वृ०४।८२)

५ तच्च जन्यद्रव्यावयव इति ज्ञेयम् ।

तद्यथा 'गवाक्षरन्ध्रे तरणिकिरणस्थं निरीक्ष्यते। यद्रजः सर्वतः सूक्ष्मं त्र्यणुकं तन्निगद्यते' इति। (सि० च०) २ त्रिभिः परमाणुभिर्यदुत्पद्यते तदिति महादेवो वक्ति। (दि० ५।२)

त्वक्–(इन्द्रियम्) [क] स्पर्शग्राहकं महदिन्द्रियम्[1]। (न्या० म० १) (त० भा० प्रमे०)

[ख] वृद्धिक्षयवद्द्रव्यसहजावरणं हि त्वगित्युच्यत इति वैशेषिकाः। (वै० उ० ३।१।९)

त्वम्–[क] तत्कालीनसंबोध्यचैत्रत्वमैत्रत्वादिविशिष्टः। (दि० ४)

[ख] स्वजन्यबोधाश्रयतया वक्तृभिप्रायविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः। (गा० श०) यथा भो चैत्र त्वमत्रागच्छेत्यादौ त्वंपदार्थः। (स्व०)

[ग] संबोध्यः प्रयोक्तुरहंकारानास्पदचेतन इति शाब्दिका आहुः।

## द.

दक्षिणा–(दिक्) [क] प्राच्यभिमुखपुरुषदक्षिणे[2]भागावच्छिन्ना दिक्। (वै० उ० २।२।१०)

[ख] मेरुव्यवहितदेशावच्छिन्ना दिक्। (वाक्य० १) (न्या० बो०) (मु०) यथा झळकीग्रामाद्दक्षिणस्यां[3] विजयपुरम्। (स्व०)

दम्भः–कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा। (गौ० वृ० ४।२)

---

१ तच्च वायवीयमिन्द्रियम्। त्वगिन्द्रियस्य वायवीयत्वे प्रमाणमनुमानम्। तच्च, त्वगिन्द्रियं वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनपवनवदिति। (मु०) (सि० च०)

उद्भूतस्पर्शवद्द्रव्यमुद्भूतस्पर्शश्च त्वगिन्द्रियेण गृह्यते। एवं रूपभिन्नं रूपत्वभिन्नं च यच्चक्षुर्योग्यं तदपि त्वगिन्द्रियेण गृह्यत इति बोध्यम्। (मु० १)

२ दक्षिणत्वं तु शरीरावयववृत्तिजातिविशेषः। (वै० उ० २।२।१०)

३ अत्र च, झळकीनिष्ठमेरुगिरिसंयुक्तसंयोगपर्याप्तसंख्यात्र्यात्मकसंख्यापर्याप्त्यधिकरणमेरुगिरिसंयुक्तसंयोगवन्मूर्तवृत्ति विजयपुरमिति शाब्दबोधः।

**दशा**—१ कालविशेषः । यथा, सत्प्रतिपक्षतादशायामित्यत्र साध्यतदभावव्याप्यवत्तापरामर्शद्वयसंवलनकालः । २ अवस्थाविशेष इति पौराणिकाः । (स्व०)

**दानम्**—१ [क] स्वस्वत्वध्वंसविशिष्टा परस्वत्वानुकूलेच्छा ।

[ख] स्वस्वत्वध्वंसानुकूला परस्वत्वप्रकारिकेच्छा[1] । यथा ब्राह्मणाय धनं ददातीत्यादौ ददात्यर्थः । (गा० व्यु० २)

[ग] मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्याग इति संप्रदायः । (दि० गु०) २ निरायत्तिकरणम् । तच्च, तत्कर्तृकनिर्णेजने[2]च्छाप्रकाशको व्यापारः । यथा रजकस्य वस्त्रं ददातीत्यादौ ददात्यर्थः । ३ अनुमतिप्रकाशकव्यापारः । यथा हन्तुः पृष्ठं ददातीत्यादौ ददात्यर्थः । (गा० व्यु० ४)

**दिक्**[3]—(द्रव्यम्) [क] अकालत्वे सत्यविशेषगुणा महती । (सर्व० औलु०)

[ख] दूरान्तिकादिधी[4]हेतुः । (भा० प०)

[ग] प्राच्यादिव्य[5]वहारहेतुः । सा चैका विभ्वी नित्या च । (त० सं०) (त० भा०) दिशि पञ्च गुणा वर्तन्ते । संख्यादयः पञ्च । (त० भा०) (भा० प०) दिग्दश[6]विधा । प्राची । प्रतीची । उदीची । अवाची । आग्ने-

---

१ दानं च न संप्रदानस्वत्वजनकम् । अपि तु तत्स्वीकार एवेति मताभिप्रायेणेदं निर्वचनम् (गा० व्यु० २)

२ निर्णेजनं च मलापकर्षः ।

३ दिक्तु कालविपरीतपरत्वापरत्वानुमेया, अनियतोपाध्युन्नायिका चास्तीति विज्ञेयम् । (भा० प०) (वै० उ० २।२।१०)

लक्षणं च प्राच्यादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वम् । (वाक्य०)

४ दूरत्वं दैशिकपरत्वम् । तच्च बहुतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पद्यते । अन्तिकत्वं तु दैशिकापरत्वम् । तच्चाल्पतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पद्यते । (सि० च०) तथा च, इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम्, इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाधिकरणमपरम्, इति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः । (वै० उ० २।२।१०)

५ इयं प्राचीयं प्रतीचीत्यादिवाक्यप्रयोगरूपव्यवहारहेतुरित्यर्थः ।

६ यद्यपि दिगेकैव तथाप्युपाधि*भेदात्प्राच्यादिभेदव्यवहारः । (भा० प०)

---

* उपाधिस्तु दिगुपाधिशब्दव्याख्यानावसरे व्यक्तीभविष्यति ।

यी । नैर्ऋती । वायवी । ऐशानी । ऊर्ध्वा । अधः । इति । ( वै० उ० २।२।१० )

**दिगुपाधिः**—प्राच्यादिव्यवहारोपपादकं द्रव्यम् । यथा घटादिरूपा पृथिवी । दिगुपाधयः पञ्च । पृथिवी, आपः, तेजः, वायुः, मनश्च । ( स्व० )

**दीर्घत्वम्**—१ इदं दीर्घमिति व्यवहारसिद्धः परिमाणविशेषः । ( वै० वि० ७।१।१७ ) २ अवयवसंयोगविशेष इति केचित् । ( दि० गु० ) ३ द्विमात्रकालिकाच्त्वमिति शाब्दिका वदन्ति ।

**दुःखम्**[1]—( गुणः ) [ क ] बाधनालक्षणम्[2] । ( गौ० १।१।२१ ) [ ख ] प्रतिकूलवेदनीयम्[3] । ( वात्स्या० १।१।२ ) ( त० सं० ) [ ग ] अधर्मजन्यं[4] सचेतसां प्रतिकूलम् । ( भा० प० ) दुःखमपि सुखवच्चतुर्विधम् । ( सि० च० )

**दूरत्वम्**—दैशिकं परत्वम् । ( मु० ) यथा झळकीग्रामात्खेटकग्रामापेक्षया माणिपूरग्रामस्य दूरत्वम् । ( स्व० )

**दृष्टान्तः**—[ क ] लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं सः । ( गौ० १।१।२५ ) लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः । तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि, सोर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति । दृष्टान्तसमाधिना

---

१ दुःखं तु मनसैव गृह्यते, जीवमात्रवृत्ति चेति विज्ञेयम् । तल्लक्षणं च दुःखत्वमेव । [ क ] तच्चेतरद्वेषानधीनद्वेषविषयत्वम् । ( न्या० बो० ) [ ख ] अनिष्टसाधनताज्ञानानधीनद्वेषविषयत्वम् । ( वाक्य० ) [ ग ] ज्ञानविशेषः । ( गौ० वृ० १।२१ ) ( मु० )

२ बाधना पीडा तदेव लक्षणं स्वरूपं यस्य तदित्यर्थः । ( गौ० वृ० १।२१ ) ( मु० )

३ प्रतिकूल*वेदनीयतया वासनात्मकमित्यर्थः । ( सर्व० भक्ष० )

४ अधर्ममात्रासाधारणकारणकगुण इत्यर्थः । ( सि० च० )

---

* अत्र प्रतिकूलत्वं च द्विष्टत्वम् ।

च स्वपक्षाः स्थापनीया भवन्तीति । ( वात्स्या० १।१।२५ )

[ ख ] यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते सः । ( वात्स्या० १।१।१ )

[ ग ] वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरानिश्चयविषयः । ( गौ० वृ० १।१।२५ )

[ घ ] व्याप्तिसंवेदनभूमिः । ( सर्व० अक्ष० )

[ ङ ] वादिप्रतिवादिनोः संप्रतिपत्तिविषयोर्थः । (त० भा० ) ( दि० ) यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ महानसो दृष्टान्तः । (स्व०) स द्विविधः । साधर्म्यदृष्टान्तः[1] । वैधर्म्यदृष्टान्तः[2] । आद्यः, पर्वते वह्निसाधने धूमवत्त्वस्य हेतोर्महानसः । द्वितीयः, तत्रैव धूमत्वस्य हेतोर्महाह्रदः । ( त० भा० ) ( सर्व० अक्ष० )

**दृष्टार्थकः**–(प्रमाणशब्दः) [ क ] यस्येह दृश्यतेर्थः स दृष्टार्थः । ( वात्स्या० १।१।८ )

[ ख ] शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थकः । ( गौ० वृ० १।१।८ ) यथा घटः पट इत्यादिशब्दो दृष्टार्थकः । ( स्व० )

**देवतात्वम्**–[ क ] मन्त्रकरणकहविस्सरणभागित्वेनोद्देश्यत्वम् । ( चि० ४ )

[ ख ] यागोद्देश्यत्वम् । ( गा० व्यु० १ ) यथा, अग्नये स्वाहा, पितृभ्यः स्वधेत्यादावग्न्यादीनां देवतात्वम् । ( स्व० )

**दैशिकविशेषणता**–( स्वरूपसंबन्धः ) अभावीयदैशिकस्वरूपसंबन्धः । यथा भूतलघटाभावयोः संबन्धः । ( स्व० )

**दोषः**–१ अप्रमासाधारणकारणम्[3] । ( त० दी० ४ ) यथा काचकामलपित्त-

---

१ अन्वयदृष्टान्त इत्यर्थः ।

२ व्यतिरेकदृष्टान्त इत्यर्थः ।

३ अप्रमात्वाश्रितिकदेशवृत्तिधर्मानवच्छिन्ना प्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः । ( नील० )

मण्डूकवसाञ्जनादिः। (स्व०) २ प्रवर्तनालक्षणा[1] दोषाः। (गौ० १।१।१८) प्रवर्तना प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति प्रत्यात्मवेदनीया हीमे दोषाः। कस्माल्लक्षणतो निर्दिश्यन्त इति। कर्मलक्षणाः खलु रक्तद्विष्टमूढाः। रक्तो हि तत्कर्म कुरुते, येन कर्मणा सुखं दुःखं वा भजते। तथा द्विष्टस्तथा मूढ इति। दोषा रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं[2] भवतीति। (वात्स्या० १।१।१८) (त० दी०) ३ व्यावृत्तिव्यवहारान्यतरप्रयोजनविघटको धर्मः[3]। यथैकशफत्वस्य गोर्लक्षणस्यासंभवः। स च दोषस्त्रिविधः। अव्याप्तिः। अतिव्याप्तिः। असंभवः। ४ यद्विषयकत्वेन[4] ज्ञानस्यानुमितितत्कारणीभूतपरामर्शान्यतरप्रतिबन्धकत्वं सः। स पञ्चविधः। सव्यभिचारत्वम्। विरोधः। सत्प्रतिपक्षः। असिद्धिः। बाधः। (चि० २) (न्या० बो०) विध्युल्लङ्घनजन्योदृष्टविशेषो दोष इति मीमांसकाः। गुरुतल्पगमनाभक्ष्यभक्षणादिजन्यपापविशेष इति धर्मज्ञाः पौराणिकाश्च। यतिभङ्गश्रुतिकटुत्वादयो दोषा इति काव्यज्ञाः। वातपित्तकफा इति त्रयो दोषा इति भिषजः। प्रतीपगामिनापि गुरुणोक्तस्य वचनस्योपेक्षाजनितः पापविशेष इति श्रद्धालवो जनाः। अनुद्योगदर्शनीयवस्त्वाद्यनवलोकनादयो दोषा इतीदानींतना विद्वन्मन्याः केचिन्मन्यन्ते।

---

१ प्रवर्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम्। दोषलक्षणं च लौकिकप्रत्यक्षविषयकत्वे सति प्रमान्यत्वे सति प्रवृत्तिजनकत्वम्। (गौ० वृ० १।१।१८)

२ दोषाणां त्रयः *पक्षाः। रागपक्षो, द्वेषपक्षो, मोहपक्षः। तत्राद्यः पक्षः। कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति। द्वितीयः पक्षः। क्रोध ईर्ष्यासूया द्रोहोमर्षोभिमान इति। अथ तृतीयः पक्षः। विपर्ययः संशयस्तर्को मानः प्रमादो भयं शोक इति। (गौ० वृ० ४।३) (वात्स्या० ४।३)

३ स च लक्षणदोष इति व्यवह्रियते।

४ स च हेतुदोषो हेत्वाभासश्चेत्यपि व्यवह्रियत इति विज्ञेयम्। तल्लक्षणं च हेत्वाभासशब्दव्याख्यानावसरे सविस्तरं संपादयिष्यत इत्यत्रैव विरम्यते।

---

* अत्र तु, माया दम्भोभिमानस्तर्को भयं शोकश्चैते हि भाष्ये नोपलभ्यन्ते।

दोहनम्–विभागावच्छिन्नक्षरणानुकूलो व्यापारः । यथा गां दोग्धि पयः[1] इत्यादौ दुह्यत्यर्थः । ( गा० व्यु० २ )

द्योतकत्वम्–[ क ] अर्थविशेषे तात्पर्यग्राहकत्वम् । ( चि० ४ ) ( नील० ) यथा प्रहरत्यपहरतीत्यादौ[2] प्रापाद्युपसर्गाणां द्योतकत्वम् । यथा वा, चित्रगुमानयेत्यादौ[3] चित्रपदस्य द्योतकत्वम् । ( स्व० )

[ ख ] समभिव्याहृतपदीयशक्तिव्यञ्जकत्वमिति शाब्दिका वदन्ति ।

द्रवत्वम्–( गुणः ) स्यन्दनासमवायिकारणम् । पृथिवीजलतेजोवृत्ति । द्रवत्वं द्विविधम् । सांसिद्धिकम् । नैमित्तिकम् । सांसिद्धिकं[4] जले । नैमित्तिकं पृथिवीतेजसोर्वर्तते[5] । ( त० सं० )

द्रव्यत्वम्[6]–( सामान्यम् ) गगनारविन्दसमवेतत्वे सति नित्यगन्धासमवेतम् ( सर्व० औलु० ) तच्च नित्यमनेकद्रव्यमात्रसमवेतम् । ( वै० उ० १।२। ११ ) यथा पृथिव्यादीनां द्रव्यत्वम् । ( स्व० )

द्रव्यम्–( पदार्थः ) १ [ क ] गुणाश्रयः[7] ।

[ ख ] समवायिकारणम् ( त० भा० )

---

१ अत्र च धात्वर्थतावच्छेदकीभूतक्षरणस्य पयोवृत्तित्वात्पयसो मुख्यं कर्मत्वम् । गोस्तु तादृशक्षरणजन्यविभागाश्रयत्वाद्गौणं कर्मत्वमिति बोध्यम् ।

२ अत्र च, धातोरेव शक्त्या प्रहारविहाराद्यर्थबोधकत्वसंभवेनोपसर्गाणां द्योतकत्वमेवेति बोध्यम् ।

३ अत्र च, गोपदेनैव लक्षणया चित्रगोस्वामिबोधनाच्चित्रपदस्य द्योतकत्वमेवेति ।

४ अग्न्यादिसंयोगाजन्यमित्यर्थः । ( वाक्य० ) हिमकरकादौ चादृष्टविशेषेण घनीभावेन सांसिद्धिकद्रवत्वप्रतिबन्धः कल्प्यते । ( दि० १ ) ( सि० च० ) एवं च हिमकरकादावपि सांसिद्धिकं द्रवत्वमस्त्येवेति बोध्यम् ।

५ घृतलाक्षादिपृथिवीषु सुवर्णादितेजस्सु चाग्निसंयोगजन्यं द्रवत्वं वर्तत इति ज्ञेयम् । ( त० दी० )

६ अत्र, द्रव्यत्वत्वं तु द्रव्येतरासमवेतत्वे सति सकलद्रव्यसमवेतत्वम् । एवं गुणत्वत्वपृथिवीत्वत्वादिकमपि स्वयमूह्यम् ।

७ गुणाश्रयत्वं चात्र [ क ] गुणयोग्यत्वम् । तच्च गुणात्यन्ताभावानधिकरणत्वम् । ( त०भा० ) [ ख ] गुणसमानाधिकरणसत्ताभिन्नजाति*मत्त्वम् । ( त० दी० )

---

* इदमेव द्रव्यलक्षणमिति बोध्यम् ।

[ ग ) द्रव्यत्वरूपजातिमत् । ( त० दी० ) २ वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन विवक्षित इति शाब्दिका वदान्ति । तच्च द्रव्यं न्यायनये नवविधम् । पृथिव्यापस्तेजो वायुराकाशः कालो दिगात्मा मन इति । ( त० भा० ) ( त० सं० ) ( भा० प० ) तत्र दिक्कालौ परमात्मनो नातिरिच्येते इति दीधितिकृदुक्ति । ( दि० १ )

**द्रोहः**–[ क ] अहितभागितयेच्छाविषयता । यथा शत्रवे द्रुह्यतीत्यादौ द्रुह्यत्यर्थः । ( गा० व्यु० ४ )

[ ख ] नाशाय द्वेषः ।

[ ग ] हिंसेति परे मन्यन्ते । ( गौ० वृ० ३।४ )

**द्वारम्**–व्यापारवदस्यार्थेनुसंधेयः । ( राम० )

**द्वित्वम्**–( संख्या ) [ क ] अपेक्षाबुद्धिविशेषविषयत्वम्[1] । ( दि० १ )

[ ख ] अपेक्षाबुद्धिजन्यो[2] गुणविशेषः । यथा, अयमेकोयमेक इति बुद्ध्यनन्तरमिमाविति[3] । ( स्व० )

**द्वीन्द्रियग्राह्यगुणत्वम्[4]**– [ क ] इन्द्रियत्वावान्तरत्वक्त्वचक्षुष्ट्वतदुभयधर्मावच्छिन्नजनकतानिरूपितजन्यताश्रयग्रहविषयगुणत्वम् ।

[ ख ] चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्मसमवायिगुणत्वम् । ( दि०गु० )

**द्वेषः[5]**–( गुणः ) [ क ] अमर्षलक्षणः । ( वात्स्या० ४।१।३ )

---

१ एवमेव त्रित्वचतुष्ट्वादिकं स्वयमूह्यम् ।

२ द्वित्वादेरपेक्षाबुद्धिजन्यत्वे प्रमाणमाहुराचार्याः । अपेक्षाबुद्धिर्द्वित्वादेरुत्पादिका भवितुमर्हति व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वाच्छब्दं प्रति संयोगवदिति । ( सर्व० औलु० )

३ द्वित्वोत्पत्तिप्रकारः प्रदर्श्यते । [ क ] तत्र प्रथममिन्द्रियार्थसंनिकर्षः । तस्मादेकत्वसामान्यज्ञानम् । ततोपेक्षाबुद्धिः । ततो द्वित्वोत्पत्तिः । ततो द्वित्वसामान्यज्ञानम् । तस्माद्द्वित्वगुणज्ञानम् । ततः संस्कारः । ( सर्व० औलु० ) [ ख ] प्रथममपेक्षाबुद्धिः । ततो द्वित्वोत्पत्तिः । ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकात्मकम् । ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च । ततो द्वित्वनाश इति । ( मु० गु० )

४ द्वीन्द्रियग्राह्यगुणाश्च, संख्यादिसप्तकं द्रवत्वं वेगः स्नेहश्च । ( भा० प० गु० )

५ स च मनोग्राह्यः । ( भा० प० ) द्वेषलक्षणं च निवृत्तेः साक्षादनुकूलत्वम् । ( वाक्य० )

[ख] निवृत्तिलिङ्गः । (वात्स्या० ३।२।३७)

[ग] द्विष्टसाधनताजन्यो गुणविशेषः । (सि० च०)

**द्व्यणुकम्**[1]–[क] परमाणुद्वयसंयोगेन यदुत्पद्यते तत् । (त० दी० १)

[ख] अणुर्द्वौ परमाणू स्यादिति बादरायणाचार्याः ।

## ध.

**धर्मः**–१ वृत्तिमान्[2] । यथा घटत्वाकाशत्वादिर्धर्मः । (स्व०) २ वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म इति मीमांसकाः ।

**धर्मः**[3]–(गुणः) [क] यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः । (वै० १।१।२)

[ख] शरीरादिजनकात्मविशेषगुणः । (त० भा०)

[ग] विहितकर्मजन्योदृष्टविशेषः । (त० सं०) यथा यागगङ्गास्नानादिव्यापारः । (त० भा०)

**धातुः**[4]–[क] फलानुकूलव्यापारो धात्वर्थः । यथा गच्छति वातीत्यादौ गम्याद्यर्थः । (स्व०)

[ख] व्यापार इति रत्नकोशकृत् । (चि० ४)

[ग] फलं व्यापारश्चोभयं धात्वर्थ इति शाब्दिका वदन्ति । धातुर्द्विविधः । सकर्मकः । अकर्मकः । सकर्मकाकर्मकतदुभयद्विकर्मकभेदेन चतुर्विधो धातुरिति केचन मन्यन्ते । भूवादयो धातव इति शाब्दिकाः । त्वक्चर्ममांसादयः सप्त धातव इति मन्त्रयोगशास्त्रविदः । रेत इत्यपीति भिषजः । त्रपुलोहादयो धातव इति काव्यज्ञाः संगिरन्ते ।

**धारणम्**–१ द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्व-

---

१ तच्च जन्यद्रव्यावयवेतीन्द्रियं चेत्यवधेयम् ।

२ यत्र कुत्रचिद्वर्तते यः स धर्म इत्यर्थः ।

३ स च वासनया जन्यते, भोगतत्त्वज्ञानादिना नश्यतीति ज्ञेयम् । (सि० च०)

४ अत्र धातुशब्देन भूवागमादयो गृह्यन्त इति न काचिदनुपपत्तिः ।

५ अत्र च सर्वे सर्वार्थ*वाचका इति शाब्दिकानां राद्धान्तः ।

---

* सर्वार्थवाचकत्वं च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वम् ।

म् । यथा विप्राय शतं धारयतीत्यादौ धात्वर्थः । (गा० व्यु० ४) २ देशबन्धं चित्तस्य धारणेति योगिनो वदन्ति । (गौ० वृ० ४।११९) ३ मनसा ग्रहणमिति काव्यज्ञाः ।

**धृतिः**—गुरुणो द्रव्यस्यापतनम् । ( कु० ५ ) ( दि० १ )

**ध्यानम्**—तत्प्रत्ययैकतानता । ( गौ० वृ० ४।११९ ) यथा, ध्येयः सदा सूर्यमण्डलमध्यवर्ती परमात्मेत्यादौ । ( स्व० )

**ध्वंसः**[1]—( अभावः ) [ क ] विनष्ट इति प्रतीतिसाक्षिक उत्पत्तिमानभावः । ( न्या० म० १ ) ( त० दी० ) ( वाक्य० )

[ख] सादिरनन्तः[2] । (त० सं०) यथा घटो नश्यतीत्यादौ धात्वर्थः । (स्व०)

## न.

**नञ्**[3]—भेदोऽत्यन्ताभावो वा नञर्थः । यथा घटः पटो न भवति, अत्र घटो नास्तीत्यादौ । ( स्व० )

**नमः**—१ त्यागः[4] । यथा, एषोऽर्घ्यः शिवाय नम इत्यादौ नमःशब्दार्थस्त्यागः । २ नमस्कारवदस्यार्थोऽनुसंधेयः । ( गा० व्यु० ४) ( राम० )

**नमस्कारः**[5]—[क] यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलव्यापारविशेषस्तस्य स नमस्कारः[6] । (चि० १) यथा हरये नमो, देवदत्तो यज्ञदत्तं प्रणमतीत्यादौ नमत्यर्थः । ( स्व० )

---

१ स च प्रतियोगिजन्यः प्रतियोगिसमवायिवृत्तिर्भवति । ( त० दी० ) किंच कार्यस्योत्पत्त्यनन्तरमुत्पद्यते, नित्यश्चेति ज्ञेयम् । लक्षणं च ध्वंसत्वमेव । तच्च जन्याभावत्वम् । ( मु० १ )

२ उत्पत्तिमत्त्वे सति नाशशून्य इत्यर्थः ।

३ शाब्दिकमते नञर्थाः षट् । तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः, इति । प्रकारान्तरेण नञर्थो द्विविधः । प्रसज्यप्रतिषेधः । पर्युदासः ।

४ प्रयोक्तृत्वसामानाधिकरण्यविशिष्टैककालीनोभयवृत्तिशरीरजातित्वसंबन्धेन नमःपदोपलक्षितधर्मावच्छिन्नकर्तृकत्याग इति निष्कर्षः ।

५ लक्षणं च नमस्कारत्वमेव । तच्च स्वापकर्षबोधजनकतावच्छेदकजातिमत्त्वम् । ( मू० म० १ )

६ स्वा*पकर्षबोधानुकूलः स्वीयव्यापार इति परमार्थः । ( गा० व्यु० ४ ) ( राम० )

---

* स्वमुच्चारयिता । ( गा० व्यु० ४ ) ( राम० )

[ ख ] मत्तस्त्वमुत्कृष्टस्त्वत्तोहमपकृष्ट इति ज्ञानविशेष इति परे वदन्ति। (त०प्र०) स त्रिविधः । कायिकः । वाचनिकः । मानसिकः । ( स्व० )

**नयनम्**—संयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा ग्राममजां नयतीत्यादौ नयत्यर्थः । ( गा०व्यु० २ )

**नरकः**—दुःखविशेषः । (मु० गु०) यथा, नरके पतनं केन नरके लिखितं यदि । नरकेसरिणः स्मर्तुर्नरके पतनं कुतः, इत्यादौ । ( स्व० )

**नाम**—संकेतवदस्यार्थोनुसंधेयः । ( कृष्ण० )

**नाशः**—ध्वंसवदस्यार्थोनुसंधेयः ।

**निःश्रेयसम्**—[ क ] जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणम् ।

[ ख ] शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोपवर्गः । (वात्स्या० १।१।२)

[ ग ] तदभावे[1] संयोगाभावोप्रादुर्भावश्च मोक्षः । ( वै० ५।२।१८)

[ घ ] अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावः । (वै० उ० १।१।४)

[ ङ ] आत्यन्तिकी[2] दुःखनिवृत्तिः । (वै० उ० १।१।४ ) (गौ० वृ० १। १।२) (सर्व०) (दि० १) (त० दी०)

[ च ] स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसः । ( त० प्र० ) (गौ० वृ० १।१।२२)

[ छ ] एकविंशति[3]भेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः । (त० भा०)

---

१ [क] दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः । (गौ० १।१।२) [ख] इदमत्राकूतम् । योगबलेनात्मतत्त्वसाक्षात्कारे सति तेन च सर्वसवासनमिथ्याज्ञाने ध्वस्ते तन्निबन्धनानां रागद्वेषमोहानां दोषाणामपायात्प्रवृत्तेरपाये तन्निबन्धनस्य जन्मनोपाये तन्निबन्धनस्य दुःखस्यापाय इति तावद्वस्तुगतिः । (वै० उ० ५।२।१८)

२ आत्यन्तिकत्वं च [क] समानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । [ख] युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वम् । (वै०उ० १।१।४) [ग] स्वसमानाधिकरणदुःखासमानकालीनत्वम् । ( दि० १ ) (त० दी० ) [घ] निवर्त्यसजातीयस्य पुनस्तत्रानुत्पादः । ( सर्व० )

३ एकविंशतिभेदास्तु शरीरं* षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति । (त० भा०)

---

* शरीरादीनां दुःखसाधनत्वाद्दुःखत्वमुपचर्यते । ( त० भा० )

[ज] चरमदुःखध्वंसः। (त० दी०) यथा, तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादौ। (स्व०) निःश्रेयसं तावद्द्विविधम्। परम्। अपरम्। तत्रापरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव। तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्मोपभुञ्जानस्य। परं निःश्रेयसं तु क्रमेण[1] भवति। (गौ० वृ० १।१।१) स्वातन्त्र्यं मृत्युर्वा मोक्ष इति चार्वाका आहुः। आत्मोच्छेदो मोक्ष इति माध्यमिकाः। धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञानवादिनः। आवरणमुक्तिर्मुक्तिरित्यार्हताः। ब्रह्मांशिकजीवस्याविद्याप्रभवमिथ्याज्ञाननिवृत्तौ स्वस्वरूपाधिगम इति मायावादिनः शांकराः। सर्वकर्तृत्वमेकं विहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्त्वे सति भगवद्याथात्म्यानुभवो मोक्ष इति रामानुजाः। जगत्कर्तृत्वलक्ष्मीश्रीवत्सवर्जं विष्णोर्निरवधिकानन्दादिसदृशानन्दो[2] मोक्ष इति माध्वाः। द्विभुजकृष्णेन सह स्वांशभूतानां जीवानां गोलोके लीलानुभव इति वल्लभीयाः। पारमैश्वर्यप्राप्तिरिति पाशुपतशास्त्रज्ञा नकुलीशाचार्यादयो माहेश्वराः। चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनमिति कापालिकाः। पूर्णात्मतालाभ इति प्रत्यभिज्ञावादिनोभिनवगुप्ताचार्याः। पारदरसपानेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्ष इति रसेश्वरवादिनो गोविन्दभगवत्पादाचार्यादयः। दुःखनिवृत्तिरिति कणादादयो वैशेषिकाः। स्वर्गादिरिति मीमांसकाः। नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति तदेकदेशिनो भट्टसर्वज्ञादयः। परा पश्यन्ती मध्यमा वैखरी, इति वाणीचतुष्टये प्रथमायाः पराख्याया ब्रह्मरूपाया वाण्या दर्शनमिति पाणिनीयाः। प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं, अहंकारनिवृत्तावौदासीन्यमिति वा मुक्तिरिति सांख्याः। पुरुष-

---

१ तत्र च क्रमस्तावत्, तत्त्वज्ञानेन मिथ्याज्ञाननाशो मिथ्याज्ञाननाशे दोषनाशो दोषनाशे प्रवृत्तिनाशः प्रवृत्तिनाशे जन्मनाशो जन्मनाशे दुःखनाश इति। (गौ० वृ० १।१।२)

२ स च सारूप्यसालोक्यसामीप्यसायुज्यभेदाच्चतुर्विधः।

स्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यमिति पातञ्जलाः । ऊर्ध्वगतिरित्यन्ये । ( सर्व० ) ( सि० च० ) ( स्व० )

**निःश्वासः**—प्राणवायोर्व्यापारविशेषः । ( गौ० वृ० ३।३० ) यथा, निःश्वस्य मत्करधृतं निजमम्बरान्तमाकृष्य हन्त चलितैव कथं प्रिया मे, इत्यादौ । ( स्व० )

**निगमनम्**[1]—( न्यायावयवः ) [ क ] हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनम् । ( गौ० १।१।३९ ) साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते 'तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः' इति निगमनम् । निगम्यन्तेनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम् । निगम्यन्ते समर्थ्यन्ते संबध्यन्ते । ........सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति । ( वात्स्या० १।१।३९ )

[ ख ] व्याप्तिविशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शको व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टबोधकस्तादृशसाध्यबोधको वा न्यायावयवः । ( गौ० वृ० १।३८ )

[ ग ] अनुमितिहेतुपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकं वाक्यम् । ( चि० अव० )

[ घ ] पक्षे साध्योपसंहारः । ( त० भा० )

[ ङ ] हेतुसाध्यवत्तया पक्षप्रतिपादकं[2] वचनम् । ( त० दी० )

[ च ] पक्षे साध्यस्याबाधितत्वप्रतिपादकं वचनम् । ( सि० च० ) यथा

---

१ लक्षणं तु निगमनत्वमेव । तच्च [ क ] अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वम्* । ( दीधि० २ ) [ ख ] एतत्तस्माद्वह्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० ) निगमनप्रयोजनं चाबाधितत्वासत्प्रतिपक्षितत्वप्रतिपत्तिः† । सा च तद्धटकहेतुपदात्संपद्यते । ( स्व० ) निगमनस्य त्वन्वयिव्यतिरेकिभेदान्न भेदः । ( गौ० वृ० १।३८ )

२ हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवद्विषयकबोधजनकवाक्यमित्यर्थः ।

---

* अवयवजन्यप्रतीतिविशेष्यविशेष्यकस्वार्थप्रकारकबोधजनकावयवत्वमित्यर्थः । ( गा० हेतु० )

† उत्तरकालमबाधितासत्प्रतिपक्षितत्वविषयकबोधो मानसो द्रष्टव्यः । ( नील० )

पर्वतपक्षकवन्हिसाध्यकधूमहेतुकस्थले तस्मादग्निमानिति, तस्मात्तथेति[1] वा वाक्यं निगमनम् । ( त० भा० ) ( त० सं० )

**निग्रहः**–[ क ] पराजयप्राप्तिः । ( वात्स्या० ५।२।६० ) यथा, उत्तरं यदा न प्रतिपद्यते तदा निगृहीतो भवतीत्यादौ । ( स्व० )

[ ख ] खलीकारः । ( गौ० वृ० १।५९ )

[ ग ] पराहंकारनिराकरणमिति केचित् ।

**निग्रहस्थानम्**[2]–[क] विप्रतिपत्तिरप्रतिपत्तिश्च[3] निग्रहस्थानम् । (गौ० ५।२।६०) विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषये न प्रारम्भः । परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति । ( वात्स्या० १।२।६० )

[ ख ] वादिनोपजयहेतुः । ( त० भा० ) (सर्व० अक्ष०) ( त० दी० ) निग्रहस्थानानि द्वाविंशतिः । प्रतिज्ञाहानिः । प्रतिज्ञान्तरम् । प्रतिज्ञाविरोधः । प्रतिज्ञासंन्यासः । हेत्वन्तरम् । अर्थान्तरम् । निरर्थकम् । अविज्ञातार्थम् । अपार्थकम् । अप्राप्तकालम् । न्यूनम् । अधिकम् । पुनरुक्तम् । अननुभाषणम् । अज्ञानम् । अप्रतिभा । विक्षेपः । मतानुज्ञा । पर्यनुयोज्योपेक्षणम् । निरनुयोज्यानुयोगः । अपसिद्धान्तः । हेत्वाभासश्च । ( गौ० ५।२।१ ) ( त० भा० ) ( त० दी० )

**नित्यत्वम्**–१ [ क ] प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । ( त० प्र० १) ( वाक्य० ) यथा परमाण्वाकाशादीनां नित्यत्वम् ।

[ ख ] ध्वंसाप्रतियोगित्वम् । यथा केषांचिन्मते ध्वंसस्य नित्यत्वम् ।

---

१ व्याप्तिविशिष्टपक्षधर्मताविशिष्टधूमज्ञानज्ञाप्यवह्निमान्पर्वत इत्यर्थः । ( वाक्य० )

२ निग्रहस्य खलीकारस्य स्थानं ज्ञापकमित्यर्थः । तल्लक्षणं च [क] उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वम् । [ख] प्रतिज्ञाहान्याद्यन्यतमत्वं वेत्यपि वदन्ति । ( गौ० वृ० १।५९ )

३ विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवदित्यर्थः । ( गौ० वृ० १।५९ )

**निन्दा**–( अर्थवादः ) [ क ] अनिष्टफलवादः । वर्जनार्थं 'निन्दितं न समाचरेत्' इति । ( वात्स्या० २।१।६३ )

[ ख ] अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं वाक्यम् । यथा, एष वा व प्रथमो यज्ञानां यज्ज्योतिष्टोमो, य एतेनानिष्ट्वान्येन यजते स गर्ते पतत्ययमेवैतज्जीर्यते प्रवामीयत इत्यादि । ( गौ० वृ० २।६४ ) ( वात्स्या० २।१।६३ ) यथा वा, सोरोदीर्द्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादिः[1] ।

**निपातनम्**–१ अधोदेशसंयोगावच्छिन्नस्पन्दानुकूलव्यापारः । यथेश्वरो वेदमार्गविमुखान्नास्तिकजनान्नरके निपातयतीत्यादौ णिजन्तधात्वर्थः । (स्व०) २ अन्यथाप्राप्तस्यान्यथोच्चारणं निपातनमिति शाब्दिका वदन्ति ।

**निबन्धः**–एकग्रन्थोपनिबन्धनम् । यथा प्रमाणप्रमेययोर्निबन्धनम् । (गौ० वृ० ३।११३ )

**निमित्तम्**–( कारणम् ) समवायिकारणभिन्नमसमवायिकारणभिन्नं[2] च कारणम् । यथा तुरीवेमादिकं पटस्य निमित्तकारणम् । ( त० सं० १) यथा वा, आत्मनो विशेषगुणाः । ( भा० प० गु० )

**निमित्तत्वम्**–१ प्रयोजकत्ववदस्यार्थोनुसंधेयः । ( स्व० ) २ क्रियाजनिका विनियोज्यत्वेनेच्छा[3] तद्विषयत्वम् । यथा, चर्मणि द्वीपिनं हन्तीत्यादौ[4] चर्मादीनां निमित्तत्वम् । ( गा० व्यु० ७)

---

१ अयमर्थवादश्च, रजतस्याश्रु*जन्यत्वेन क्रतावृत्विग्भ्यो रजतदक्षिणा दातुर्यजमानस्य गृहे संवत्सरात्प्रारोदनरूपानिष्टबोधनद्वारा बर्हिषि रजतदक्षिणादानं निन्दतीति विज्ञेयम् ।

२ या, समवायिकारणताभिन्ना, असमवायिकारणताभिन्ना च कारणता तद्वदित्यर्थः । ( स्व० )

३ विनियोज्यत्वेनेच्छा च प्राप्यत्वप्रकारकेच्छा ।

४ तदुक्तम् । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि +पुष्कलको हतः, इति ॥

---

* अस्मिन्विषये तैत्तिरीयसंहितायाः कथा श्रूयते । पूर्वं देवदैत्यसंग्रामोभूत् । तत्र लब्धं द्रव्यं देवैरग्नेर्निकटे निक्षिप्तम् । तद्द्रव्यं गृहीत्वा पलायमानोग्निर्देवैर्निरुद्धः सन्नरोदीत् । तन्नेत्राश्रुणो जातं रजतमिति रजतदक्षिणादानानिन्देति ।

+ सीमाण्डकोशः । पुष्कलको गन्धमृगः ।

( स्व० ) २ यदकरणे प्रत्यवायस्तत्त्वं नित्यत्वमिति धर्मज्ञा वदन्ति । ( न्या० म० ) ३ नैरन्तर्यमिति काव्यज्ञाः ।

**नित्यसमः**–(जातिः) [ क ] नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । (गौ० ५।२५) अनित्यः शब्द इति प्रतिज्ञायते । तदनित्यत्वं किं शब्दे नित्यमथानित्यम् । यदि तावत्सदा भवति । धर्मस्य सदाभावाद्धर्मिणोपि सदाभाव इति नित्यः शब्द इति । अथ न सर्वदा भवति । अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः । (वात्स्या० ५।२५)

[ ख ] धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणि नित्यत्वसाधनम् । यथा शब्दस्य यदनित्यत्वं भवद्भिरुच्यते, तन्नित्यमनित्यं वा । यदि नित्यम् । तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम् । अथानित्यम् । तदा शब्दे कदाचिदनित्यत्वाभावोस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वमिति । ( नील० )

[ ग ] धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥ तद्द्विविधम् । साधारणम् । असाधारणम् । तत्राद्यं स्वव्याघातकम् । द्वितीयं त्रिविधम् । युक्ताङ्गहीनत्वम् । अयुक्ताङ्गाधिकत्वम् । अविषयवृत्तित्वम् । ( सर्व० पूर्ण० )

**निदर्शनम्**–उदाहरणवदस्यार्थोनुसंधेयः ।

**निदिध्यासनम्**–[ क ] श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसंधानम् । ( त० प्र० १ ) यथा, आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादौ । ( स्व० )

[ ख ] विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणमिति केचित् । ( नील० )

**निन्दा**–[ क ] दोषवत्तया ख्यापनम् ।

[ ख ] आरोप्यमाणदोषकथनमिति प्रामाणिकाः । यथा, निन्दति कञ्चुककारं प्रायः शुष्कस्तनी नारीत्यादौ निन्दा । ( स्व० )

**निन्दा**—(अर्थवादः) [क] अनिष्टफलवादः । वर्जनार्थं 'निन्दितं न समाचरेत्' इति । (वात्स्या० २।१।६२)
[ख] अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं वाक्यम्[1] । यथा, एष वा व प्रथमो यज्ञानां यज्ज्योतिष्टोमो, य एतेनानिष्ट्वान्येन यजते स गर्ते पतत्ययमेवैतज्जीर्यते प्रवामीयत इत्यादि । (गौ० वृ० २।६४) (वात्स्या० २।१।६२) यथा वा, सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादिः ।

**निपातनम्**—१ अधोदेशसंयोगावच्छिन्नस्पन्दानुकूलव्यापारः । यथेश्वरो वेदमार्गविमुखान्नास्तिकजनान्नरके निपातयतीत्यादौ णिजन्तधात्वर्थः । (स्व०) २ अन्यथाप्राप्तस्यान्यथोच्चारणं निपातनमिति शाब्दिका वदन्ति ।

**निबन्धः**—एकग्रन्थोपनिबन्धनम् । यथा प्रमाणप्रमेययोर्निबन्धनम् । (गौ० वृ० ३।११३)

**निमित्तम्**—(कारणम्) समवायिकारणभिन्नमसमवायिकारणभिन्नं[2] च कारणम् । यथा तुरीवेमादिकं पटस्य निमित्तकारणम् । (त० सं० १) यथा वा, आत्मनो विशेषगुणाः । (भा० प० गु०)

**निमित्तत्वम्**—१ प्रयोजकत्ववदस्यार्थोनुसंधेयः । (स्व०) २ क्रियाजनिका विनियोज्यत्वेनेच्छा[3] तद्विषयत्वम् । यथा, चर्मणि द्वीपिनं हन्तीत्यादौ[4] चर्मादीनां निमित्तत्वम् । (गा० व्यु० ७)

---

१ अयमर्थवादश्च, रजतस्याश्रु*जन्यत्वेन ऋतावृत्विग्भ्यो रजतदक्षिणा दातुर्यजमानस्य गृहे संवत्सरात्प्रारोदनरूपानिष्टबोधनद्वारा बर्हिषि रजतदक्षिणादानं निन्दतीति विज्ञेयम् ।

२ या, समवायिकारणताभिन्ना, असमवायिकारणताभिन्ना च कारणता तद्वदित्यर्थः । (स्व०)

३ विनियोज्यत्वेनेच्छा च प्राप्यत्वप्रकारकेच्छा ।

४ तदुक्तम् । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि +पुष्कलको हतः, इति ॥

---

* अस्मिन्विषये तैत्तिरीयसंहितायाः कथा श्रूयते । पूर्वं देवदैत्यसंग्रामोभूत् । तत्र लब्धं द्रव्यं देवैरग्नेर्निकटे निक्षिप्तम् । तद्द्रव्यं गृहीत्वा पलायमानोग्निर्देवैर्निरुद्धः सन्नरोदीत् । तन्नेत्राश्रुणो जातं रजतमिति रजतदक्षिणादानानिन्देति ।

+ सीमाण्डकोशः । पुष्कलको गन्धमृगः ।

**नियतत्वम्**—व्यापकत्वम् । ( न्या० बो० ) (नील०) यथा कार्यनियतपूर्ववृत्ति कारणमित्यादौ कारणस्य दण्डादेर्घटादिकार्यनियतत्वम् । ( स्व० )

**नियमः**—१ तद्वदन्यावृत्तित्वम्[1] । ( गा० सिद्धा० ) यथा धूमस्य वन्हिनियमः । ( स्व० ) २ व्यापकत्वम् । ( गा० सत्प्र० ) यथा वन्हेर्धूमनियमः । ( स्व० ) ३ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति योगिनः । ( गौ० वृ० ४।११ ) ४ तत्तद्व्यापारेषु भगवत्प्रेरणमिति वेदान्तिनो मध्वाचार्यानुयायिनः प्राहुः । ५ निषिद्धानाचरणतत्तदाश्रम-विहिताचरणे नियम इत्यन्य आहुः ।

**नियमविधिः**—( विधिः ) १ [ क ] यत्रोभयोः प्राप्तावेको नियम्यते तत्र । यथा व्रीहीनवहन्तीति[2] । ( सि० च० )

[ ख ] नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिरिति मीमांसकः । ( लौ० भा० )२ अन्यनिवृत्तिफलकासिद्ध-विषयकविधिरिति शाब्दिका वदन्ति ।

**निरनुयोज्यानुयोगः**—( निग्रहस्थानम् ) [ क ] अनिग्रहस्थाने निग्रहस्थाना-भियोगः[3] । ( गौ० ५।२।२३ ) ( नील० ) निग्रहस्थानलक्षणस्य मि-थ्याध्यवसायादनिग्रहस्थाने निगृहीतोसीति परं ब्रुवन्निरनुयोज्यानुयो-गान्निगृहीतो वेदितव्य इति । ( वात्स्या० ५।२।२३ )

[ ख ] अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तत् । ( गौ० वृ० ५।६५ )

[ ग ] निग्रहस्थानरहिते निग्रहस्थानोद्भावनम् । ( नील० ) सोयं चतुर्धा । छलम् । जातिः । आभासः । अनवसरग्रहणम् । ( गौ० वृ० ५। ६५ ) ( दि० १ )

---

१ व्याप्यत्वमित्यर्थः ।

२ अत्र व्रीहिषु नखविदलनमुसलावहननयोः प्राप्तौ मुसलावहननमेव नियम्यते । ( सि० च० )

३ अत्र चाभियोग उद्भावनम् । ( नील० )

**निरर्थकम्**–( निग्रहस्थानम् ) [ क ] वर्णक्रमनिर्देशवन्निरर्थकम् । ( गौ० ५। २।८ ) यथा नित्यः शब्दः कचटतपा जबगडदशत्वात् झभञ्घढधष्वदिति । एवंप्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तावर्थगतेरभावाद्वर्णा एव क्रमेण निर्दिश्यन्त इति । ( वात्स्या० ५।२।८ ) ( नील० ) [ ख ] अवाचकपदप्रयोगः । ( गौ० वृ० ५।५१ ) ( दि० १ )

**निराकाङ्क्षम्**–अनाकाङ्क्षवदस्यार्थोनुसंधेयः ।

**निरूढलक्षणा**–( लक्षणा ) अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा । ( गा० व्यु० १ ) यथा रथो गच्छतीत्यादौ तिवाख्यातस्याश्रयत्वे निरूढलक्षणा । ( दि० ४ ) यथा वा, कर्मणि कुशले इत्यादौ । ( सर्व० पात० )

**निरूपकत्वम्**–१ स्वरूपसंबन्धविशेषः । यथा घटनिष्ठकार्यतादण्डनिष्ठकारणतयोर्निरूप्यनिरूपकभावः । ( स्व० ) २ तज्ज्ञानजनकज्ञानविषयत्वम् । ( गा० अव० हेतु० ) यथा वृक्षाद्विभजत इत्यादौ विभागस्य वृक्षानिष्ठावधितानिरूपकत्वम् । ( स्व० )

**निरूपणम्**–ज्ञानानुकूलशब्दः । यथा, द्रव्यं निरूप्य गुणान्निरूपयतीत्यादौ निरूपयत्यर्थः । ( गा० व्यु० २ )

**निरूपितत्वम्**–स्वरूपसंबन्धविशेषः ।

**निरूप्यत्वम्**–निरूपितत्ववदस्यार्थोनुसंधेयः ।

**निर्णयः**–विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणम् । ( गौ० १।१।४१ ) स्थाप-

१ अत्र वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यम् ( गौ० वृ० ५।२।६५ )

२ अत्र कुशाल्लानीति व्युत्पत्त्या कुशलपदं दर्भादानकर्तरि यौगिकम् । विवेचकत्वसारूप्यात्प्रवीणे वर्तमानमनादिवृद्धव्यवहारपरंपरानुपातित्वेनाभिधानवत्प्रयोजनमनपेक्ष्य प्रवर्तते । ( सर्व० पात० )

३ लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापार इति फलितोर्थः ।

४ उदाहरणं तु निरूपकत्वशब्दव्याख्यानावसरे संपादितम् ।

५ तच्च प्रमाणानां फलम् । ( वात्स्या० ) ( त० भा० )

६ विमृश्य संदिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्यामर्थस्यावधारणं तदभावाप्रकारकं तत्प्रकारकं ज्ञानमित्यर्थः । ( गौ० वृ० १।४० ) ( त० भा० )

ना साधनम् । प्रतिषेध उपालम्भः । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते । तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानमवश्यंभावि । यस्यावस्थानं तस्यावधारणं निर्णयः । ( वात्स्या० १।१।४१ )

**निर्देशः**–१ शब्दप्रयोगः । ( गौ० वृ० ५।२।१ ). यथा, अनुनासिक इति निर्देशादित्यादौ । ( स्व० ) २ यत्किंचिदर्थप्रतिपादकः शब्दः । यथा साध्यनिर्देशः प्रतिज्ञेत्यादौ । ( स्व० )

**निर्धर्मकत्वम्**–[ क ] किंचिन्निष्ठप्रकारत्वानिरूपकत्वम् । यथा निर्विकल्पकज्ञानस्य निर्धर्मकत्वम् । ( स्व० )

[ ख ] स्वभिन्नधर्मशून्यत्वमिति मायावादिनो वदन्ति । ( दि० १ )

**निर्धारणम्**–[ क ] जात्यादि[1]विशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम् । यथा नराणां क्षत्रियः शूरो, नरेषु वेत्यादौ षष्ठ्याद्यर्थो निर्धारणम् । (गा० व्यु० ६)

[ ख ] जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणमिति शाब्दिका वदन्ति ।

**निर्वाहकैक्यम्**–( संगतिः ) एकप्रयोजकप्र[2]योज्यत्वम् । (राम०) यथा, प्रत्यक्षनिरूपणानन्तरं परामर्शानुमित्योर्निरूपणे निर्वाहकैक्यं संगतिः । ( स्व० )

**निर्विकल्पकम्**[3]–( प्रत्यक्षम् ) नामजात्यादियोजनारहितं वैशिष्ट्यान[4]वगाहि निष्प्रकारकम् । ( चि० १ ) यथा किंचिदिति । ( त० सं० )

---

१ जात्यादयस्तु जातिगुणक्रियासंज्ञाः ।

२ यत्रैकेन कारणेन कार्यद्वयं तदधिकसंख्याकं वा कार्यमुत्पद्यते तत्रेयं संगतिः ।

३ तच्च ज्ञानमतीन्द्रियमिति ज्ञेयम् । (भा० प०)

४ वैशिष्ट्यानिष्ठसांसर्गिकविषयताशून्यमित्यर्थः । ( त० प्र० १ )

५ तदर्थश्च [ क ] प्रकारताशून्यं ज्ञानम् । ( न्या० बो० ) [ ख ] विशेषणविशेष्यसंबन्धानवगाहि ज्ञानम् । ( त० दी० ) ( मु० )

**निवृत्तिः**—(प्रयत्नः) द्वेषजन्यो गुणः[1]। (वै० उ० ३।१।१९) (सि० च०) यथा, संसारान्निवर्तते विद्वानित्यादौ धात्वर्थः। (स्व०)

**निश्चयः**[2]—१ तदभावाप्रकारकत्वे सति[3] तत्प्रकारकं ज्ञानम्। (त० प्र० २) (मु० गु०) यथा भूतलं घटवदिति निश्चयः। (स्व०) २ विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानम्। यथा निर्वह्निः पर्वतो वह्निमानिति ज्ञानम्। (गा० सामा०) ३ आधेयताविशेषणतापन्नस्याधिकरणस्य या संशयत्वनिरूपकविशेष्यता[4]न्यविशेष्यता तन्निरूपितप्रकारताशालिज्ञानम्[5]। (गा० साधा०)

**निषेधः**—अभाववदस्यार्थोनुसंधेयः।

**निष्क्रमणम्**—१ स्पर्शवद्द्रव्यसंचारः। यथा सांख्यमते निष्क्रमणमाकाशस्य लिङ्गम्। (वै०उ०२।१।२०)२ आ प्रसवाच्चतुर्थे मासे स्त्रियो देवतादर्शनार्थं गृहाद्बहिर्गमनं निष्क्रमणमिति मौहूर्तिका वदन्ति।

**नृत्यम्**—नाट्यशास्त्रानुसारेण हस्तपादादीनामुत्क्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं हावभावसमेतं च। (सर्व० नकु०) यथा, शिवो नृत्यति संध्यायामुत्साहेन गणैः सहेत्यादौ नृत्यत्यर्थः। (स्व०)

**नैर्ऋती**—(दिक्) सुमेरुव्यवहितोदयगिरिव्यवहिता च दिक्। (वै०वि० २।२।१०) यथा, अक्कलकोटग्रामान्नैर्ऋत्यां झळकीग्रामो द्वादशसु क्रोशेषु। (स्व०)

**नोदनम्**—(संयोगः) [क] स संयोगविशेषः। येन संयोगेन जनितं कर्म

---

१ लक्षणं च निवृत्तित्वमेव। तच्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः। (दि० गु०)

२ अत्र च संशयभिन्नं ज्ञानं निश्चय इति सर्वेषां सिद्धान्तः।

३ तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानमित्यर्थः। (दि० गु०)

४ अत्र, संशये च प्रत्येककोटिनिश्चयीयविशेष्यताभ्यामतिरिक्तैव विशेष्यतेति। (गा० साधा०)

५ तत्र साध्याभावांशे निश्चय इत्युच्यते।

संयोगिनोः परस्परं विभाग हेतुर्न भवति, यः संयोगः शब्दनिमित्तकारणं न भवति वा । ( वै०उ०५।२।१ )

[ ख ] क्रियादिकारणीभूतः संयोगः । ( सि०च० )

[ ग ] चलस्य[1] वेगवद्द्रव्यसंयोगविशेष इति मायावादिनः ।

न्यायः[2]—१ [ क ] प्रमाणैरर्थपरीक्षणम् ।

[ ख ] प्रत्यक्षागमाश्रितमनुमानम् । ( वात्स्या०१।१।१ )

[ ग ] परार्थानुमानम् । (सर्व० अक्ष० )२ [ क ] आन्वीक्षिकी[3] विद्या ।

[ ख ] न्यायशास्त्रम् । ( वात्स्या० ) ( गौ०वृ०।१।१।१ ) ३ [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य[4] पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः प्रतिज्ञा । हेतुरनुमानम् । उदाहरणं प्रत्यक्षम् । उपनयनमुपमानम् । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । सोयं परमो न्याय इति । ( वात्स्या० १।१।१ )

---

१ एतन्मतेभिघातस्तु स्थिरस्य वेगवद्द्रव्यसंयोगविशेष एव ।

२ नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्याय इति ।

३ सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते । तथा च, न्यायो मीमांसा धर्मशास्त्राणीति श्रुतिः ॥ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेत्यादिस्मृतिः ॥ मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तित इति पुराणम् ॥ त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकत इति मनुः ॥ तथा, यस्तर्केणानुसंधत्ते स धर्मं वेद नेतर इत्यादि मोक्षधर्मे ॥ तत्रोपनिषदं तात परिशेषं तु पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं परामित्युपनिषत् । ( गौ०वृ०१।१।१ )

४ अत्रायं नियमः, संशयितेर्थे न्यायः प्रवर्तत इति । ( वात्स्या०१।१।१ ) तल्लक्षणं च न्यायत्वम् । तच्चात्र [ क ] उचिता*नुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वम् । ( दीधि० अव० ) ( न्या०बो० ) [ ख ] तादृशयत्किंचिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा या या कारणता तत्तदवच्छेदककोटिप्रविष्टयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वम् । ( गा०अव० )

---

* अत्रौचित्यं च कथकसंप्रदायसिद्धत्वम ।

[ ख ] समस्त[1]रूपोपेतलिङ्गबोधकवाक्यजातम् । ( कु० १ )

[ ग ] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम् । ( चि०अव०२ )

[ घ ] क्रमिकप्रतिज्ञादिसमुदायः । यथा पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले पर्वतो वह्निमानिति प्रतिज्ञादिवा[2]क्यपञ्चकं न्यायः । (न्या०म०२)

न्यायशास्त्रम्—असाधारण्येन व्यपदेशा भवन्तीति न्यायेन न्यायस्य परार्थानुमानापरपर्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया प्रधानत्वेन तथा व्यपदेशो युज्यते । ( सर्व० अक्ष० ) यथा गौतममुनिप्रणीतं न्यायदर्शनम् । ( स्व० )

न्यायाभासः—यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं स न्यायाभासः । ( वात्स्या० १।१।१ ) यथा ह्रदो वह्निमान्धूमात्, परमात्मा नास्ति निरवयवत्वादित्यादि । ( स्व० )

न्यूनम्—( निग्रहस्थानम् ) [ क ] हीनमन्यतमेनाप्यवयवेन । ( गौ० ५।२।१२ ) प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम् । साधनाभावे साध्यासिद्धिरिति । ( वात्स्या० ५।२।१२ )

[ ख ] यत्र विवक्षितार्थसमर्पकात्किंचिन्न्यूनं तत् । ( त० भा० )

[ ग ] यत्किंचिदवयवशून्यावयवाभिधानम् । ( गौ० वृ० ५।५५ ) ( दि० १ ) ( नील० ) यथा, पर्वतो वह्निमान्धूमाद्यो यो धूमवान्स वह्निमांस्तथा चायमिति । ( स्व० )

## प.

पक्षः—१ विप्रतिपत्त्येककोटिः । ( गौ० वृ० १।४१ ) यथा, शब्दो नित्यो न

---

१ समस्तरूपाणि च, पक्षसत्त्वम् । सपक्षसत्त्वम् । विपक्षासत्त्वम् । अबाधितविषयत्वम् । असत्प्रतिपक्षितत्वं चेति ।

२ प्रतिज्ञादीनि पञ्च वाक्यानि तु, प्रतिज्ञा । हेतुः । उदाहरणम् । उपनयः । निगमनं, इति ।

वेत्यत्र नित्य इत्येकः पक्षः । अनित्य इत्यपरः पक्षः । (स्व०) २ पक्षतावान् (मु० २) यथा पर्वते धूमेन वह्निसाधने पर्वतः पक्षः[1] । (त० सं०) ३ पञ्चदशादिवसात्मकः कालः पक्ष इति मौहूर्तिका वदन्ति ।

**पक्षता**–[क] संदिग्धसाध्यधर्मत्वम्[3] । (चि० २) (त० भा०) (त० सं० २) (न्या० बो०)

[ख] यत्र साध्यस्य यादृशसंबन्धावगाहिनिर्णयनिवर्त्यो यः संशयः[4] स तत्र तादृशसंबन्धेन साध्यानुमितौ पक्षता । (दीधि० २)

[ग] उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभाव इति जीवनाथमिश्राः । (वै० उ० । ९।२।१)

**पक्षता**[5]–[क] सिसाधयिषाविरहसहकृतसाधकमानाभावः । (चि० २)

[ख] सिसाधयिषाविरहविशिष्टसिद्ध्यभावः[6] । (न्या० म०) (भा० प०)

[ग] सिसाधयिषाविरोधिप्रमाणाभावः । (वै० उ० ९।२।१)

[घ] यादृशयादृशसिसाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशसिसाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता । (दीधि०) (मु० २) (न्या० म० २) यथा पर्वते धूमेन वह्निसाधने पर्वतस्य पक्षत्वम् । (स्व०)

[ङ] अनुमित्युद्देश्यत्वमिति नवीनाः (न्या० बो०)

---

१ वक्ष्यमाणा पक्षता यस्मिन्नस्ति स पक्ष इत्यर्थः ।

२ सा त्वनुमितिप्रयोजिका पूर्वपक्षीया पक्षतेति बोध्यम् ।

3 विशेष्यतासंबन्धेन साध्यप्रकारकसंदेहत्वमित्यर्थः । (गा० पक्ष०) (वाक्य० २)

४ बाधप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालिसंशय इत्यर्थः । (गा० पक्ष०)

५. सा च सिद्धान्तपक्षतानुमितिप्रयोजिका चेति विज्ञेयम् ।

६ साध्यानुमितीच्छायाः समवायेन योभावः स्वरूपसमवायैतदुभयघटितसामानाधिकरण्यसंबन्धेन तद्विशिष्टायाः सिद्धेः समवायेनाभाव इत्यर्थः । (नील०) (गा० पक्ष०)

[ ष ] सिसाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षतेत्युपाध्यायाः । ( दीधि० ) ( दि० २ )

[ छ ] सिसाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिसाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षतेति सार्वभौमः ( दीधि० २ )

[ ज ] सिसाधयिषामात्रं पक्षतेति केचित् । विनाप्यनुमित्सां क्वचित्परामर्शादनुमितिप्रवाहस्याविरललग्नस्यानुभाविकत्वात्पक्षता नानुमितिहेतुरिति प्राभाकराः । ( दीधि० पक्ष० )

**पक्षधर्मता**—[ क ] व्याप्यस्य पक्षवृत्तित्वम् । ( त० सं० २ )

[ ख ] व्याप्यस्य पक्षसंबन्धः । ( वाक्य० २ ) यथा पर्वते धूमेन वह्नौ साध्ये धूमस्य पक्षधर्मता । ( स्व० )

**पक्षसमः**—संदिग्धसाध्यकधर्म्यन्तरम् । ( गा० साधा० )

**पक्षासिद्धिः**—आश्रयासिद्धिवदस्यार्थोनुसंधेयः । ( भा० प० )

**पचनम्**—पाकवदस्यार्थोनुसंधेयः ।

**पतनम्**—[ क ] अधःसंयोगावच्छिन्नस्पन्दः ।

[ ख ] स्पन्दत्वावान्तरजात्यवच्छिन्नः । ( गा० भव० ) यथा वृक्षात्पर्णं पततीत्यादौ पतत्यर्थः । ( स्व० ) यथा वा, वृक्षविभागजनकं व्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः पतनम् । ( वाक्य० १ )

[ग] गुरुत्वासमवायिकारणकं कर्मेति केचित् । (दि० १) (गा०व्यु०२)

**पदम्**[2]—[ क ] ते विभक्त्यन्ताः[3] पदम् । ( गौ० २।२।६० ) यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी । नामिकी आख्यातिकी

---

१ प्रत्यक्षसामग्रीस्थानेनुमानातिरिक्तसाधकमानेति दीधितिपाठोस्ति ।

२ तल्लक्षणं च पदत्वमेव । तच्च [ क ] वृत्तिमत्त्वम् । [ गौ० वृ० २।१२३ ) [ ख ] संकेतवद्वर्णत्वम् । ( वै० उ० २।२।२१ )

३ विभक्त्यन्तत्वं च शाब्दबोधौपयिकविभक्तिप्रकृतित्वम् । ( गा० भव० हेतु० )

वेत्यत्र नित्य इत्येकः पक्षः । अनित्य इत्यपरः पक्षः । (स्व०) २ पक्षता[1]वान् (मु० २) यथा पर्वते धूमेन वह्निसाधने पर्वतः पक्षः । (त० सं०) ३ पञ्चदशादिवसात्मकः कालः पक्ष इति मौहूर्तिका वदन्ति ।

**पक्षता**[2]–[क] संदिग्धसाध्यधर्मत्वम्[3] । (चि० २) (त० भा०) (त० सं० २) (न्या० बो०)

[ख] यत्र साध्यस्य यादृशसंबन्धावगाहिनिर्णयनिवर्त्यो यः संशयः[4] स तत्र तादृशसंबन्धेन साध्यानुमितौ पक्षता । (दीधि० २)

[ग] उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभाव इति जीवनाथमिश्राः । (वै० उ० । ९।२।१)

**पक्षता**[5]–[क] सिसाधयिषाविरहसहकृतसाधकमानाभावः । (चि० २)

[ख] सिसाधयिषाविरहविशिष्ट[6]सिद्ध्यभावः । (न्या० म०) (भा० प०)

[ग] सिसाधयिषाविरोधिप्रमाणाभावः । (वै० उ० ९।२।१)

[घ] यादृशयादृशसिसाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशसिसाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता । (दीधि०) (मु० २) (न्या० म० २) यथा पर्वते धूमेन वह्निसाधने पर्वतस्य पक्षत्वम् । (स्व०)

[ङ] अनुमित्युद्देश्यत्वमिति नवीनाः (न्या० बो०)

---

१ वक्ष्यमाणा पक्षता यस्मिन्नस्ति स पक्ष इत्यर्थः ।

२ सा त्वनुमितिप्रयोजिका पूर्वपक्षीया पक्षतेति बोध्यम् ।

३ विशेष्यतासंबन्धेन साध्यप्रकारकसंदेहत्वमित्यर्थः । (गा० पक्ष०) (वाक्य० २)

४ बाधप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालिसंशय इत्यर्थः । (गा० पक्ष० )

५ सा च सिद्धान्तपक्षतानुमितिप्रयोजिका चेति विज्ञेयम् ।

६ साध्यानुमितीच्छायाः समवायेन योभावः स्वरूपसमवायैतदुभयघटितसामानाधिकरण्यसंबन्धेन तद्विशिष्टायाः सिद्धेः समवायेनाभाव इत्यर्थः । (नील०) (गा० पक्ष०)

[ ख ] सिसाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षतेत्युपाध्यायाः। ( दीधि० ) ( दि० २ )

[ छ ] सिसाधयिषाविरहाविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिसाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षतेति सार्वभौमः ( दीधि० २ )

[ ज ] सिसाधयिषामात्रं पक्षतेति केचित्। विनाप्यनुमित्सां क्वचित्परामर्शादनुमितिप्रवाहस्याविरललग्नस्यानुभाविकत्वात्पक्षता नानुमितिहेतुरिति प्राभाकराः। ( दीधि० पक्ष० )

**पक्षधर्मता**–[ क ] व्याप्यस्य पक्षवृत्तित्वम्। ( त० सं० २ )

[ ख ] व्याप्यस्य पक्षसंबन्धः। ( वाक्य० २ ) यथा पर्वते धूमेन वह्नौ साध्ये धूमस्य पक्षधर्मता। ( स्व० )

**पक्षसमः**–संदिग्धसाध्यकधर्म्यन्तरम्। ( गा० साधा० )

**पक्षासिद्धिः**–आश्रयासिद्धिवदस्यार्थोनुसंधेयः। ( मा० प० )

**पचनम्**–पाकवदस्यार्थोनुसंधेयः।

**पतनम्**–[ क ] अधःसंयोगावच्छिन्नस्पन्दः।

[ ख ] स्पन्दत्वावान्तरजात्यवच्छिन्नः। ( गा० अव० ) यथा वृक्षात्पर्णं पततीत्यादौ पतत्यर्थः। ( स्व० ) यथा वा, वृक्षविभागजनकं व्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः पतनम्। ( वाक्य० १ )

[ग] गुरुत्वासमवायिकारणकं कर्मेति केचित्। (दि० १) (गा०व्यु०२)

**पदम्**[2]–[ क ] ते विभक्त्यन्ताः[3] पदम्। ( गौ० २।२।६० ) यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी। नामिकी आख्यातिकी

---

१ प्रत्यक्षसामग्रीस्थानेनुमानातिरिक्तसाक्षकमानेति दीधितिपाठोस्ति।

२ तल्लक्षणं च पदत्वमेव। तच्च [ क ] वृत्तिमत्त्वम्। [ गौ० वृ० २।१२३ ) [ ख ] संकेतवद्वर्णत्वम्। ( वै० उ० २।२।२१ )

3 विभक्त्यन्तत्वं च शाब्दबोधौपयिकविभक्तिप्रकृतित्वम्। ( गा० अव० हेतु० )

च । ब्राह्मणः, पचतीत्युदाहरणम् । ( वात्स्या० २।२।६० )

[ ख ] वर्णसमूहः[1] ( त० भा० ४ )

[ ग ] शक्तम् ( त० सं० ४ ) ( मु० ) यथा घट इत्यादिपदम् । ( स्य० )

[ घ ] सुप्तिङन्तं पदमिति शाब्दिका वदन्ति । तच्च चतुर्विधम् । यौगिकम् । रूढम् । योगरूढम् । यौगिकरूढम् । ( मु० १ ) आद्यं पाचकादिपदम् । द्वितीयं ब्राह्मणवाचकं विप्रपदम् । तृतीयं पङ्कजादिपदम् । चतुर्थमुद्भिदादिपदम् । ( तर्का० ४ ) ( मु० ४ )

पदार्थः[2]–पदाभिधेयः । ( त० दी० ) यथा, जात्याकृतिव्यक्तयः[3] पदार्थः । ( गौ० २।१।३१ ) ( २।२।६८ ) पदार्थाः सप्त[4] । द्रव्यम् । गुणः । कर्म । सामान्यम् । विशेषः । समवायः । अभावः, इति । ( त० सं० ) ( भा० प० ) ( न्या० म० ) ( चि० ) चिदचिदीश्वरभेदेन त्रयः पदार्था इति रामानुजीयाः । स्वतन्त्रपरतन्त्रभेदेन द्वौ पदार्थाविति माध्वाः । पतिपशुपाशभेदेन त्रयः पदार्था इति शैवा नाकुलीशाश्च । द्रव्यं गुणः कर्म सामान्यं विशेषः समवाय एते षट् पदार्था इति कणादप्रधाना वैशेषिकाः । प्रमाणं प्रमेयं संशयः प्रयोजनं दृष्टान्तः सिद्धान्तोवयवस्तर्को निर्णयो वादो जल्पो वितण्डा हेत्वाभासश्छलं जातिर्निग्रहस्थानमित्येते षोडश पदार्था इति गौतमप्रधाना नैयायिकाः । प्रकृतिर्विकृतिरुभयमनुभयमिति भेदेन

---

१ समूहश्चात्रैकज्ञानविषयीभाव एव । ( त० भा० )

२ लक्षणं च पदार्थत्वमेव । तच्च [ क ] पदशक्तिः । ( गा० व्यु० १ ) [ ख ] वृत्त्या पदोपस्थाप्यत्वम् । [ ग ] पदतात्पर्यविषयत्वम् । [ घ ] अभिधेयत्वम् । ( वाक्य० )

३ अत्रेदं बोध्यम् । गवादिपदानामियं गतिः । गुणकर्मादिवाचकपदानां तु जातिव्यक्ती एवार्थ इति । ( वै० उ० ७।२।२० )

४ एतेषु सप्तसु पदार्थेषु गौतमोक्तानां षोडशानां पदार्थानामन्तर्भावमाह । प्रत्यक्षप्रमाणस्य द्रव्येन्तर्भावः । अनुमानादीनां च गुणे । आत्मशरीरेन्द्रियाणां द्रव्ये । अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु । बुद्धेर्गुणे । आन्तरिन्द्रियस्य मनसो द्रव्ये । एवमन्येपि यथायथमन्तर्भावो द्रष्टव्यः । ( नील० )

चत्वारः पदार्था इति सांख्या आहुः ।

**परकृतिः**–( अर्थवादः ) [ क ] अन्यकर्तृकस्य व्याहतस्य विधेर्वादः । ( वात्स्या० २।१।६३ )

[ ख ] पुरुषविशेषनिष्ठमिथोविरुद्धकथनम् । यथा, हुत्वा वपामेवाग्रेभिघारयन्त्यथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेभिघारयन्त्यग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमित्यभिदधतीत्यादि । ( गौ० वृ० २।६४ ) ( वात्स्या० २।१।६३ )

**परतन्त्रम्**–[ क ] इतरसत्ताधीनसत्ताकम् । यथा भृत्यः परतन्त्रः । (स्व०)

[ख] क्वचित्, स्वेतरबाहिर्विषयकज्ञानजनकसामग्रीसापेक्षम् । (त०प्र०१) यथा मनश्चाक्षुषादिप्रत्यक्षे परतन्त्रम् । ( सर्व० चार्वा० )

**परत्वम्**[1]–( गुणः ) परव्यवहारकारणम्[2] । परत्वं द्विविधम् । दिक्कृतम् । कालकृतम् । दूरस्थे दिक्कृतं[3] परत्वम् । ज्येष्ठे कालकृतं[4] परत्वम् । ( त० सं० ) दिक्कृतं परत्वं मूर्तमात्रवृत्ति भवति । कालकृतं परत्वं तु जन्यद्रव्यमात्रवृत्ति भवति । ( सि० च० )

**परत्वम्**–१ [ क ] प्रतिपादकेच्छाविषयत्वम्[5] । ( चि० ) यथा हरिशब्दः सिंहपर इत्यादौ । यथा वा, सैन्धवमानयेत्यादौ भोजनसमये सैन्धवपदस्य लवणपरत्वम् । ( स्व० )

[ ख ] तत्प्रतीतीच्छयोच्चरितत्वमिति मीमांसकाः । (चि०१) (मू०म० )

---

१ लक्षणं च परव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वम् । ( वाक्य० )

२ परव्यवहारो द्विविधः । यथायं ज्येष्ठोयं दूर इति । ( वाक्य० )

३ अत्र दिक्कृतत्वं च ज्ञायमानदिग्जन्यत्वम् । यथा वैराजाद्वेणासंगमापेक्षया करहाटकं स्वसमवायिसंयुक्तसंयोगेन बहुतरदेशसंयोगवदिति ज्ञानेन दैशिकपरत्वमुत्पद्यते । ( वाक्य० १ )

४ अत्र कालकृतत्वं च [ क ] स्वसमवायिसंयुक्तसंयोगसंबन्धेन रविक्रियाप्रकारककालविषयकज्ञानजन्यत्वम् । ( वाक्य० ) [ ख ] बहुतरदिवाकरक्रियाविशिष्टशरीरज्ञानात्कालिकपरत्वोत्पत्तिरिति राद्धान्तः । ( सि० च० ) विशेषस्तु ( वै० उ० ७।२।२१ ) तत्र द्रष्टव्यः ।

५ तच्च शाब्दबोधप्रयोजकं तात्पर्यापरपर्यायमिति बोध्यम् ।

२ अधिकदेशवृत्तित्वम् । यथा द्रव्यत्वमपेक्ष्य सत्तायाः परत्वम् । ( मु० )
३ सूक्ष्मत्वम् । यथा, परं वा त्रुटेः । ( गौ० ४।८२ ) इत्यादौ त्रुटिमपेक्ष्य परमाणोः परत्वम् । ४ सर्वोत्कृष्टत्वमिति वेदान्तिनो वदन्ति ।

**परमाणुः**[1]–[ क ] परं वा[2] त्रुटेः । ( गौ० ४।२।१७ )

[ ख ] यस्मान्नाल्पतरमस्ति यः परमोल्पस्तत्र निवर्तते । यतश्च नाल्पीयोस्ति तं परमाणुं प्रचक्ष्महे इति । ( वात्स्या० ४।२।१६ ) यथा, जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥ ( वाक्य० )

[ ग ] चरमः सद्विशेषाणामनेकोसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ इति बादरायणाचार्याः ।

**परमात्मा**[3]–( आत्मा ) [ क ] सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी । ( वात्स्या० १।१।९ )

---

१ स च जन्यद्रव्यावयवो नित्यश्चेति नैयायिकवैशेषिकाणां सिद्धान्तः । ( ख० ) भूतत्वादि परमाणोर्लक्षणमिति सांख्या आहुः । ( गौ०वृ० ४।३१ )

२ त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः । अथवा, त्रुटेरवयवस्तदवयवो वा परमाणुरिति । यद्वा, त्रुटेः परं सूक्ष्मं परमाणुस्त्रुटवित्र वा विश्राम इति विकल्पोभिमतः । (गौ० वृ० ४।८२) अवयवविभागस्यानवस्थानाद्द्रव्याणामसंख्येयत्वात्त्रुटिनिवृत्तिरिति । ( वात्स्या० ४।२।१७ )

३ परमत्वं चात्र [ क ] प्रकृतेः सृष्टिस्थितिलयकर्तृत्वम् । ( सि० च० ) [ ख ] नित्यज्ञानादिमत्त्वेन सर्वोत्कृष्टत्वम् । ( त० प्र० ) परमात्मलक्षणं चेश्वरत्वम् । तच्च नित्यज्ञानाद्यधिकरणत्वम् । ( त० दी० ) ( सि० च० ) ( राम० ) परमात्मसत्त्वे प्रमाणमनुमानम् । तच्च, क्षित्यङ्कुरादिकं कर्तृजन्यं* कार्यत्वाद्घटवदिति । शरीरमन्तरेणैवेश्वरेण मन्त्रादिवत्कार्योत्पादनमिति नैयायिकसिद्धान्तः । परमाणव एवेश्वरस्य शरीरमिति केचित् । आकाशमेव शरीरमित्यपरे । संसारिणामदृष्टवशादीश्वरस्य शरीरम् । तच्च ब्रह्मविष्णुशिवानामित्यन्ये ब्रुवन्ति । भूतावेशान्यायेनेश्वरस्य शरीरमित्यपरे मेनिरे । ईश्वरः शरीररहित एव, परंतु संसारपङ्कनिमग्नानज्ञानिनउद्दिधीर्षुर्लीलाविग्रहं दधातीतीतरे प्रजल्पन्ति । जीवा एवेश्वरस्य शरीरमिति रामानुजीयाः । अप्राकृतं सच्चिदानन्दाद्येव शरीरमिति मतप्रवर्तकैकशिरोमणयो मध्वाचार्याः प्राहुः ।

---

* अत्र, कर्तृजन्यत्वं चादृष्टाद्वारककृतिमज्जन्यत्वम् । कार्यत्वं तु प्रागभावावच्छिन्नसत्ताप्रतियोगित्वम् । ( वे० उ० २।१।१९ ) ( दि० १ )

[ख] सर्वज्ञ ईश्वर एक एव । (त० सं०) तं परमात्मानं कर्मैवेति मीमांसका गदन्ति । वेदोक्तकर्मणः फलदातेश्वर इति मीमांसकैकदेशिनः । शिव इति शैवाः । विशुद्धं चैतन्यमिति मायावादिनः । ब्रह्मशब्दवाच्यो विष्णुरिति माध्वाः । द्विभुजः कृष्णः पुरुषोत्तमश्चेति वल्लभीयाः । परमेश्वर इति पातञ्जलाः । बुद्ध इति बौद्धाः । अर्हन्नित्यार्हताः । शब्द एवेति शाब्दिकाः । काल एवेति ज्योतिर्विदः । परमात्मा नास्त्येवेति चार्वाकादयो नास्तिका आहुः । (स्व०) न्यायनये परमात्मन्यष्टौ गुणा वर्तन्ते । संख्यादयः पञ्च बुद्धिरिच्छा प्रयत्नश्चेति । (भा० प० १) अपरिमिता ज्ञानानन्दादयो गुणाः सन्तीति माध्वाः । परमात्मा गुणशून्य इति मायावादिन आहुः ।

**परमापूर्वम्**–(अपूर्वम्) यत्र स्वर्गं प्रति दर्शपूर्णमासोभयत्वेन जनकत्वं तत्परमापूर्वम् । (दि० गु०) यथा दर्शपूर्णमासाभ्यां यजेतेत्यादौ दर्शपूर्णमासात्मकयागद्वयजन्यमपूर्वम् । (स्व०)

**परामर्शः**[1]–[क] व्याप्यस्य[2] पक्षवृत्तित्वधीः । (भा० प० २)

[ख] व्याप्तिविशिष्टपक्षधर्मताज्ञानम्[3] । यथा, पर्वते धूमेन वह्निसाधने वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानम् । (त० सं०) परामर्शो द्विविधः । पक्षप्रकारको व्याप्यविशेष्यकः । पक्षविशेष्यको व्याप्यप्रकारकः । आद्यो

---

१ स चानुमितिकारणं* तृतीयलिङ्गज्ञानमित्युच्यत इति लिङ्गपरामर्शशब्दव्याख्यावसरे व्यक्तीभविष्यति ।

२ व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमित्यर्थः । (मु० २)

३ तदर्थश्च [क] विषयितासंबन्धेन व्याप्तिविशिष्टं पक्षधर्मताज्ञानम् । (सि० च०) (दि० १।३) [ख] पक्षविशेष्यतानिरूपितहेतुप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानम् । (न्या० बो०) [ग] व्याप्तिघटकपदार्थविषयतानिरूपितसंबन्धनिष्ठविषयतानिरूपितपक्षधर्मतावच्छेदकावच्छिन्नविषयतानिरूपको निश्चयः । (वाक्य०) [घ] व्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयः, इति । (नील०)

---

* अत्र, तद्वत्ताज्ञानं प्रति तद्व्याप्यवत्ताज्ञानं कारणमिति सर्वेषां सिद्धान्तः ।

यथा, पर्वते वह्निव्याप्यो धूम इति ज्ञानम् । द्वितीयो यथा, वह्नि-व्याप्यधूमवानयमिति ज्ञानम् । ( मु० २ )

**परार्थानुमानम्**–( अनुमानम् ) [ क ] न्यायप्रयोज्यानुमानम् । ( न्या० बो० ) [ ख ] यत्तु, कश्चित्स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयवोपेत-मनुमानवाक्यं[1] प्रयुङ्क्ते तत्परार्थानुमानम् । ( त० भा० २ ) ( त०सं० ) यथा, पर्वतोग्निमान्, धूमत्वात्, यो यो धूमवान्स सोग्निमान्यथा महानसः, तथा चायं, तस्मात्तथा, इति । ( त० सं० )

**परिचायकम्**–[ क ] तदघटकत्वे सति तज्ज्ञापकम् । यथा, शब्दगुणकत्वरूपा-काशलक्षणे गुणः परिचायकः । (स्व०) यथा वा, तत्तद्धर्मावच्छिन्ननिरूपि-तविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वरूपे (गा०सामा०) हेत्वाभासलक्षणे तत्तद्धर्मावच्छिन्ननिरूपितत्वं विषयितानां परिचायकम् । [ ख ] उपलक्षणवदस्यार्थोनुसंधेय इति केचिद्वदन्ति ।

**परिच्छित्तिः**–यथार्थज्ञानवदस्यार्थोनुसंधेयः । ( कु० ४ )

**परिच्छेदः**–ज्ञानम् । ( चि० २ ) यथा, वाक्यार्थसामानाधिकरण्येन संज्ञानिमि-त्तपरिच्छेद इत्यादौ ।

**परिणामः**–[ क ] अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति । ( वात्स्या० ३।२।१६ )
[ ख ] गुणान्तरप्रादुर्भावः । यथा, सांख्यमते पयसः परिणामो[2] दधि । ( गौ० वृ० ३।८७ )

**परिनिष्ठितत्वम्**–अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । यथा माया-वादिनां वेदान्तिनां मते ब्रह्मणः परिनिष्ठितत्वम् । ( स्व० )

**परिभाषा**–आधुनिकसंकेतः । ( गा० श० ) ( वै० वि० ७।२।२० ) यथा शाब्दिकमते वृद्धिपदस्याकारैकारौकारेषु पाणिनिसंकेतः । ( स्व० )

---

१ अनेन प्रतिपादिताल्लिङ्गात्परोप्यग्निं प्रतिपद्यते । ( त० सं० )
२ विद्यमानस्य क्षीरस्य पूर्वरसनिरोभावोम्लरसात्मकगुणान्तरस्याविर्भावात् । ( गौ० वृ० ३।८७ )

**परिमण्डलम्**–१ परमाणुपरिमाणम् । २ परिमाणविशिष्टः परमाणुः । ( वै० वि० ७।१।२० )

**परिमाणम्**[1]–( गुणः ) मानव्य[2]वहारासाधारणकारणम् । तच्चतु[3]र्विधम् । अणु । महत् । दीर्घम् । ह्रस्वम् । (त० सं०) (मु०गु०) प्रकारान्तरेण परिमाणं द्विविधम् । नित्यम् । अनित्यम् । अनित्यं त्रिविधम् । संख्याजन्यम् । परिमाणजन्यम् । प्रचयजन्यम् । (मु०गु०) तत्राद्यं परमाणुद्वित्वजन्यं द्व्यणुके, द्व्यणुकबहुत्वजन्यं त्र्यणुके । द्वितीयं कपालपरिमाणजन्यं घटपरिमाणम् । तृतीयं तूलावयवसंयोग[4]जन्यं तूलपिण्डपरिमाणम् । (भा०प०) (सि०च०)

**परिशेषः**–प्रसक्तस्य प्रतिषेधेन्यत्राप्रसङ्गात्परिशिष्यमाणे संप्रत्ययः । (सि०च०)

**परिशेषानुमानम्**–[ क ] यदितरविशेषाभावत्वे सति सामान्यवत्त्वरूपो हेतुः । [ ख ] विशेषाभावसहकृतसामान्यहेतुकानुमानम् । यथा, अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे, मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादित्यनुमानम् । ( राम० )

**परिसंख्या**–(विधिः) [ क ] सर्वत्र प्राप्तस्य क्वचिद्विधिः[5] । यथा, पञ्च पञ्चनखा भक्ष्या[6] इति । (सि० च०) यथा वा, ऋतौ भार्यामुपेया[7]दिति । (स्व०) [ ख ] उभयोश्च युगपत्प्राप्ताावितरव्यावृत्तिपरो विधिरिति मीमांसकाः ।

---

१ तच्च नवसु द्रव्येषु वर्तत इति बोध्यम् । ( त० सं० )

२ [ क ] मानव्यवहारश्च, हस्तवितस्त्यादिव्यवहारः । ( वै० उ० ७।१।८ ) [ ख ] मानं परिमितिस्तस्य यो व्यवहारः 'इदं महदिदमणु' इत्याद्यात्मकः । (सि च० )

३ चतुर्विधमपि प्रत्येकं द्विविधम् । परमम् । मध्यम् । ( सि० च० )

४ अयं संयोगश्च शिथिल इत्युच्यते । ( भा० प० ) ( सि० च० )

५ तदुक्तम् । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते, इति ।

६ अत्र [ क ] सर्वेषां पञ्चनखानां भक्षणे प्राप्ते पञ्चैव पञ्चनखा भक्ष्या इति विधीयते । ( सि० च० ) [ ख ] पञ्चनखातिरिक्ताभक्षणं विधीयत इति विज्ञेयम् । ( स्व० ) पञ्चनखास्तु, शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः, इति । ( सि० च० )

७ अत्र च, ऋतुकाल एव भार्यागमनं विधीयत इति विज्ञेयम् । ऋतुकालातिरिक्तकाले भार्यागमनं निषिध्यत इति केचिदाहुः । अत्रापि नियमविधिरेवेत्यपरे मन्यन्ते ।

परिसंख्या द्विविधा । श्रौती । लाक्षणिकी । तत्राद्या, अत्र ह्येवावपन्तीति । द्वितीया, पञ्च पञ्चनखा भक्ष्या इति । ( लौ० भा० )

**परीक्षकः**–[ क ] नैसर्गिकं वैनयिकं बुद्ध्यातिशयं प्राप्तः । परीक्षकस्तर्केण प्रमाणैरर्थं परीक्षितुमर्हतीति । ( वात्स्या० १।१।२५ ) यथा, सायणमाधवः परीक्षकः । ( स्व० )

[ ख ] शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः । ( गौ० वृ० १।१।२५ )

**परीक्षा**–[ क ] लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणम् । ( वात्स्या० १।१।२ )

[ ख ] यथावल्लक्षितस्यैतल्लक्षणमुपपद्यते न वेति विचारः । (त० भा० १) यथा, एल्फिन्स्टन्पाठशालायां विद्यार्थिनां विद्वत्त्वपरीक्षा । ( स्व० )

**परोक्षत्वम्**–१ साक्षात्कारभिन्नज्ञानत्वम् । ( चि० १ ) ( मु० म० १ ) यथा, अनुमित्यादीनां परोक्षत्वम् । (स्व०) २ [ क ] वक्तुः साक्षात्काराविषयत्वम् । ( गा० व्यु० ल० ) यथा, बभूव योगी किल कार्तवीर्य इत्यादौ लिडर्थः परोक्षत्वम् । ( स्व० )

[ ख ] वक्तृभिन्नकर्तृकत्वमेव परोक्षत्वमिति केचिदाहुः । (गा०व्यु०ल०)

**पर्यनुयोज्योपेक्षणम्**–( निग्रहस्थानम् ) [ क ] निग्रहस्थानप्राप्तस्यानिग्रहः । ( गौ० ५।२।२२ ) पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहस्थानं प्राप्तोसीत्यननुयोगः । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम् । न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ( वात्स्या० ५।२।२२ )

[ ख ] निग्रहस्थानं प्राप्तवतो निग्रहस्थानानुद्भावनम् । (गौ०वृ०५।६४)

[ ग ] उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनम् । ( नील० )

**पर्याप्तिः**–( संबन्धः ) अयमेको घट इमौ द्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । यथा घटपटयो रूपगन्धावित्यादौ द्वित्वपर्याप्तिः । (दीधि०) ( गा० व्यु० १ ) पर्याप्तिर्द्विविधा । अर्धपर्याप्तिः । पूर्णपर्याप्तिश्च । तत्र

प्रथमा । यत्राधिकस्य निरासार्थं या पर्याप्तिर्निवेश्यते सार्धपर्याप्तिः । यथा पर्वतो वह्निमान्धूमादित्यादौ साध्यता[1]वच्छेदकवह्नित्वनिष्ठा पर्याप्तिः । द्वितीया । यत्र च न्यूनवारणार्थं या पर्याप्तिर्निवेश्यते सा पूर्णपर्याप्तिः । यथा पर्वतो महानसीयवह्निमानित्यादौ साध्यतावच्छेदकीभूतमहानसीयत्वविशि[2]ष्टवह्नित्वनिष्ठा पर्याप्तिः । ( ख० )

**पर्युदा[3]सः**—[ क ] प्रथमान्तप्रतियोगिवाचकपदसमभिव्याहृतेन समासघटकेन वा नञा यादृशोर्थो बोध्यते सः । यथा घटः पटो न भवतीत्यादौ, अब्राह्मण इत्यादौ च नञर्थः ।

[ ख ] पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञिति शाब्दिका वदन्ति ।

**पाकः**—१ [ क ] विजातीयतेजःसंयो[4]गः । ( त० भा० ) ( त० दी० ) ( न्या०

---

१ अत्रेदमाकूतम् । साध्याभाववदवृत्तित्वादिरूपे व्याप्यलक्षणे, साध्याभावपदेन साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रतियोगिताकाभावो पर्वतपक्षकवन्हिसाध्यकधूमहेतुकस्थले महानसीयवन्ह्यभाववारणाय विवक्षणीयः । संबन्धादिभेदेनावच्छेदकताभेदान्महानसीयवन्ह्यभावप्रतियोगितानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतापर्याप्तिः साध्यतावच्छेदकवह्नित्वेपि सत्त्वात्तद्वारणासंभवात्साध्यतावच्छेदकपर्याप्तावच्छेदकताकेत्यनेन साध्यतावच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वमिति विवक्षणीयम् । तेन महानसीयत्वरूपाधिकधर्मव्युदास इति ।

२ अत्रेदं बोध्यम् । पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादिगादाधरीयहेत्वाभासलक्षणे पर्वतो महानसीयवह्निमानित्यत्र पर्वतो वह्निमानित्यनुमितेरपि तादृशानुमितित्वापत्त्या तत्रत्यबाधेऽव्याप्तिवारणाय साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकत्वमिति विवक्षणे चोभयं प्रत्येकानतिरिक्तमिति न्यायेन केवलवह्नित्वेपि साध्यतावच्छेदकतापर्याप्तेः सत्त्वेन पुनस्तद्दोषापत्त्या साध्यतावच्छेदकताव्यापकावच्छेदकताकप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादि विवक्षणीयम् । तेन पर्वतो वह्निमानिति ज्ञानीयप्रकारतारूपन्यूनधर्मव्युदास इति ।

३ नैयायिकसिद्धान्ते त्वयमन्योन्याभाव एवेत्युच्यत इति विज्ञेयम् ।

४ रूपादिपरावृत्तिफलक*स्तेजःसंयोग इत्यर्थः । ( दि० गु० ) ( वै० वि० ७।१।६ )

---

* अत्रेदं बोध्यम् । कारणगुणपूर्वकाः पृथिव्यां पाकजाः । ( वै० ७।१।६ ) पाकजा इति । रूपरसगन्धस्पर्शा इत्यर्थः । ........इदानीं प्रसङ्गात्पाकजप्रक्रिया चिन्त्यते । तत्र कारणसमुदाय एव पच्यत इति पिठरपाकवादिनः । पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते । तत्रैव पूर्वरूप-

वे०) यथा, आमनिक्षिप्ते घटे श्यामरूपादिपरावृत्तिफलकोऽग्निसंयोगः ।

[ ख ] रूपादिपरावृत्तिजनकतेजःसंयोगः । यथा तण्डुलं पचतीत्यादौ पच्यर्थः । ( गा० व्यु० २ )

[ ग ] विक्लित्त्यनुकूलव्यापारः पाक इति शाब्दिकाः ।

[ घ ] विक्लित्तिरिति मण्डनाचार्यः । २ रसास्वादप्रभेदः पाक इत्यालंकारिका वदन्ति ।

**पाठः**—कण्ठताल्वाद्यभिघातः । यथा यजमानं मन्त्रं पाठयतीत्यादौ धात्वर्थः । ( गा० व्यु० २ )

**पातनम्**—निपातनवदस्यार्थोनुसंधेयः ।

**पापम्**—अधर्मवदस्यार्थोनुसंधेयः ।

**पारमार्थिकत्वम्**[1]—[ क ] कालसंबन्धित्वम् ।

[ ख ] प्रमाविषयत्वम् । यथा घटपटादीनां पारमार्थिकत्वम् । ( ख० )

[ ग ] त्रिकालाबाध्यत्वमिति वेदान्तिनो वदन्ति ।

**पारिभाषिकम्**—आधुनिकसंकेतेनार्थबोधकं पदम् । यथा शास्त्रकारादिसंकेतितनदीवृद्ध्यादिपदं पारिभाषिकम् । ( गा० श० )

**पारिमाण्डल्यम्**—अणुपरिमाणम् । ( मु० १ )

**पिठरपाकवादी**[2]—(नैयायिकः) कार्यकारणसमुदाय एव पच्यते । न तु परमाण-

---

१ अत्र, अपारमार्थिकत्वं तु पारमार्थिकत्वाभाव एव । यथा शशशृङ्गकूर्मरोमादेरपारमार्थिकत्वमिति विज्ञेयम् ।

२ एतन्मते च पूर्वघटनाशं विनैवावयविन्यवयवेषु परमाणुपर्यन्तेषु च पाकेनैव युगपद्रूपान्तराद्युत्पत्तिरिति विज्ञेयम् । ( त० दी० ) ( सि० च० )

---

नाशाग्निसंरूपाद्युत्पत्तिः । कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यत इति पीलुपाकवादिनः । अत्रेदं तत्त्वम् । आमपाके निक्षिप्तस्य घटादेरामद्रव्यस्य वन्हिना नोदनादभिघाताद्वा तदारम्भकेषु परमाणुषु द्रव्यारम्भकसंयोगविरोधिविभागेनारम्भकसंयोगनाशे द्रव्यनाशावश्यंभावात् । दृश्यते हि, स्थाल्यामाहितानां तण्डुलादीनामप्यभ्रःसंतापनमात्रेण भर्जनात्तदानीमेव नाशः । क्षीरनीरादीनां चात्यन्तमुल्बणता । ( वै० उ० ७।१।६ )

वः पच्यन्त इति यो मन्यते सः । ( वै० उ० ७।१।६ ) यथा गौतमः पिठरपाकवादी । ( स्व० )

**पिठरम्**—अवयवावयविसमुदायः । ( स्व० )

**पिण्डीभावः**—[ क ] चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणसंयोगः । (न्या०बो०) ( नील० )

[ ख ] फूत्कारादिना देशान्तरानिर्गमनप्रतिबन्धकोवयवानां संयोगविशेषः । ( वाक्य० १ ) यथा चूर्णादिपिण्डीभावहेतुर्गुणः स्नेह इत्यादौ पिण्डीभावः । ( स्व० )

**पीलुः**—परमाणुवदस्यार्थोनुसंधेयः । ( वै०उ०७।१।६ )

**पीलुपाकवादी**—( वैशेषिकः ) पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते[1] । तत्रैव पूर्वरूपनाशाग्निमरूपाद्युत्पत्तिः । कारणगुणप्रक्रमेण[2] चावयविनि रूपाद्युत्पद्यत इति यो मन्यते सः । ( वै०उ०७।१।६ ) यथा कणादः पीलुपाकवादी । ( स्व० )

**पुण्यम्**—धर्मवदस्यार्थोनुसंधेयः ।

**पुनरुक्तम्**—( निग्रहस्थानम् ) [ क ] शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । ( गौ० ५।२।१४ ) अन्यत्रानुवादाच्छब्दपुनरुक्तमर्थपुनरुक्तं वा । नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम् । अर्थपुनरुक्तमनित्यः शब्दो निरोधधर्मको ध्वान इति । ( वात्स्या० ५।२।१४ )

---

१ एतन्मते च परमाणुष्वेव पाको न द्व्यणुकादौ । आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः । तत्र परमाणवः समवायिकारणम् । तेजःसंयोगोसमवायिकारणम् । अदृष्टादिकं निमित्तकारणम् । द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति । ( त० दी०१ )

२ अत्र च, आमनिक्षिप्ते घटे हुताशनसंयोगात्परमाण्वादिकपालपर्यन्तावयवेषु क्रिया, ततः परस्परविभागस्ततः परस्परसंयोगनाशस्ततः श्यामघटनाशे शिष्टाः परमाणवः पच्यन्ते । तत्र पाकेन रूपादिचतुष्टयोत्पत्तिः । ततः परमेश्वरेण सर्गादाविव द्व्यणुकादिक्रमेण पूर्ववद्रक्तघटो निर्मीयते । परमाणुरूपेण द्व्यणुकरूपं जन्यत इत्येवं क्रमः । ( सि० च० )

[ ख ] निष्प्रयोजनं पुनरभिधानम् । ( गौ० वृ० ५।५७ ) ( दि० १ )

[ ग ] अनुवादं विना कथितस्य पुनः कथनम् । ( नील० ) पुनरुक्तं द्विविधम् । शब्दपुनरुक्तम् । अर्थपुनरुक्तम् । ( गौ० )

**पुराकल्पः**–(अर्थवादः) [ क ] ऐतिह्यसमाचरितो विधिः । (वात्स्या० २।१।६३)

[ख] ऐतिह्यसमाचरिततया कीर्तनम् । यथा, तस्माद्वा एते पुरा ब्राह्मणा बहिःपवमानं सामस्तोममस्तौषन्, यज्ञं प्रतनवामह इत्यादि । ( गौ० वृ० २।६४ ) ( वात्स्या० २।१।६३ )

**पुरुषार्थः**–[ क ] बलवद्द्वेषाविषयः । ( त० प्र० १ )

[ ख ] यत्, ज्ञातं सत्स्ववृत्तितयेष्यते सः[1] । (मु० गु०) यथा सुखं पुरुषार्थः । (स्व०) धर्मार्थकाममोक्षभेदेन चतुर्विधः पुरुषार्थ इति पौराणिका वदन्ति । देशान्तराटनपूर्वकमैहिककृत्रिमवस्त्ववलोकनादिकमेव पुरुषार्थ इतीदानींतनाः केचिल्लौकिकजना मन्यन्ते ।

**पूजा**–आराधनावदस्यार्थोनुसंधेयः ।

**पूर्वकालीनत्वम्**–[ क ] कालिकसंबन्धेन तत्प्रागभाववत्त्वम्[2] । (गा० सार्व० पक्ष०)

[ख] प्रागभावकालवृत्तित्वम् ।

[ग] तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वम्[3] । ( तर्का० ४ ) यथा ज्येष्ठस्य पुरुषस्य कनिष्ठं पुरुषमपेक्ष्य पूर्वकालीनत्वम् । ( स्व० )

**पूर्वत्वम्**–१ प्रागभाववत्त्वम् । ( गा० सार्व० पक्ष० ) यथा फाल्गुनस्य मासस्य चैत्रात्पूर्वत्वम् । २ उदयगिरिसंनिहितदेशावच्छिन्नत्वम् । यथा झळकीग्रामाद्बेदराबादग्रामदेशस्य पूर्वत्वम् । ( स्व० )

**पूर्ववत्**–( अनुमानम् ) [ क ] यत्र कारणेन कार्यमनुमीयते[4] । यथा मेघोन्नत्या भविष्यति वृष्टिरिति ।

---

१ अयमेव स्वतःपुरुषार्थ इत्युच्यते । तल्लक्षणं चेतरेच्छानधीनेच्छाविषयत्वम् । ( मु० )

२ इदं च जन्यमात्रस्य कालोपाधित्वपक्ष एव संगच्छत इत्यवधेयम् ।

३ इदं च प्रागभावानभ्युपगन्तृमतेपि युज्यत इति बोध्यम् ।

४ अत्र च, पूर्वं कारणं तद्वल्लिङ्गकमिति व्युत्पत्तिः । ( गौ० वृ० १।५ )

[ख] यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम् । यथा धूमेनाग्निरिति । (वात्स्या० १।१।५)

[ग] केवलान्वयि[1] । यथा, अभिधेयं प्रमेयत्वादित्यादि । (गौ० वृ० १।५)

**पृच्छा**—जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा गुरुं धर्मं पृच्छतीत्यादौ पृच्छतेरर्थः । (गा० व्यु० २)

**पृथक्त्वम्**—असाहित्यम् । यथा, दुनोति चन्द्रात्पृथगप्यनङ्ग इत्यादावसाहित्यम् । (गा० व्यु० ५)

**पृथक्त्वम्**—(गुणः) पृथग्व्यवहारा[2]साधारणकारणम् । सर्वद्रव्यवृत्ति । (त० सं०) यथा, इदमस्मात्पृथगित्यादौ । (स्व०) पृथक्त्वं चैकपृथक्त्वद्विपृथक्त्वादिभेदेन बहुविधम् । (सि० च०) पृथक्त्वमन्योन्याभाव एव, न तु गुणान्तरमिति नव्याः । (दि० गु०)

**पृथिवी**[3]—(द्रव्यम्) [क] गन्धवती[4] । (त० सं०)

[ख] गन्धसमवायिकारणम् । (मु०) यथा घटः पृथिवी । सा द्विविधा । नित्या । अनित्या । नित्या परमाणुरूपा । अनित्या कार्यरूपा । अनित्या त्रिविधा । शरीरम् । इन्द्रियम् । विषयः । तत्राद्यं योनिजमयोनिजं च ! योनिजमस्मदादीनाम् । अयोनिजं तु क्रिमिदंशादीनाम् । द्वितीयं गन्धग्राहकं घ्राणम् । तच्च नासाग्रवर्त्ति । तृतीयो मृत्पाषाणसरित्समुद्रादिर्ब्रह्माण्डान्तः । पृथिव्यां चतुर्दश गुणा वर्तन्ते । रूपादयो

---

१ अत्र च, पूर्वमन्वयव्याप्तिस्तद्वदिति व्युत्पत्तिः । (गौ० वृ० १।५)

२ अयमस्मात्पृथगिति व्यवहारः । तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वं लक्षणमित्यर्थः । (वाक्य०) विस्तरस्तु (वै० उ० ७।२।२) तत्र द्रष्टव्यः ।

३ अत्र, पृथिवीत्वं तु पाकजरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः । (सर्व० औलु०) लक्षणं च [क] कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । [ख] गन्धसमानाधिकरणगन्धासमानाधिकरणगुणासमानाधिकरणजात्यधिकरण*द्रव्यत्वम् । (वै० उ० २।१।१)

४ गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमतीत्यर्थः । (त० दी०)

---

* अत्र द्रव्यपदप्रयोजनं चिन्त्यम् ।

द्वादश नैमित्तिकद्रवत्वं वेगश्चेति । ( त० भा० ) (भा० प०) (त०सं०)

**पौरुषेयत्वम्**–सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वम् । ( चि० ४ ) यथा महाभारतादेः पौरुषेयत्वम् । ( ख० )

**प्रकरणम्**–१ पूर्वापरसंदर्भः। (ख०) २ उभयाकाङ्क्षा[1] प्रकरणमिति मीमांसकाः ।

**प्रकरणसमः**–( जातिः ) [ क ] उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः । (गौ०५।१।१६) उभयेन नित्येन चानित्येन साधर्म्यात् । पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवादित्येकः पक्षं प्रवर्तयति । द्वितीयश्च नित्यसाधर्म्यात् । एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानेन । हेतौ तदिदं प्रकरणानातिवृत्त्या प्रत्यवस्थानं प्रकरणसमः । समानं चैतद्वैधर्म्येपि । उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति । ( वात्स्या० ५।१।१६ )

[ ख ] अधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानम् । यथा शब्दोनित्यः कृतकत्वादित्युक्ते, नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् । ( गौ०वृ०५।१।१६ )

[ ग ] वाद्युक्तहेतोः साध्यविपरीतसाधकं हेत्वन्तरोद्भावनम् । सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम् । ( नील० )

**प्रकरणसमः**[2]–( हेत्वाभासः ) [ क ] यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः[3] । (गौ० १।२।४८) विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम् । तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम् । सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात्प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते । प्रज्ञापनं तु, अनित्यः शब्दो

---

१ अङ्गवाक्यसापेक्षं प्रधानवाक्यमित्यर्थः ।

२ लक्षणं तु [ क ] तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम् । [ ख ] स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शः । ( गौ० वृ० १।४७ ) अन्यत्सर्वं सत्प्रतिपक्षवज्ज्ञातव्यम् ।

३ निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात्, किं तु, धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्तयति स प्रकरणसम इत्यर्थः (गौ० वृ० १।४७)

नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि । ( वात्स्या० ५।२।४८ )

[ ख ] 'प्रकृतसाध्यहेत्वोः किं तत्त्वम्' इति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः । ( चि० २ )

[ ग ] यादृशपरामर्शसहकारेण यादृशपरामर्शस्योक्तजिज्ञासाजनकत्वं तादृशपरामर्शसहिततादृशपरामर्शः[2] । ( गा० सत्प्र० )

[ घ ] यस्य प्रतिपक्षभूतं हेत्वन्तरमस्ति सः । स एव सत्प्रतिपक्ष उच्यते । यथा शब्दो नित्योनित्यधर्मानुपलब्धेरिति[3] । ( त० भा० )

**प्रकारता**—( विषयता ) १ भासमानवैशिष्ट्यप्रतियोगित्वम्[4] । ( नील० ) (सि०च०१) यथा, अयं घट इति ज्ञाने विशेषणस्य घटत्वादेर्विशेषणत्वापरनामा विषयताविशेषः । (न्या०म०१) २ विषयतानात्मिका प्रतियोगित्वादिनिरूपितावच्छेदकतातुल्यावच्छेदकतेति[5] कश्चित् । ( गा०बाध० )

---

१ अत्र जिज्ञासा च 'प्रकृतसाध्यहेत्वोः कः समीचीनः' इत्याकारिका ग्राह्या ।

२ अत्र च, पर्वते धूमेन वन्हिसाधने, पर्वतो वन्हिव्याप्यधूमवान्वन्ह्यभावव्याप्यजलवानिति परामर्शद्वयसंवलनदशायां प्रकृतो धूमो हेतुः सत्प्रतिपक्षित इति व्यवह्रियत इत्यनुभवमनुसृत्येदं विज्ञेयम् ।

३ अत्र च, विपरीतार्थसाधकं समानबलमनुमानान्तरमस्ति । तत्प्रतिपक्ष इत्युच्यते । यथा शब्दोनित्यो नित्यधर्मानुपलब्धेरिति । यत्पुनरतुल्यबलं न तत्प्रतिपक्षः । तथा हि । विपरीतसाधकानुमानं त्रिविधम् । उपजीव्यम् । उपजीवकम् । अनुभयं चेति । तत्राद्यं बाधकं बलवत्त्वात् । यथा, अनित्यः परमाणुर्मूर्तत्वादिति । अस्य हेतोः परमाणुसाधकानुमानं* नित्यत्वं साधयदपि न प्रतिपक्षः, किं तु बाधकमेवोपजीव्यत्वात् । तच्च धर्मिग्राहकत्वात् । द्वितीयं दुर्बलत्वाद्बाध्यम् । यथेदमेवानित्यत्वानुमानम् । तृतीयं सत्प्रतिपक्षं तुल्यबलत्वात् । ( त० भा० )

४ संसर्गावच्छिन्न†विषयतेति यावत् । ( नील० ) ( सि० च० ) प्रकारताश्रयो द्विविधः । विशेषणम् । उपलक्षणम् । (चि० १)

५ सप्रकारकत्वं विषयताया एव, न तु ज्ञानस्येत्यतिरिक्तविषयतावाद्येकदेशिमताभिप्रायकमिदमतिसूक्ष्मतरमिति । निदर्शनं तु, पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठप्रमाविषयत्वरूपिता साध्याभावनिष्ठा प्रकारता ।

---

* तच्च, अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यात् महत्परिमाणतारतम्यवदिति । (त०भा०)

† अत्र, विशेष्यतासंसर्गतयोः किंचित्संबन्धावच्छिन्नत्वमप्रामाणिकमिति सिद्धान्तोनुसर्तव्यः ।

**प्रकाशः**—१ ज्ञानम् । यथा, अर्थप्रकाशो बुद्धिरित्यादौ । (त० भा०) (त० प्र०)
२ तेजः । यथा, प्रचुरप्रकाशो रविरित्यादौ । (स्व० )

**प्रकृतत्वम्**—प्रतिज्ञाविषयत्वम् । (न्या० र० सामा० ) यथा, प्रकृतपक्षताव-च्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकार-ताघटिते हेत्वाभासलक्षणे, ह्रदो वन्हिमान्धूमादित्यत्र पक्षतावच्छेदकीभूतह्र-दत्वस्य साध्यतावच्छेदकीभूतवान्हित्वस्य च प्रकृतत्वम् । (स्व० )

**प्रकृतिः**—१ कारणम्[1] । यथा मृत्पिण्डाद्घटो जायत इत्यादौ मृत्पिण्डः प्रकृतिः । ( गा० व्यु० ५ । ) यथा वा, पृथिवी घ्राणे प्रकृतिरित्यादौ । ( वै० ८।२।५ ) २ प्रत्ययविधावुद्देश्यतावच्छेदकरूपाक्रान्ता प्रकृतिरिति शाब्दिकाः । ३ यत्र समग्राङ्गोपदेशः सा प्रकृतिरिति[2] मीमांसकाः । सत्वरजस्तमसां साम्यावस्था प्रकृतिरिति[3] सांख्याः । मायाविद्या चेति शांकराः । जडात्मको भगवदंशविशेष इति वल्लभीयाः । लक्ष्मीरपीति[4] मध्वाचार्यानुयायिनः । शरीरावस्थेति भि-षजः । मूलस्वरः प्रकृतिरिति गायकाः । स्वभाव इति काव्यज्ञाः संगिरन्ते ।

**प्रक्रिया**—१ पक्षप्रतिपक्षयोः प्रवृत्तिः । यथा 'अनित्यः शब्दः प्रयत्नानन्तरीयक-त्वाद्घटवत्' इत्येकः पक्षं प्रवर्तयति । द्वितीयश्च 'नित्यः शब्दः' इति । ( वात्स्या० ५।१।१६ ) २ प्रयोगसाधनावस्था प्रक्रियेति शाब्दिका आहुः । ३ अधिकार इति काव्यज्ञाः ।

**प्रचयः**—[क] शिथिलाख्यः[5] संयोगः । ( भा० प० गु० ) यथा, यत्र तूलकपि-ण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धं तत्र शिथिलाख्यः संयोग-

---

१ समवायिकारणमित्यर्थः । ( वै० उ० ८।२।५) ( वै० वि० ८।२।५ )

२ यथा दर्शपूर्णमासादिरूपप्रधानयागः प्रकृतिः । एतन्मते प्रकृतिभिन्नैव विकृतिरिति बोध्यम् । यथा सौर्यादि । ( लौ० भा० )

3 एतन्मते प्रकृतित्वं च तत्त्वान्तरोपादानत्वम् । ( सर्व० सांख्य० )

४ एतन्मते च प्रकृतिर्द्विविधा । चित्प्रकृतिः । जडप्रकृतिः । तत्राद्या लक्ष्मीः । द्वितीया तु मृत्पाषा-णादिस्थावरात्मकं सर्वं जगदिति विज्ञेयम् ।

५, अत्र बहवो विप्रतिपद्यन्ते ।

रूपः प्रचयस्ताद्दशावयविपरिमाणस्यासमवायिकारणम्। (वै० वि० ७।१।९)

[ख] किंचिदवयवावच्छेदेनावयवान्तरासंयोगिनि जन्यावयवे वर्तमानः संयोग[1] इत्येके। (दि० गु०)

**प्रज्ञापनम्**[2]—१ उदाहरणम्। २ बोधनम्। (स्व०)

**प्रणिधानम्**—मनसो विषयान्तरसंचारवारणम्। (गौ० वृ० ३।२।१३)

**प्रतिग्रहणम्**—स्वस्वत्वजनकेच्छारूपस्वीकारविशेषः। यथा धनं प्रतिगृह्णातीत्यादौ धात्वर्थः। (गा० व्यु० २)

**प्रतिज्ञा**—स्वकर्तव्यत्वेन निर्देशः[3]। (राम०) यथा, अथ हेत्वाभासा निरूप्यन्ते, मया तर्कसंग्रहः क्रियते, इत्यादिप्रतिज्ञा। (स्व०)

**प्रतिज्ञा**[4]—(न्यायावयवः) [क] साध्य[5]निर्देशः। (गौ० १।१।३३) प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा साध्यनिर्देशः। अनित्यः शब्द इति। (वात्स्या० १।१।३३)

[ख] साध्यधर्मविशिष्टधर्मिप्रतिपादक[6]ं वचनम्। (त० भा०) (त० दी०)

---

१ अत्रायमाशयः। आरम्भकः संयोगः प्रचयः। स च स्वाभिमुखकिंचिदवयवासंयुक्तत्वे सति स्वाभिमुखकिंचिदवयवसंयोगलक्षणः। स चावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः। (वै० उ० ७।१।९)

२ एतदर्थे वात्स्यायनभाष्यं (१।४८) (२।१।६) द्रष्टव्यम्।

३ कर्तव्यत्वप्रकारकबोधानुकूलव्यापार इति परमार्थः।

४ लक्षणं च प्रतिज्ञात्वमेव। तच्चात्र [क] हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम्। [ख] लिङ्गाविषयकलिङ्गविषयकज्ञानजनकन्यायावयवत्वम्। (चि० अव०) [ग] इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यदन्त्याभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्यायावयवत्वम्। [घ] अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे सति न्यायावयवत्वम्। (दीधि०) [ङ] इतरन्यायघटक 'पर्वतो वन्हिमानिति' शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम्। (न्या० म०)

५ साधनीय*स्यार्थस्य यो निर्देशः स प्रतिज्ञा। तथा च, पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकः शब्द इत्यर्थः। (गौ० वृ० १।३३) (दीधि०)

६ साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारताकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनकवाक्यमित्यर्थः। (नील०)

---

* साधनीयश्च वन्हिमत्त्वादिना पर्वतादिः। (गौ० वृ० १।३३)

[ ग ] उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् । [ घ ] उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वे सत्युद्देश्यानुमितिविषयकलिङ्गाविषयकशाब्दज्ञानजनकं वाक्यम् । ( चि०

---

१ तदर्थश्च [ क ] यादृशसाध्यपक्षकन्यायावयवत्वं तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वम् । [ ख ] यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यकसंप्रदायसिद्धप्रतिज्ञाः, यादृशयादृशरूपावच्छिन्नपक्षे यादृशयादृशरूपावच्छिन्नप्रकारकबोधजनिकास्तादृशरूपावच्छिन्ने तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकतादृशबोधान्यतमबोधजनकत्वे सति तादृशरूपावच्छिन्नपक्षकतादृशरूपावच्छिन्नसाध्यकन्यायान्तर्गतत्वम् । ( दीधि० ) (गा० अव० ) [ ग ] तावद्बोधानिवर्त्यसंशयानिवर्तकतावद्बोधनिवर्त्ययावत्संशयनिवर्तकबोधजनकत्वं वाच्यमित्यपि कश्चित् । ( दीधि० अव० )

२ तदर्थस्तु [ क ] उद्देश्यानुमितिसमानविषयकलिङ्गाविषयकशाब्दज्ञानजनकन्यायावयवत्वम् । [ ख ] वस्तुतः, लिङ्गं लिङ्गत्वम् । तथा च, प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं* यद्व्याप्तिविषयत्वं तच्छून्यत्वमर्थः । [ ग ] केचि†त्तु, हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकरूपशून्यत्वे सति उदाहरणान्यन्यायावयवत्वमित्याहुः । ( दीधि० अव० )

---

* पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपिता या विषयता तन्निरूपितविषयतानिरूपितविषयतायां विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयतावच्छिन्ना या प्रतिबन्धकता तदवच्छेदकविषयताशून्यबोधजनकवाक्यत्वमिति परमार्थः । तथा हि । प्रकृतानुमितिजनकतावच्छेदकीभूतं 'हेतुव्यापकसाध्यसमानाधिकरणहेतुमान्पक्षः' इत्यन्वयिपरामर्शीयं हेतुव्यापकत्वविशिष्टसाध्यविषयत्वं च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितं भवति । एवं प्रकृतानुमितिजनकतावच्छेदकीभूतं 'साध्याभावव्यापकहेत्वभावप्रतियोगिहेतुमान्पक्षः' इति व्यतिरेकिपरामर्शीयं साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयत्वमपि तादृशपक्षविशेष्यतानिरूपितसंसर्गीयविषयतानिरूपितहेतुविषयतानिरूपितसंसर्गीयविषयतानिरूपितं भवति । तादृशविषयताद्वयशून्यबोधजनकवाक्यत्वं 'पर्वतो वन्हिमान्' इत्यादिप्रतिज्ञायामस्तीति लक्षणसंगतिरित्यवधेयम् । (गा० अव०)

† यथाश्रुतलिङ्गाविषयकत्वनिवेशे गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिं प्रकारान्तरेण वारयन्तः केचिन्नैयायिका इत्यर्थः । ( गा० अव० )

अय० ) यथा, पर्वतपक्षकवन्हिसाध्यकधूमहेतुकस्थले 'पर्वतो वन्हिमान्' इति वाक्यं प्रतिज्ञा । ( स्य० )

**प्रतिज्ञान्तरम्**–( निग्रहस्थानम् ) [ क ] प्रतिज्ञार्थ[1]प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः । ( गौ० ५।२।३ ) प्रतिज्ञातार्थोनित्यः शब्द ऐन्द्रियकत्वाद्घटवदित्युक्ते योस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः 'सामान्यमैन्द्रियकं नित्यम्, इति । तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे । धर्मविकल्पादिति । दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्यमैन्द्रियकं सर्वगतम् । ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात् । तदर्थं निर्देश इति साध्यसिद्ध्यर्थम् । कथम् । यथा घटोसर्वगत एवं शब्दोप्यसर्वगतो घटवदेवानित्य इति । तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा । असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् । ( वात्स्या० ५।२।३ )

[ ख ] प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनम् । ( गौ० वृ० ५।४६ )

[ ग ] परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनम् । ( दि० १ ) ( नील० ) यथा, क्षित्यादिकं गुणजन्यं कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधनोद्भावने सविषयकेति गुणविशेषणदानम् । (नील०)इदं च पक्षसाध्यविशेषणभेदात्प्रत्येकं द्विविधम्[2] । (गौ० वृ० ५।४६)

**प्रतिज्ञाविरोधः**–( निग्रहस्थानम् ) [ क ] प्रतिज्ञाहेत्वोर्विरोधः । (गौ० ५।२।४) गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा । रूपादितोर्थान्तरस्यानुपलब्धेरिति हेतुः । सोयं प्रतिज्ञाहेत्वोर्विरोधः । कथम् । यदि गुणव्यतिरिक्तं द्रव्यं रू-

---

१ प्रतिज्ञार्थस्येत्युपलक्षणं हेत्वतिरिक्तार्थस्य, इति तत्त्वम् । तेनोदाहरणान्तरमुपनयान्तरं च प्रतिज्ञान्तरत्वेन संगृहीतं भवति । ( गौ० वृ० ५।४६ )

२ यथा, शब्दोनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम् ॥ एवं, पर्वतो वन्हिमान्सुरभिमलिनधूमवत्त्वादित्युक्ते, असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागरुप्रभववन्हिमानित्यत्र । एवं, तादृशवन्हौ साध्ये 'यः सुरभिमलिनधूमवान्स वन्हिमान्' इत्युदाहरणे न्यूनत्वेन प्रत्युक्ते तादृशवन्हिमानित्यत्र । एवमन्यदप्यूह्यम् । ( गौ० वृ० ५।४६ )

पादिभ्योर्थान्तरस्यानुपलब्धिर्नोपपद्यते । अथ रूपादिभ्योर्थान्तरस्यानुपलब्धिः । गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते । गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते, व्याहन्यते, न संभवतीति । ( वात्स्या० ५।२।४ )

[ ख ] कथायां स्ववचनार्थविरोधः । ( गौ० वृ ५।४७ )

[ ग ] स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनम् । यथा, द्रव्यं गुणभिन्नं रूपादितः पृथक्त्वेनानुपलभ्यमानत्वादिति । ( दि० १ ) ( नील० )

**प्रतिज्ञासंन्यासः**–( निग्रहस्थानम् ) [ क ] पक्षप्रतिषेधे प्रतिज्ञातार्थस्यापनयनम् । ( गौ० ५।२।५ ) प्रतिज्ञातार्थनिन्हवः प्रतिज्ञासंन्यास इति । ( वात्स्या० ५।२।५।

[ ख ] स्वोक्तसाध्यादेः परेण दूषणे कृते तत्साध्यापलापः । यथा, शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते, क एवमाह शब्दोनित्य इति । ( गौ० वृ० ५।४८ ) ( दि० ) ( नील० )

**प्रतिज्ञाहानिः**–( निग्रहस्थानम् ) [ क ] प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते । ( गौ०५।२।२) साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेभ्यनुजानन्प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम् । ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते, अपर आह । दृष्टमैन्द्रियकत्वं सामान्ये नित्ये । कस्मान्न तथा शब्द इति . प्रत्यवस्थिते, इदमाह । यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो नित्योस्त्विति, स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति । ( वात्स्या० ५।२।२ )

**[ ख ] स्वपक्षे परपक्षधर्माभ्यनुज्ञा**[1] । ( गौ०वृ०५।४५ )

[ ग ] प्रतिज्ञातार्थविरुद्धाभ्युपगमः । ( नील० )

[ घ ] विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागः । ( दि०१ ) यथा

---

१ स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः । ( गौ०वृ०५।४५ )

शब्दोनित्यः प्रत्यक्षगुणत्वादित्यत्र 'सोयं गकारः' इत्यादिप्रत्यभिज्ञाबलात्पूरेण बाध उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन्वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति । ( नील० ) सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात्पञ्चधा । यथा शब्दोनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोयमित्युत्तरिते, अस्तु तर्हि घट एव पक्षः, इत्याद्यूहनीयम् । ( गौ०वृ० ५।४५ )

**प्रतितन्त्रसिद्धान्तः**–(सिद्धान्तः) [क] समान[1]तन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । (गौ० १।१।२९) यथा, नासत आत्मलाभः । न सत आत्महानम् । निरतिशयाश्चेतनाः । देहेन्द्रियमनस्सु विषयेषु तत्तत्कारणेषु च विशेष इति सांख्यानाम् । पुरुषकर्मनिमित्तो भूतवर्गः । कर्महेतवो दोषाः प्रवृत्तिश्च । स्वगुणविशिष्टाश्चेतनाः । असदुत्पद्यते । उत्पन्नं विरुध्यते । इति योगानाम् । ( वात्स्या० १।१।२९ )

[ख] वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्तः । यथा मीमांसकानां शब्दनित्यत्वम् । ( गौ० वृ० १।२९ )

**प्रतिदृष्टान्तसमः**–( जातिः ) [क] प्रतिदृष्टान्तेन प्रत्यवस्थानात्प्रतिदृष्टान्तसमः । ( गौ० ५।१।९ ) प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः । क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते 'क्रियाहेतुगुण[2]युक्तमाकाशं निष्क्रियम्' इति । ( वात्स्या० ५।१।९ )

[ख] प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानम् । यथा, यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदाकाशदृष्टान्तबलेन नित्य एव स्यात् । नित्यः किं न स्यादिति । बाधः प्रतिरोधो वापादनीयः । ( गौ० वृ० ५।९ )

---

१ अत्र, समानशब्द एकार्थः । तेनैकतन्त्रसिद्ध इत्यर्थः । स्वतन्त्रासिद्ध इति पर्यवसितोर्थः । ( गौ० वृ० १।२२ )

२ कः पुनराकाशस्य क्रियाहेतुर्गुणः ? । वायुना संयोगः संस्कारापेक्षी वायुवनस्पतिसंयोगवदिति । ( वात्स्या० ५।१।९ )

[ग] दृष्टान्तान्तरेण साध्याभावसाधनम् । ( नील० )

**प्रतिपक्षः**— १ [क] विरोधिव्याप्त्यादिमत्तया परामृश्यमाणो हेतुः ।

[ख] विरोधिपरामर्शः । ( दीधि० २ ) यथा, ह्रदो वन्हिमान्धूमादित्यादौ वन्ह्यभावव्याप्यवान्ह्रद इति परामर्शः । २ विरोधी । ( स्व० ) ३ विप्रतिपत्त्यपरकोटिः । ( गौ० वृ० १।४१ ) ४ विरुद्धपक्षः । यथा, वादिना पर्वते वन्हिसाधने प्रतिवादिपक्षः पर्वतो न वन्हिमानिति । ( स्व० )

**प्रतिबन्दी**— प्रकृतमेककल्पमवलम्ब्य प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादनम् । यथा, अनुमित्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावमात्ररूपपक्षता चानुमितौ कारणं चेत्तदा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानं कारणं स्यादिति । ( दीधि० पक्ष० )

**प्रति[1]बन्धकत्वम्**—[क] [2]कारणीभूताभावप्रतियोगित्वम् । ( कु० १ ) ( दि० ) यथा, ह्रदो वन्हिमानिति बुद्धौ 'ह्रदो न वन्हिमान्' इति निश्चयस्य प्रतिबन्धकत्वम् । ( स्व० )

[ख] स्वावच्छि[3]न्नप्रतियोगिताकत्वसंबन्धेनाभावत्वावच्छिन्नकारणताया अवच्छेदको यो धर्मस्तद्वत्त्वम् । ( कु० १ ) प्रतिबन्धकत्वं पञ्चविधम् । तद्वत्ताबुद्धिं प्रति, तदभा[4]ववत्तानिश्चयत्वेन प्रतिबन्धकत्वम् । तदभावव्याप्यवत्तानिश्चयत्वेन । तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन । तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन । तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाभाववत्तानिश्चयत्वेन चेति । तत्राद्यं यथा ह्रदो वन्हिमानिति बुद्धिं प्रति, ह्रदो न वन्हिमानिति निश्चयस्य

---

१ अत्र कार्यसहभावेन प्रतिबन्धकत्वं तु, कार्यसहभावेन प्रतिबन्धकाभावरूपकारणदिशा व्यवस्थापनीयम् ।

२ अत्र कारणपदं क्वचित्प्रयोजकपरमपि । ( मू० म० १ )

3 तद्धर्मावच्छिन्नकार्यतानिरूपिताभावत्वावच्छिन्नकारणतानिरूपितस्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्त्वमिति निष्कर्षः ।

४ एवं तद्भेदवत्तानिश्चयत्वादिनापि प्रतिबन्धकत्वमवसेयम् ।

प्रतिबन्धकत्वम् । द्वितीयं, ह्रदो वन्ह्यभावव्याप्यवानिति निश्चयस्य । तृतीयं, जलवान्वन्ह्यभाववानिति निश्चयविशिष्टस्य 'जलवान्ह्रदः' इति निश्चयस्य । चतुर्थं, वन्ह्यसमानाधिकरणजलवान्ह्रद इति निश्चयस्य । पञ्चमं, ह्रदो धूमवानिति बुद्धिं प्रति, धूमव्यापकतावच्छेदकतया गृहीतं यद्वन्हित्वं तादृशवन्हित्वावच्छिन्नाभाववान्ह्रद इति निश्चयस्येति । कार्यमात्रं प्रति तु कामिनीजिज्ञासायाः स्वातन्त्र्येण प्रतिबन्धकत्वम् । क्वचित्, मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वम् । यथा, दाहं प्रति मणेः प्रतिबन्धकत्वम्, इति । ( स्व० )

**प्रतिबन्धिः**—प्रतिबन्दीवदस्यार्थोनुसंधेयः । (गौ० वृ० २।१०१) (सर्व०अक्ष०)

**प्रतिभा**—स्फूर्तिः । ( दि० १ ) यथा, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादित्यादौ । ( स्व० )

**प्रतियोगिता**—१ [ क ] स्वरूपसंबन्धविशेषः । ( दीधि० २ ) ( त० प्र० ) यथा घटो नास्तीत्यादौ[1] घटेभावप्रतियोगिता । यथा वा, घटवद्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगसंबन्धप्रतियोगिता । ( स्व० )

[ ख ] अखण्डो धर्मविशेष इति संप्रदायः । ( मू० म० १ )

[ग] अन्योन्याभावविरहात्मत्वमित्याचार्याः[2] । (भा० प०) (वै०उ०९।१।८)

२ वित्तिवेद्यत्वम् । ( चि० ३ ) यथा चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम् । ३ अन्वयित्वम् । यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यन्तार्थस्य प्रतियोगित्वम् । ( स्व० )

**प्रतिवादी**—वादिप्रयुक्तन्यायविरुद्धवाक्यप्रयोगकर्ता । यथा, पर्वते वन्हिसिद्धये वादिना 'पर्वतो वन्हिमान्धूमवत्त्वात्' इत्यादिवाक्ये प्रयोक्तव्ये प्रतिवादी

---

१ अत्र च, अभावनिरूपिता घटनिष्ठा घटस्वरूपेयं प्रतियोगितेत्यवधेयम् ।

२ इदं च, आचार्याणां मते वस्तुनिष्ठमभावनिरूपितं* प्रतियोगित्वमेव, न तु संबन्धप्रतियोगित्वमिति विज्ञेयम् । ( भा० प० )

---

* अत्र च, यस्याभावस्तत्त्वं प्रतियोगित्वमिति लौकिकजना वदन्तीति विज्ञेयम् ।

'पर्वतो न वन्हिमान्पाषाणमयत्वात्' इत्यादि वाक्यं प्रयुङ्क्ते इति । (स्व०)

**प्रतिषेधः**—१ अभाववदस्यार्थोनुसंधेयः । २ दूषणाभिधानम् । (स्व०)

**प्रतिसंधानम्**—ज्ञानम् । अनुसंधानमप्येवमेव व्याख्येयम् ।

**प्रतीची**—(दिक्) [क] यदपेक्षया सूर्यास्ताचल[1]संनिहिता या दिक् सा तदपेक्षया प्रतीची । (वै० उ० २।२।१०)

[ख] उदयगिरिव्यवहिता या दिक् सा प्रतीची । (मु० १)

[ग] अस्ताचलसंनिहितदेशावच्छिन्ना दिक् । (वाक्य०) (न्या० बो०) यथा काशीतः[2] प्रतीच्यां प्रयागः । (दि० १।२) यथा वा, झळकीग्रामतः प्रतीच्यां रत्नागिरिग्रामः । (स्व०)

**प्रतीतिः**—बुद्धिवदस्यार्थोनुसंधेयः ।

**प्रत्यक्षम्**[3]—(अनुभवः) [क] इन्द्रियार्थसंनिकर्षोत्पन्नं[4] ज्ञानमव्यपदेश्य[5]मव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् । (गौ० १।१।४) (त०सं०) इन्द्रियस्यार्थेन संनिकर्षादुत्पद्यते यज्ज्ञानं तत्प्रत्यक्षम् । न तर्हीदानीमिदं भवति । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति । (वात्स्या० १।१।४)

[ख] ज्ञानाकरणकं[6] ज्ञानम् । (चि० १) (न्या० बो०)

[ग] साक्षात्कारत्वव्यञ्जकविषयताविशेषवज्ज्ञानम् । (गा० सत्प्र०)

---

१ संनिधानं तु संयुक्तसंयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः । (वै० उ० २।२।१०)

२ अत्र, काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयाग इति शाब्दबोधः । (दि० १।२)

३ तल्लक्षणं च [क] जन्याजन्यमात्रवृत्तिजातिशून्यज्ञानत्वम् । (न्या० म० २) [ख] ज्ञानकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्वम् । (दि० १।३)

४ इदं च जन्यप्रत्यक्षस्यैव लक्षणमिति बोध्यम् ।

५ तदर्थश्च [१] अशाब्दं ज्ञानम् । (वात्स्या० १।१।४) [२] निर्विकल्पकज्ञानम् । (गौ० वृ० १।१।४) (दि० १।३)

६ इदं चेश्वरप्रत्यक्षसाधारणं लक्षणमिति विज्ञेयम् ।

[ घ ] साक्षा[1]द्धीरिति प्राभाकराः । ( चि० १ ) वैशिष्ट्यानवगाहिज्ञानं प्रत्यक्षमिति नास्तिका आहुः । प्रत्यक्षं द्विविधम् । नित्यम् । अनित्यम् । नित्यं भगवतः । अनित्यं जीवस्य । अनित्यं प्रत्यक्षं षड्विधम् । घ्राणजम् । रासनम् । चाक्षुषम् । स्पार्शनम् । श्रौत्रम् । मानसम् । (न्या० म०) (भा० प०) (त० सं०) अनित्यं प्रत्यक्षं प्रकारान्तरेण द्विविधम् । सविकल्पकम् । निर्विकल्पकम् । (त० सं०) प्रकारान्तरेणापि तत्प्रत्यक्षं द्विविधम् । लौकिकम् । अलौकिकम् । ( मु० )

प्रत्यक्षम्[2]—( प्रमाणम् ) [ क ] साक्षात्का[3]रिप्रमायाः करणम् । ( त० भा० ) [ ख ] प्रत्यक्षज्ञानकरणम् । (त० सं०) तच्च त्रिविधम् । इन्द्रियम् । इन्द्रियार्थसंनिकर्षः । ज्ञानम् । तत्राद्यं निर्विकल्पकज्ञाने । द्वितीयं सविकल्पकज्ञाने निर्विकल्पकज्ञानद्वारेन्द्रियार्थसंनिकर्षः । तृतीयं च सविकल्पकज्ञानानन्तरं यत्र हानोपादानोपेक्षाबुद्धयो भवन्ति तत्र सविकल्पकज्ञानद्वारीकृत्य निर्विकल्पकज्ञानम् । ( त० भा० ) ( सि० च० ) तत्रेन्द्रियात्मकं प्रत्यक्षं द्वेधा । द्रव्यग्राहकम् । तदग्राहकम् । आद्यं चक्षुस्त्वङ्मनांसि । द्वितीयं घ्राणं, रसनं, श्रवणम् । ( न्या० म० १)

प्रत्यभिज्ञा[4]—( प्रत्यक्षम् ) स एवायं घटो यो मया पूर्वमुपल[5]ब्ध इत्याकारिका पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा या प्रतीतिः सा । ( त० भा० ) यथा, स एवायं चैत्र इति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानम् । ( सर्व० प्रत्यभिज्ञा० )

---

१ साक्षात्त्वं च जातिविशेषः । ( चि० १ )

२ अत्र, प्रतिगतमक्षं प्रत्यक्षमिति व्युत्पत्तिः । ( गौ० वृ० १।४ ) अक्षस्याक्षस्य प्रतिविषयं वृत्तिः । वृत्तिस्तु संनिकर्षो ज्ञानं वा । यदा संनिकर्षस्तदा ज्ञानं प्रमितिः । यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम् । ( वात्स्या० १।१।३ )

३ अत्र, साक्षात्कारेति न्यायसिद्धान्तमञ्जर्यां पाठोऽस्ति ।

४ प्रत्यभिज्ञायामुपनीततत्तादिविषयकत्वरूपमुपनीतभानमानुभाविकमिति बोध्यम् । ( दीधि० बाध० )

५ अत्र, तद्देशकालवृत्तित्वयत्तासंस्कारात् 'स एवायं घटः' इति प्रत्यक्षं जायत इति बोध्यम् । (नील०)

**प्रत्ययः**—१ बुद्धिवदस्यार्थोनुसंधेयः । ( वै० ८।१।१ ) २ स्वस्वप्रकृत्यन्यतरार्थप्रत्यायको यः स प्रत्यय इति शाब्दिका वदन्ति ।

**प्रत्यवस्थानम्**—१ उपालम्भः । प्रतिषेधः । ( वात्स्या० १।२।५९ ) २ दूषणाभिधानम् । ( गौ० वृ० १।५८ ) यथा, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमित्यादौ । ( स्व० )

**प्रत्यासत्तिः**—[ क ] इन्द्रियार्थसंनिकर्षवदस्यार्थोनुसंधेयः ।

[ ख ] संबन्ध इति केचिद्वदन्ति ।

**प्रत्यासन्नत्वम्**—१ [ क ] समवायादिसंबन्धेन वर्तमानत्वम् ।

[ ख ] संबद्धत्वम् । यथा, समवायिकारणे प्रत्यासन्नं कार्यमित्यादौ । २ तद्विषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतिपत्तिविषयत्वम् । ३ समीपवृत्तित्वमिति काव्यज्ञा वदन्ति । ( स्व० )

**प्रत्याहारः**—१ बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानम्[1] । ( गौ० वृ० ४।१।११ ) २ अइउण्, ऋलृक्, इत्यादिसूत्रघटकाद्यन्तवर्णद्वयग्रहणेन मध्यस्थविवक्षितवर्णानामप्यनुसंधानमिति शाब्दिका मन्यन्ते ।

**प्रधानकर्मत्वम्**—( कर्मत्वम् ) साक्षाद्धात्वर्थतावच्छेदकफलशालित्वम् । यथा, गां दोग्धि पयः[2] इत्यादौ पयसः प्रधानकर्मत्वम् । ( स्व० )

**प्रध्वंसः**—ध्वंसवदस्यार्थोनुसंधेयः ।

**प्रभवः**—१ यत्संबन्धात्प्रथमप्रकाशः सः । यथा, हिमवतो गङ्गा प्रभवतीत्यादौ प्रभवत्यर्थः । ( गा० व्यु० ५ ) २ संवत्सरविशेष इति मौहूर्तिका वदन्ति ।

**प्रभेदः**— १ सामान्यधर्मव्याप्यावान्तरधर्मविशिष्टः । यथा घटो द्रव्यप्रभेदः । ( स्व० ) २ स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मः । यथा, अनित्या पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदादित्यादौ । ( वाक्य० )

---

१ इदं च योगशास्त्रमनुरुध्योक्तमिति बोध्यम् ।

२ अत्रेदं बोध्यम् । विभागावच्छिन्नक्षरणानुकूलव्यापारस्य दुह्यत्यर्थत्वेन साक्षाद्धात्वर्थतावच्छेदकीभूतक्षरणरूपफलाश्रयत्वात्पयसः प्रधानकर्मत्वम्, इति ।

**प्रमा**–(बुद्धिः) १ [ क ] यत्, अर्थविज्ञानं सा प्रमा । (वात्स्या० प्रस्तावना०)

[ ख ] यत्र यदस्ति तत्र तस्यानुभवः । तद्वति तत्प्रकारकानुभवो वा ।

[ ग ] यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकः, । स्वप्रकारसमानाधिकरणविषयताको वा, अनुभवः ।

[ घ ] विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी, । विशेष्यानिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा, । विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकाविषयत्वाप्रतियोगी वा, । विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा, अनुभवः । ( चि० १ )

[ ङ ] तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकताशाल्यनुभवः । ( मू० म० १)

[ च ] यथार्थानुभवः[2] । ( त० भा० १ ) ( न्या० म० ) ( त० सं० ) यथा घटे 'अयं घटः' इति प्रत्यक्षं प्रमा । ( स्व० ) २ वृत्तीद्धो बोधः प्रमेति मायावादिनो वदन्ति ।

**प्रमाणम्**[3]–[ क ] प्रमाता येनार्थं प्रमिनोति तत् । ( वात्स्या० प्रस्तावना० )

[ ख ] साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तम् । ( सर्व० अक्ष० )

[ ग ] प्रमायाः करणम् । ( न्या० म० ) ( त० सं० ) यथा चक्षुरादि प्रत्यक्षस्य प्रमाणम् । ( स्व० )

[ घ ] अनधिगतार्थगन्तृ प्रमाणमिति मीमांसकाः । ( सि० च० ) न्या-

---

१ लक्षणं च वक्ष्यमाणं प्रमात्वमेवेति विज्ञेयम् ।

२ अत्र याथार्थ्यं च तद्वति तदवगाहित्वम् । ( न्या० म० ) ( त० सं० )

३ तल्लक्षणं तु प्रमाणत्वमेव । तच्च [ क ] अनधिगतार्थकानुभवकारणत्वम् । तच्च गृहीतग्राहीतरानुभवकारणत्वम्* । ( कु० ३ ) [ ख ] तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकरणत्वम् । ( गौ० वृ० १।१।३ ) [ ग ] अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणताशालित्वे सति व्यापारवत्त्वम् । ( त० प्र० १ )

---

* स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारनिश्चयविषयविषयकेतरतद्विशेष्यकतत्प्रकारकानुभवकारणत्वमिति यावत् । ( कु० ३ )

यनये चत्वारि प्रमाणानि । प्रत्यक्षम् । अनुमानम् । उपमानम् । शब्दः । (गौ० १।१।३) (त० सं०) प्रकारान्तरेण प्रमाणं द्विविधम् । शब्दोपजीवि । शब्दानुपजीवि । (कु०) प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः संगिरन्ते । प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति वैशेषिका[1] बौद्धा आर्हताश्च । प्रत्यक्षं शब्दश्चेति द्वे प्रमाणे इति श्रीमदानन्दतीर्थ-[2] भगवत्पादाचार्याः । प्रत्यक्षमनुमानमाप्तवचनमिति[3] त्रीणि प्रमाणानीति सांख्या वेदान्तिनश्च । प्रत्यक्षानुमानोपमानानि त्रीणीति नैयायिकैकदेशिनः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानीति प्राभाकराः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट्प्रमाणानीत्यपरे भट्टवेदान्तिनः । संभवैतिह्ये अप्यतिरिक्ते प्रमाणे इति पौराणिकाः । चेष्टाप्यतिरिक्तं प्रमाणमिति तान्त्रिकाः । (सर्व०) (स्व०)

**प्रमाणान्तरम्**– यदसाधारणं सहकार्यासाद्य मनो बहिर्गोचरां प्रमां जनयति तत् । (कु० ४) यथा प्रत्यक्षे चक्षुरादि प्रमाणान्तरम् । (स्व०)

**प्रमाता**–यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः सः । (वात्स्या० प्रस्तावना०) यथा चैत्रो घटं प्रमिनोतीत्यादौ चैत्रः प्रमाता । (स्व०)

**प्रमात्वम्**–[क] अनधिगतार्थग्राहित्वम्[4] । (कु० ४)

[ख] तद्वति तत्प्रकारकज्ञानत्वम्[5], । तद्वृत्तितद्वैशिष्ट्यज्ञानत्वम्, । विशेष्यावृत्त्यप्रकारकत्वम्, । स्मरणान्यज्ञानत्वम्, । विशिष्टज्ञानत्वं, । वा (चि० १)

[ग] विशेष्यतावच्छेदेन तद्धर्मावच्छिन्नप्रकारितासंबन्धेन तद्धर्मवत्त्वम्, । विशेष्यतासंबन्धेन तद्विशिष्टत्वे सति तद्वत्त्वम्, । विशेष्यतासंबन्धेन तद्वदवच्छिन्ना या प्रकारिता तच्छाल्यनुभवत्वम् । (मू० म० १)

---

१ एतन्मते शब्दोपमानयोरनुमानविधयैव प्रामाण्यं, न तु स्वातन्त्र्येणेति बोध्यम् ।

२ एतन्मते त्वनुमानं श्रुत्यनुसारित्वेन प्रमाणं, न तु स्वातन्त्र्येणेति बोध्यम् ।

3 अत्र,अलौकिके विषये तु,वेदो ब्रह्मसूत्रं भगवद्गीता श्रीमद्भागवतमिति प्रमाणचतुष्टयमिति वल्लभाचार्याः।

४ तच्च स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारज्ञानाविषयविषयकत्वमिति निष्कर्षः।(कु०४)

५ तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वमित्यर्थः । (त० प्र०१) (वाक्य०)

[घ] स्वव्यधिकरणप्रकारावच्छिन्ना या विषयता तदनिरूपकत्वम्[1] । (गा० सामा०)

[ङ] तत्संबन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रतियोगिकसंबन्धावच्छि-न्नप्रकारकज्ञानत्वम्[2] । यथा घटे 'अयं घटः' इति ज्ञानस्य प्रमात्वम् । (स्व०) अत्र विप्रतिपत्तिः, प्रमात्वं स्वतो ग्राह्यं[3] परतो वेति । तत्र प्रमात्वं स्वतो ग्राह्यमेवेति मीमांसका[4] वदन्ति । परतो

---

१ इदं च सर्वांशे याथार्थ्यमित्यवधेयम् । (गा० सामा०)

२ अयमेव, सिद्धान्तलक्षणे गदाधरभट्टाचार्याणामाशय इति प्रतिभाति ।

३ स्वतो ग्राह्यत्वं च, ज्ञाननिष्ठप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री 'अनुव्यवसाया-दिरूपा' तज्जन्यग्रह*विषयत्वम् । तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविष-यिताप्रतियोगित्वमिति निष्कर्षः । इदमेव ज्ञप्तौ†स्वतस्त्वमित्युच्यते । (नील०) (सि०च०)

४ अत्र त्रयो विप्रतिपन्नाः । प्राभाकरापरपर्याया गुरवः, भट्टाः, मुरारिमिश्राश्चेति । तत्र गुरूणां मतं, ज्ञानस्य स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति । भट्टानां मतं च, ज्ञानमती-न्द्रियम् । ज्ञानजन्या ज्ञातता प्रत्यक्षा । तया च ज्ञानमनुमीयते‡इति । मुरारिमिश्रमतं तु, अनुव्यवसायेन ज्ञानं गृह्यत इति । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं§ गृह्यते । विषयनिरूप्यं हि ज्ञानम् । अतो ज्ञानवित्तिवेद्यो विषयः । (मु० गु०)

---

* स च ग्रहः, गुरुमते व्यवसायः । भट्टमते ज्ञाततालिङ्गकानुमितिः । मुरारिमिश्रमतेनुव्यवसायः । (नील०)

† स्वतस्त्वं च [क] ज्ञानग्राहकातिरिक्तानपेक्षत्वमिति भट्टाः । [ख] प्रामाण्यग्रहप्रतिबन्ध-काभावकालीनप्रामाण्याश्रयीभूतज्ञानग्राहकसामग्रीग्राह्यत्वम् । [ग] विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वम् । इदं स्वतस्त्वं च मुरारिभट्टानां मते उत्पद्यते । (कु० १) (त० भा० ४) (सि० च०)

‡ अत्रानुमानं तु, घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो घटत्वप्रकारकज्ञाततावत्त्वात् यन्नैवं तन्नैवम्, इति । (नील०)

§ इदमत्र तत्त्वम् । गुरुमते व्यवसायात्मकमेव सर्वं ज्ञानम् । तच्च स्वप्रकाशं मितिमातृमेयैतत्त्रय-विषयत्वात्त्रिपुटीत्युच्यते । स्वप्रकाशसामर्थ्यादेव स्वात्मानमिव स्ववृत्तिप्रामाण्यं स्वत एव गृह्णा-तीति । भट्टमते 'अयं घटः' इति ज्ञानानन्तरं घटे ज्ञाततानामकं फलं भवति । ततो 'ज्ञातो घटः' इति प्रत्यक्षम् । पश्चात्तया ज्ञानमात्रस्यातीन्द्रियत्वाज्ज्ञानं तन्निष्ठप्रामाण्यं चानुमीयत इति । मिश्रमते च [क] अयं घट इत्याकारकज्ञानानन्तरं 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयक-लौकिकमानसमुत्पद्यते । तेन प्रामाण्यस्य ग्रहणम् । [ख] घटमहं जानामीत्यनुव्यवसायो, घटं घटत्वं समवायं च विषयीकुर्वन्नात्मनि प्रकारीभूतघटमात्मानं तत्संबन्धीभूतव्यवसायं विषयी-करोति । एवं पुरोवृत्तिप्रकारसंबन्धस्यैव प्रमात्वपदार्थत्वेन स्वत एव प्रामाण्यं गृह्णातीति । (नील०) (सि० च०)

ग्राह्यमिति नैयायिकाः । तदुक्तम् । प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः । नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥ प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः । प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्, इति ॥ ( सर्व० जैमि० ) एवमप्रामाण्यमपि[2] परतो गृह्यते । ( त० दी० ) ( सि० च० )

**प्रमादः**—पूर्वं कर्तव्यतया निश्चितेष्यकर्तव्यताधीः[3] । ( गौ० वृ० ४।२ )

**प्रमितत्वम्**—[ क ] प्रमाविषयत्वम् । यथा घटे 'अयं घटः' इति ज्ञानविषयत्वम् । ( स्व० )

[ ख ] क्वचित्, स्वविशेष्यकप्रमाप्रकारत्वम् । ( गा० वाध० )

**प्रमितिः**—प्रमावदस्यार्थोनुसंधेयः ।

**प्रमेयम्**—१ योर्थः प्रतीयते तत् प्रमेयम्[4] । ( वात्स्या० प्रस्तावना० ) यथा घटपटादि सर्वं जगत्प्रमेयम् । ( स्व० ) २ संसारहेतुमिथ्याज्ञानविषयः ।

---

१ परतो ग्रहणे प्रमाणमनुमानम् । तच्च, विमता प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावदिति । ( सर्व० जैमि० ) अत्र च परतस्त्वं द्विविधम् । ज्ञप्तौ परतस्त्वम् । उत्पत्तौ परतस्त्वम्* । आद्यं यथा, प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे† सति, पूर्वोत्पन्नज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात्यन्नैवं तन्नैवं यथाप्रमेति व्यतिरेकिणा प्रमात्वं निश्चीयत इति । द्वितीयं तु प्रमाया गुणजन्यत्वरूपम् । तद्यथा, प्रत्यक्षस्य विशेषणवद्विशेष्यसंनिकर्षात्मकगुणजन्यत्वम् । ( त० दी० ) एवमनुमित्यादीनामपि स्वयमूह्यम् ।

२ अत्र, अप्रमायाः पित्तमण्डूकवसाञ्जनचाकचिक्यदूरत्वादिदोषजन्यत्वादुत्पत्तौ परतस्त्वमिति बोध्यम् । ( सि० च० )

3 एवं वैपरीत्येपि । ( गौ० वृ० ४।३ )

४ अत्र प्रमेयत्वं च [ क ] ईश्वर‡प्रमाविषयत्वम् । ( त० दी० २ ) [ ख ] प्रमाविषयत्वम् ।

---

* अत्र प्रामाण्यस्य परत उत्पत्तिकत्वं च ज्ञानसाक्षाद्विभाजकोपाध्यवच्छिन्नकार्यताप्रतियोगिककारणतानिरूपितकार्यतावत्त्वम् । ( मू० म० प्रामा० )

† अत्रेदं बोध्यम् । प्रथमं जलजलत्वयोर्निर्विकल्पकम् । ततः 'इदं जलं' इति विशिष्टज्ञानम् । तत इच्छा । ततः प्रवृत्तिः । तदनन्तरं जललाभः, इति । (सि० च० )

‡ तच्च केवलान्वयीति विज्ञेयम् ।

मोक्षहेतुधीविषयो वा । यथा, आत्मशरीरादि प्रमेयम्[1] । (गौ० वृ० १।१।९)

**प्रयत्नः**[2]–( गुणः ) कृतिः[3] । ( त० सं० ) यथा पचतीत्यादौ तिबर्थः । स त्रिविधः । प्रवृत्तिः । निवृत्तिः । जीवनयोनियत्नः । ( भा० प० )

**प्रयुक्तत्वम्**–१ कारणाभावात्कार्याभाव इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । यथा दण्डाभावाद्घटाभाव इत्यादौ घटाभावाद्यन्वयी पञ्चम्यर्थः । ( मू० म० १ ) ( गौ० वृ० १।१।२ )२ क्वचित्, व्यापकत्वमिति कश्चिदूक्ति । ( गा० सामा० )

**प्रयोगः**–१ अनुमानम् । ( वै० उ० ७।१।७ )२ शब्दानां यथायोग्यं समभिव्याहृतत्वेनोच्चारणमनुसंधानं वा प्रयोग इति शाब्दिका वदन्ति । ३ यज्ञादिक्रियाकलापबोधकानां फक्किकादीनां समुच्चय इति याजकाः । ४ भूतप्रेताद्युच्चाटनाय मन्त्रोच्चारणमिति मान्त्रिकाः । ५ शस्त्रादिमोचनमिति योद्धारः । ६ कामुककामिनीसंमेलनमित्यालंकारिकाः । ( स्व० )

**प्रयोजकत्वम्**–[ क ] स्वरूपसंबन्धविशेषः । यथा दण्डाभावाद्घटाभाव इत्यादौ दण्डाभावाद्यन्वयी पञ्चम्यर्थः । ( गौ० वृ० १।१।२ )

[ ख ] तन्निष्ठान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितपूर्ववृत्तित्वमिति गुरुचरणाः प्राहुः ।

**प्रयोजनम्**[4]–[ क ] यमर्थमधिकृत्य प्रवर्तते तत् । ( गौ० १।१।२४ ) यमर्थमाप्तव्यं हातव्यं वाध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम् । प्रवृत्तिहेतुत्वादिममर्थमाप्स्यामि हास्यामि वेति व्यवसायोर्थस्याधिकारः । एवं व्यवसीयमानोर्थोधिक्रियत इति । ( वात्स्या० १।१।२४ )

---

१ गौतमीये नये द्वादशविधं *प्रमेयम् । आत्मा । शरीरम् । इन्द्रियम् । अर्थः । बुद्धिः । मनः । प्रवृत्तिः । दोषः । प्रेत्यभावः । फलम् । दुःखम् । अपवर्गः ( गौ० १।१।९ )

२ स च मनोग्राह्यः । ( भा० प० ) निराकारः सविषयकश्चेति विज्ञेयम् ।

३ कृतित्वजातिमत्त्वं प्रयत्नसामान्यलक्षणम् । ( वाक्य० )

४ लक्षणं तु प्रयोजनत्वमेव । तच्च प्रवृत्तिहेत्विच्छाविषयत्वम्† । ( गौ० वृ० १।२४ )

---

* लक्षणं चात्माद्यन्यतमत्वम् । ( गौ० वृ० १।१।९ )

† विषयत्वं च साध्यताख्यविषयताविशेषः । ( गौ० वृ० १।२४ )

[ ख ] येन प्रयुक्तः प्रवर्तते तत्प्रयोजनम् । यमर्थमभीप्सञ्जिहासन्वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः। तदाश्रयश्च न्यायः प्रवर्तते । ( वात्स्या० १।१।१ ) ( त० भा० )

[ ग ] साध्यतयेच्छाविषयः । ( दि० १ ) यथा, सुखं दुःखहानिश्च प्रयो॰जनम् । ( त० दी० ) प्रयोजनं द्विविधम् । मुख्यम्[2] । गौणम्[1] । आद्यं सुखं दुःखहानिश्च । द्वितीयं भोजनादिकम् । ( गौ० वृ० १।२४ )

**प्रयोज्यत्वम्**—प्रयुक्तत्ववदस्यार्थोनुसंधेयः ।

**प्रलयः**[3]—[ क ] अभावविशेषः ( गौ० वृ० ४।८० ) यथा, विश्वस्थितिप्रलयसर्गमहाविभूतीत्यादौ । ( स्व० )

[ख] नष्टचेष्टतेति काव्यज्ञाः । स द्विविधः । खण्डप्रलयः । महाप्रलयः ।(स्व०)

**प्रवर्तकम्**—प्रवृत्तिजनकम् । यथा [ क ] बलवदनिष्टाननुबन्धीष्ट[4]साधनत्वे सति कृतिसाध्यताविषयकं ज्ञानं प्रवर्तकम् । यथा वा [ ख ] इष्टसाधनताविषयकं कृतिसाध्यताज्ञानं प्रवर्तकमिति जरन्नैयायिकाः । यथा वा [ ग ] स्व[5]विशेषणवत्ताप्रतिसंधानजन्यं कार्यता[6]ज्ञानं प्रवर्तकमिति गुरवः । ( चि० ४ ) ( न्या० म० ४ ) ( दि० गु० )

---

१ तल्लक्षणं तु स्वतःप्रयोजनत्वम् । तच्च निरुपाधीच्छाविषयत्वम् । (चि०४) (गौ० वृ० १।२४)

२ तल्लक्षणं च मुख्यप्रयोजनेच्छाधीनेच्छाविषयत्वम् । ( गौ०वृ०१।२४ )

३ इदानीं प्रलयक्रमः* कथ्यते । ईश्वरस्य संजिहीर्षावशात्परमाणुषु कर्मोत्पद्यते । ततः परमाणुद्वयविभागः । ततः परमाणुद्वयसंयोगनाशः । ततो द्व्यणुकनाशः । ततस्त्र्यणुकनाशः । एवं चतुरणुकादिनाशक्रमेण महापृथिव्यादीनां नाशः, इति । मीमांसकास्तु, संसारप्रवाहस्य बीजाङ्कुरन्यायेनानादित्वादनन्तत्वाच्च प्रलयसद्भावे मानाभाव इत्यूचुः ।

४ अत्र च, इष्टेत्यत्रेच्छायां कृतिसाध्यतेत्यत्र तु कृतौ चेदानींतनत्वं विशेषणं देयम् ( दि० गु० )

५ स्वं पुरुषः । प्रतिसंधानं परामर्शः ।

६ अत्र प्रयोगः, [ क ] अहमिदानींतनकृतिसाध्यसंध्यावन्दनः संध्यासमये शौचादिमत्वात्पूर्वसंध्यायामहमिवेति । ( चि०४ ) [ ख ] पाको मत्कृतिसाध्यो मत्कृतिं विनासत्वे सति मदिष्टसाधनत्वात्, इति च । ( दि० गु० )

---

* अत्र प्राञ्चः, क्वचित्समवायिकारणनाशाद्द्रव्यनाशः । क्वचिदसमवायिकारणनाशाद्द्रव्यनाश इत्यङ्गीचक्रुः । नव्यास्तु, लाघवात्सर्वत्रासमवायिकारणनाशाद्द्रव्यनाशमङ्गीचक्रुः । सि० च० )

**प्रवर्तना**—[1] १ प्रवृत्तिहेतुत्वम् । यथा, ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वेत्यादौ । ( वात्स्या० १।१।१८ ) २ प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेष इति भट्टपादाः । ३ प्रवृत्तिजनकज्ञानविषयतावच्छेदिकेति केचित् । ४ प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमिति मण्डनमिश्राः ( दि० गु० )

**प्रवृत्तिः**—[2] ( प्रयत्नः ) [ क ] तस्येप्साजिहासाप्रयुक्तस्य[3] समीहा । ( वात्स्या० प्रस्तावना० )

[ ख ] उत्कटरागजन्यः प्रयत्नविशेषः । ( वै० वि० ३।१।१९ ) ( वै० उ० ३।१।१९ )

[ ग ] वाग्बुद्धिशरीरारम्भः[4] । ( गौ० १।१।१७ ) मनोत्र बुद्धिरित्यभिप्रेतम् । बुद्ध्यतेनेनेति बुद्धिः । सोयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ( वात्स्या० १।१।१७ )

प्रवृत्तिस्तु द्वयी । कारणरूपा कार्यरूपा च । तत्राद्या यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाज्जलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति । ( गौ० वृ० ४।१ ) भट्टमते प्रवृत्तिर्द्वेधा । स्वेच्छाधीना ।

---

१ स च चेतनस्याभिप्राय एव । अचेतनस्य तु वेदस्याभिधानामा कश्चिच्छब्दसमवेतः । अयमेव शाब्दीभावनापरपर्यायो लिङ्त्वांशेनोच्यते ।

२ लक्षणं तु प्रवृत्तित्वमेव । तच्च, [ क ] रागजन्यतावच्छेदकनया सिद्धो जातिविशेषः । ( गौ० वृ० १।१।१७ ) [ ख ] चिकीर्षाजन्यतावच्छेदको जातिविशेष इति मीमांसकाः । ( मू० म० १ ) प्रवृत्तिर्हीच्छामपेक्षते । इच्छा चेष्टसाधनताज्ञानम् । तच्चेष्टसजातीयत्वे लिङ्गानुभवम् । सोपीन्द्रियार्थसंनिकर्षम् । ( कु० ) ( सर्व० जैमि० )

3 ज्ञातुः ।

४ वागारम्भो वाचिकी प्रवृत्तिः, सत्यं प्रियं हितमिति पुण्या । असत्यमप्रियमहितमिति पापा । बुद्धिः, बुद्ध्यते ज्ञायतेनेनेति मन उच्यते । तेन मानसी प्रवृत्तिर्भूतदयादिः । शारीरी प्रवृत्तिः, दानपरिचरणमित्यादिका दशविधा पापा दशविधा पुण्या चेति । ( वै० उ० ६।२।१४ )

परप्रेरणाजन्या । तत्राद्यायां प्रवर्तनाया अनुपयोगोपि द्वितीयप्रवृत्तौ सा प्रयोजिका । यथा, आचार्यप्रेरणयेदं करोमीति । ( दि० गु० )

**प्रवृत्तिनिमित्तम्**[1]–[ क ] पदशक्यतावच्छेदकम् । यथा घटत्वं घटपदप्रवृत्तिनिमित्तम् । ( स्व० )

[ ख ] निरवच्छिन्नविशेष्यतानिरूपितप्रकारतावदिति शाब्दिका वदन्ति ।

**प्रवेशनम्**–निष्क्रमणवदस्यार्थोनुसंधेयः ।

**प्रश्नः**–[ क ] अभिधानप्रयोजनादिजिज्ञासा । ( कु० ५ )

[ ख ] अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते । यथा, भोः किं तव नामधेयम् ? । किमर्थं च भवतात्रागतम् ? इति । ( स्व० )

**प्रसङ्गः**–१ (संगतिः) [ क ] उपोद्घातादिभिन्नस्मरणप्रयोजकसंबन्धः । (राम०) [ ख ] स्मृतस्योपेक्षानर्हत्वम्[2] । ( नील० ) यथा, यथार्थानुभवरूपप्रमाविभजनानन्तरं प्रमाकरणविभजने प्रसङ्गः संगतिः । (त० दी०) २ प्राप्तिरिति शाब्दिकादयो वदन्ति ।

**प्रसङ्गसमः**–( जातिः ) [ क ] दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानात्प्रसङ्गसमः । ( गौ० ५।१।९ ) साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः । क्रियाहेतुगुणयोगी क्रियावाꣳल्लोष्ट इति हेतुर्नापदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति । (वात्स्या० ५।१।९) [ ख ] साधनपरंपराप्रश्नः । यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम् । तत्र किं साधनम् ? । न हि साधनं विना कस्यचित्सिद्धिरस्ति । एवं तत्रापि किं साधनम् ? इत्यादि । ( नील० )

[ ग ] अनवस्थाभासप्रसङ्गः प्रसङ्गसम इत्याचार्याः । ( गौ० वृ० ५।९ )

---

१ लक्षणं च [ क ] प्रकारतया शक्तिग्रहविषयत्वम् । ( चि० ) [ ख ] वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्, इति । ( गा० श० )

२ द्वेषविषयतानवच्छेदकः स्मृतिविषयतावच्छेदको धर्म इति फलितार्थ इति गुरुचरणाः प्राहुः ।

**प्रसज्यप्रतिषेधः**[1]–[ क ] पर्युदासभिन्नः क्रियान्वयी च योर्थो नञा प्रतिपाद्यते सः। यथा चैत्रः पाकं न करोतीत्यादौ नञर्थः।

[ ख ] प्रसज्यप्रतिषेधः स्यात्क्रियया सह यत्र नञिति शाब्दिका आहुः।

**प्रसञ्जनम्**–आहार्यारोपः। ( राम० ) यथा, यदि पर्वतो निर्वह्निः स्यात्तर्हि निर्धूमः स्यादिति। ( स्व० )

**प्रसारणम्**–( कर्म ) शरीरविप्रकृष्टहेतुः[2] कर्म। ( त० सं० ४ )

**प्रागभावः**[3]–( अभावः ) प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीति व्यवहारहेतुः। ( त० दी० ४ ) ( न्या० म० १ ) ( त० प्र० १ )

**प्राची**–( दिक् ) [ क ] यदपेक्षया सूर्योदयाचलसंनिहिता[4] या दिक् सा तदपेक्षया प्राची। ( वै० उ० २।२।१० )

[ ख ] यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्वो[5] भविष्यन्वा भवन्वा सा दिक्प्राची। ( वै० उ० २।२।१४ )

[ ग ] उदयाचलसंनिहितदेशावच्छिन्ना दिक्। ( वाक्य० ) ( न्या० बो० ) ( नील० )

[ घ ] यदपेक्षयोदयगिरिसंनिहितं[6] यन्मूर्तं सा ततः प्राची। यथा मथु[7]-

---

१ अयं शाब्दिकमतप्रसिद्धः। नैयायिकमते चायमत्यन्ताभाव एवेति विज्ञेयम्।

२ ऋजुतासंपादकं कर्मेत्यर्थः। ( त० दी० ४ )

३ स च कार्यस्योत्पत्तेः पूर्वं तिष्ठति। लक्षणं तु विनाश्यभावत्वम्। ( मु० ) ( न्या० म० १ ) ( त० सं० )

४ संनिधानं तु संयुक्तसंयोगाल्पीयस्त्वम्। ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः। ( वै० उ० २।२।१० )

५ अत्र पुरुषाभिसंधिभेदमाश्रित्य कालत्रयोपवर्णनम्। ( वै० उ० २।२।१४ ) एवं दिगन्तरव्यवहारोपि स्वयं परिकल्पनीयः।

६ तदपेक्षयोदयगिरिसंनिहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम्। ( दि० १।२ )

७ अत्र च, मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयाग इत्यन्वयबोधः। ( दि० १।२ )

रातः प्राच्यां प्रयागः (दि० १।२) यथा वा, झळकीग्रामात्प्राच्यां तिरुपतिः । ( ख० )

प्राण[1]ः—(वायुः) [ क ] मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः । (दि० १।२) [ ख ] शरीरान्तःसंचारी वायुः । ( त० सं० ) स चैकोपि हृदयादिस्थानभेदात्प्राणापानव्यानोदानसमानसंज्ञां लभते । एवं मुखनिर्गमादिक्रियाभेदाच्च नागकूर्मकृकलदेवदत्तधनंजयसंज्ञां लभते । (सि० च० ) ( त० सं० ) ( मु० )

प्रातिस्विकम्—विशेषधर्मः । यथा घटादिनिष्ठं तद्व्यक्तित्वम् । ( ख० )

प्रादेशिकत्वम्—अव्याप्यवृत्तित्ववदस्यार्थोनुसंधेयः । ( मु० गु० )

प्रापणम्—नयनवदस्यार्थोनुसंधेयः । ( गा० व्यु० २ )

प्राप्तिसमः—जातिः । [ क ] प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वात्प्राप्तिसमः । ( गौ० ५।१।७ ) हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा? । न तावत्प्राप्य । प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ? । अप्राप्य साधकं न भवति । नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः । (वात्स्या० ५।१।७) [ ख ] प्राप्त्यै[2]विशेषादनिष्टापादनेन प्रत्यवस्थानम् । ( गौ० वृ० ५।७ ) यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते । किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न? उभयोरविशेषादिति । ( नील० )

प्रामाण्यम्—१ प्रमात्ववदस्यार्थोनुसंधेयः । २ प्रमाणत्ववदस्यार्थोनुसंधेयः ।

प्रार्थना—उत्कर्षप्रतिपादनेच्छा । ( कु० ५ ) यथा, देवदत्त ईश्वरं प्रार्थयतीत्यादौ धात्वर्थः । ( ख० )

---

१ स च विषयो वायुः । ( त० सं० )

२ अत्र प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् । ( नील० )

प्रेत्यभावः[1]–[ क ] पुनरुत्पत्तिः[2] । ( गौ० १।१।१९ ) ( त० भा० ) उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः । उत्पन्नस्य संबद्धस्य । संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः । पुनरुत्पत्तिः पुनर्देहादिभिः संबन्धः । ( वात्स्या० १।१।१९ )

[ ख ] मरणोत्तरं जन्म । ( दि० १ ) ( त० दी० ) ( नील० ) तद्यथा श्रूयते, वसिष्ठर्षेर्वेश्यायां पुनरुत्पत्तिः, इति । ( स्व० )

[ ग ] जन्ममरणप्रबन्धः[3] । ( वै० उ० ६।२।१५ )

प्रेरणा–[ क ] प्रयोजकसमवेतो व्यापारविशेषः । यथा, देवदत्तो यज्ञदत्तेन तण्डुलं पाचयतीत्यादौ णिजर्थो देवदत्तसमवेतव्यापारः । ( स्व० )

[ ख ] प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेष इति भट्टादयो मीमांसका आहुः ।

## फ.

फलम्[4]–१ प्रवृत्तिदोषजनितोर्थः । ( गौ० १।१।२० ) सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकं च । तत्पुनर्देहेन्द्रियबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । ( वात्स्या० १।१।२० ) फलं द्विविधम् । मुख्यम्[5] । गौणम्[6] । आद्यं सुखदुःखसंवेदनम् । द्वितीयं शरीरादिकं सर्वमेव । ( गौ० वृ० १।१।२० ) २ [ क ] धात्वीयवृत्तिग्रह-

---

१ प्रेत्य मृत्वा भावो जननमिति प्रेत्यभावः । ( गौ० वृ० १।१९ ) ( नील० ) । अस्यैव च प्रेत्यभावस्याजरंजरीभाव इति वैदिकी संज्ञा । ( वै० उ० ६।२।१५ )

२ तदर्थश्च, आत्मनो पूर्वदेहनिवृत्तावुत्तरदेहसंसर्गलाभः, इति । ( त० भा० )

३ प्रबन्धः प्रवाहः । ( वै० वि० ६।२।१५ )

४ लक्षणं च स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् । ( मू० म० १ )

५ लक्षणं च, [ क ] सुखदुःखान्यतरसाक्षात्कारत्वम् । ( गौ० वृ० १।२० ) [ ख ] प्रवृत्त्युद्देश्यत्वम् । ( राम० ) [ ग ] तदीयमुख्यफलत्वं तु यत्कामनात्वेन तदीयफलं प्रति जनकता तत्त्वम् । यथा स्वर्गादिकामना स्वप्रयोज्यदर्शादिसंबन्धेन दर्शादिफलस्वर्गादिकं प्रति जनिका । ( मू० म० )

६ तल्लक्षणं तु जन्यत्वम् । ( गौ० वृ० १।२० ) ( दि० १ )

प्रकारता[1]श्रयः । यथा, ग्रामं गच्छतीत्यादावुत्तरदेशसंयोगः फलम् । (स्व०) [ ख ] कर्तृप्रत्ययसमभिव्याहारे धात्वर्थजन्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रय इति केचिच्छाब्दिका वदन्ति ।

**फलोपहितत्वम्**–( जनकत्वम् ) उपधायकत्ववदस्यार्थोनुसंधेयः ।

## ब.

**बलम्**–साधनसामग्री । ( स्व० ) यथा, गमकतौपयिकरूप[2]साकल्यं बलमित्यादौ । ( चि० बाध० )

**बहिरिन्द्रि[3]यम्**–( इन्द्रियम् ) मनोभिन्नमिन्द्रियम् । यथा घ्राणम् । बहिरिन्द्रियाणि पञ्च । घ्राणम् । रसनम् । चक्षुः । त्वक् । श्रोत्रम् । ( गौ० १।१।१२ )

**बहिर्द्रव्यम्**–आत्मान्यद्रव्यम् । ( नील० ) यथा पृथिवी बहिर्द्रव्यम् । (स्व०)

**बाधः**–अभावः । यथा, अर्थाबाधो योग्यतेत्यादौ । ( वाक्य० )

**बाधः[4]**–( हेतुदोषः ) [ क ] साध्याभाववत्त्वप्रमाविषयपक्षकत्वम्, । प्रमितसाध्याभाववत्पक्षकत्वम्, । पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं, वा । चि० २ )

---

१ अत्र, धातूनां फलावच्छिन्नव्यापारे*शक्तिरिति नैयायिकसिद्धान्त इत्याकूतम् ।

२ तच्च, अनुमितौ व्याप्तिपक्षधर्मतात्मकं बलम् । ( दीधि० सत्प्र० ) ( गा० बाध० )

३ तल्लक्षणं च घ्राणाद्यन्यान्यत्वम् । ( गौ वृ० १।१२ )

४ बाधलक्षणं च, प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति†प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वम् । इदमेव बाधविभाजकमिति जेगीयते । ( दीधि० )

---

* कर्माख्यातसमभिव्याहारस्थले तु शाब्दबोधे फलस्य द्विधा भाने चेष्टापत्तिरेव शरणमिति भावः ।

† तदर्थश्च, उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्तविशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपिता या स्वनिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयित्वानवच्छिन्ना प्रतिबन्धकता तदवच्छेदकीभूता यादृशविशिष्टनिरूपितविषयिता भवति तादृशत्वम् । ( गा० बाध० )

[ ख ] साध्याभाववान्पक्षः, । साध्यवदन्यःपक्षः, । पक्षावृत्ति साध्यम्, । पक्षे साध्याभावः, । पक्षस्य साध्याभाववत्त्वादिकम्, । साध्यादेः पक्षावृत्तित्वादिकम्, । साध्यवत्सामान्यादेः पक्षान्यत्वादिकम्, । विशिष्टे साध्ये पक्षादेः विशेष्याभाववत्त्वादिकम्, । पक्षादेः साध्यासमानाधिकरणधर्मवत्त्वम् । ( दीधि० बाध० )

[ ग ] पक्षनिष्ठानवच्छिन्न[1]साध्याभाववत्त्वम् । ( गा० बाध० ) ( मु० ) यथा, ह्रदे धूमेन वन्हिसाधने वन्ह्यभाववद्ध्रदादिर्बाधः । ( त० ) स चायं दशविधः । धर्मिग्राहकमानबाधितः, घटो व्यापकः सत्त्वादिति प्रत्यक्षेण । परमाणवः सावयवा मूर्तत्वादित्यनुमानेन । मेरुः पाषाणमयः पर्वतत्वादिति, सुवर्णमयत्वबोधकागमेन । साध्यप्रतियोगिग्राहकमानबाधितः, वन्हिरनुष्णः कृतकत्वादिति प्रत्यक्षेण । शब्दो न श्रावणो गुणत्वादित्यनुमानेन । गवयत्वं न गवयपदप्रवृत्तिनिमित्तं जातित्वादित्यनुमानेन । साध्यग्राहकमानबाधितः, नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यागमेन । हेतुग्राहकमानबाधितः, जलान्युष्णानि पृथिवीतो विपरीतस्पर्शत्वात्तेजोवदिति प्रत्यक्षेण । मनो विभु ज्ञानासमवाय्याधारत्वादित्यनुमानेन । राजसूयोब्राह्मणकर्तव्यः स्वर्गसाधनत्वादग्निष्टोमवदिति राजसूयकर्तव्यताबोधकागमेन, इति । ( चि०२ )

**बाधकमानम्**—बाधवदस्यार्थोनुसंधेयः ( दीधि० पक्ष० )

---

१ इदं च व्याप्यवृत्तिसाध्यकस्थले । यथा जलं पृथिवी स्पर्शवत्त्वादित्यादौ जलनिष्ठपृथिवीत्वाभावो बाधः । यत्र तु देशकालावच्छेदेन साध्यसाधनम् । यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ* *उत्पत्तिकालावच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यादौ च, तत्र तदवच्छेदेन साध्याभाववत्त्वं बाधः । यत्र तु पक्षतावच्छेदके धर्मेनतिरिक्तवृत्तित्वरूपसाध्यतावच्छेदकताभानमुद्देश्यम् । यथा पर्वतो वह्निमानित्यादौ, तत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्याभाववत्त्वं बाधः । यत्र तु तादृशधर्मसामानाधिकरण्यमात्रेण साध्यसिद्धिरुद्देश्या । यथा ह्रदो वन्हिमानित्यादौ, तत्र तादृशधर्मानवच्छिन्नं साध्याभाववत्त्वं बाधः । इति विशेषो बोध्यः । ( गा० बाध० )

---

* इदमेवासंकीर्णबाधस्थलमिति जेगीयते । ( त० ) परे तु, घटः सकर्तृकः कार्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासते तत्र तदभावोसंकीर्णोदाहरणमिति वदन्ति ।( गौ० वृ० १।४२)

**बाधितः**–( हेत्वाभासः ) यस्य[1] साध्याभावः प्रमाणान्तरेण निश्चितः सः । यथा, वह्निरनुष्णो द्रव्यत्वादिति । ( त० सं० ) यथा वा, ह्रदो वह्निमान्धूमादित्यादौ धूमो बाधितः । ( स्व० )

**बालः**–[ क ] ग्रहणधारणेपटुः[2] । ( त० दी० १ ) यथा, बालानां सुखबोधाय क्रियते तर्कसंग्रह इत्यादौ । ( स्व० )

[ ख ] अधीतकाव्यव्याकरणोनधीतन्यायोत्र बाल इति केचिद्वदन्ति ।

**बाह्यैकैकेन्द्रियग्राह्यगुणत्वम्**[3]– चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्यपरिमाणान्यगुणसमवेतजातिमत्त्वम् । ( दि० गु० )

**बुद्धिः**[4]–( गुणः ) १ [क] बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् । (गौ० १।१५) [ख] बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः । ( वै० ) ( वै० उ० ८।१।१ )

---

१ पक्षनिष्ठसाध्याभावादिरूपबाधवान्यः स बाधित इति भावः । ( वाक्य० २ )

२ ग्रहणपूर्वकधारणयोग्य इत्यर्थः । ( वाक्य० )

३ बाह्यैकैकेन्द्रियग्राह्यगुणाश्च, रूपादिचतुष्टयं शब्दश्च । ( भा० प० गु० )

४ लक्षणं च [क] बुद्ध्यादिपदवाच्यत्वं, अनुभवसिद्धज्ञानत्वजातिरेव वा । (गौ०वृ०१।१५)[ख] जानामीत्यनुव्यवसायगम्यज्ञानत्वम् । ( त० दी० ) ( सि० चं० )

५ बुद्ध्युत्पत्तेर्दिक्प्रदर्शने । संनिकृष्टे वस्तुनि तावत् ‘अयम्’ इति बुद्धिरुत्पद्यते । विप्रकृष्टे वस्तुनि ‘एषः’ इति बुद्धिः । क्रियायां स्वतन्त्रोयमिति बुद्धिमपेक्ष्य ‘त्वया’ इति कर्तृत्वोपरक्ता बुद्धिः । करणव्यापारविषयत्वबुद्धिमपेक्ष्य ‘कृतम्’ इति कर्मबुद्धिः । अयं भुजिक्रियायां कर्ता प्रयोजकश्चायमिति बुद्धिमपेक्ष्य ‘भोजय’ इति । नियोज्यनियोक्तृव्यापारस्य विषयोयमिति बुद्ध्यपेक्षम् ‘एनम्’ इति । एवमन्यदपि बुद्ध्यपेक्षमूहनीयम् । ( वै० उ० ८।२।१ )

६ बुद्धिः प्रथमतो द्विविधा । अनुभूतिः स्मृतिश्च । अनुभूतिरपि कणादमते द्विविधा । प्रत्यक्षमनुमितिः। प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधम्, सविकल्पकनिर्विकल्पकभेदेन च द्विविधम्, लौकिकालौकिकभेदेन द्विविधं च । अनुमितिरपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपत्रिविधानुमानजन्यत्वात्त्रिविधा । स्मृतिश्चापेक्षानात्मकनिश्चयाधीनसमानाकारकभावनाख्यसंस्काराधीनैकविधैव । प्रकारान्तरेणापि बुद्धिर्द्विविधा । प्रमाप्रमा चेति । संशयनिश्चयभेदेनापि बुद्धिर्द्विविधा । एतन्मते सादृश्यज्ञानस्थले पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमितिर्भवति । ( वै० वि० ८।१।११ )

[ग] आत्मगुणत्वे सत्यर्थप्रकाशः । (त० प्र०) (त० भा०)

[घ] सर्वव्यवहारहेतुर्ज्ञानम् । (त० सं०) यथा भोगः। (वात्स्या० १।१।९)

२ सत्त्वरजस्तमोगुणाया अनादिपरिणामिनित्यप्रकृतेर्जडायाः परिणामविशेषो महत्तत्वापरपर्यायो बुद्धिरिति सांख्याः। (कु० १) (सि० च०) बुद्धिर्द्विविधा । नित्या । अनित्या । नित्या परमात्मनः । सा च प्रत्यक्षप्रमात्मिकैव । अनित्या तु जीवस्य । अनित्या द्विविधा । स्मृतिः । अनुभवः । तौ च प्रत्येकं द्विविधौ । यथार्थौ । अयथार्थौ। तत्र स्मृतिरेकविधैव । अनुभवस्तु चतुर्विधः । प्रत्यक्षम् । अनुमितिः। उपमितिः । शाब्दबोधः । यथार्थानुभवः प्रमेत्युच्यते । अयथार्थानुभवोऽप्रमेत्युच्यते । वैशेषिकनये ज्ञानं द्विविधम् । विद्या चाविद्या च । विद्या चतुर्विधा । प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । अविद्यापि चतुर्विधा । संशयविपर्ययस्वप्नानध्यवसायलक्षणा । तत्र यल्लैङ्गिकं तदनिन्द्रियजम् । इन्द्रियजमपि द्विविधम् । सर्वज्ञीयमसर्वज्ञीयं च । सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानम्। असर्वज्ञीयं च प्रत्यक्षं द्विविधम् । सविकल्पकं निर्विकल्पकं च । सविकल्पकं ज्ञानं न प्रमाणमिति कीर्तिदिङ्नागादयः । स्वमते तु सविकल्पकमपीन्द्रियार्थसंनिकर्षजत्वात्प्रत्यक्षं निर्विकल्पके प्रमाणं चेति । (वै० उ० ८।१।२)

**बोधः**—बुद्धिवदस्यार्थोऽनुसंधेयः ।

**बौद्धत्वम्**[2]—'वेदो न प्रमाणम्' इति यत्किंचिद्वेदविशेष्यकानाहार्यनिश्चयवत्त्वम् । (मू० म० १) यथा सुगतादीनां बौद्धत्वम् । (स्व०)

---

१ सर्वव्यवहारः बुबोधयिषापूर्वकवाक्यप्रयोगः । तथा च तादृशव्यवहारजनकतावच्छेदकजातिमत्यर्थः । (धावय०)

२ तत्र बौद्धाश्चतुर्विधाः । माध्यमिकाः । योगाचाराः । सौत्रान्तिकाः। वैभाषिकाः, इति । ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति । चतुर्विधभावना च, सर्वं, क्षणिकंक्षणिकम् । दुःखंदुःखम् । स्वलक्षणंस्वलक्षणम् । शून्यंशून्यम्, इति । ते च बौद्धा यथाक्रमं सर्वशून्यत्वबाह्यशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते । (सर्व० बौद्ध०)

## भ.

भक्तिः—१ गौणत्ववदस्यार्थोनुसंधेयः । २ [ क ] आराध्यत्वप्रकारकं ज्ञानम् । ( त० प्र० ) (सि० च०) यथा, भक्त्या हरिमुपास्त इत्यादौ । ( स्व० ) [ ख ] सा परानुरक्तिरीश्वरे, इति शाण्डिल्यर्षिर्वक्ति ।
[ ग ] माहात्म्यज्ञानपूर्वः सुदृढः स्नेहो भक्तिरिति पञ्चरात्रागमकुशलाः।
[ घ ] निरतिशयानन्दाप्रियानन्यप्रयोजनसकलेतरवैतृष्ण्यवज्ज्ञानाविशेष इति रामानुजीया आहुः । ( सर्व० रामा० )

भयम्—[ क ] अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् । (गौ० वृ० ४।२)
[ ख ] परतोनिष्टसंभावना । यथा व्याघ्राद्बिभेतीत्यादौ बिभेत्यर्थः । ( गा० व्यु० ५ )

भविष्यत्कालः—यत्प्रागभावेन यः कालोवच्छिद्यते स तस्य भविष्यत्कालः । ( वै० उ० २।२।८ )

भविष्यत्त्वम्—[ क ] आद्यकृतिप्रागभावः । ( न्या० म० ४ )
[ ख ] वर्तमानप्रागभावः । ( गा० व्यु० ल० )
[ ग ] वर्तमानप्रागभावप्रतियोगित्वम् । (नील०) (त० प्र०१) (वाक्य०)
[ घ ] विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । (तर्का०४ ) (दीधि०२ )
[ ङ ] वर्तमानकालोत्तरकालोत्पत्तिकत्वम्[१] । ( त० प्र० २ ) (दीधि० )
[ च ] वर्तमानध्वंसः । ( गा० व्यु० ल० ) यथा घटो भविष्यतीत्यादौ कालस्य घटस्य वा भविष्यत्त्वम् । ( स्व० )

भागासिद्धिः—( स्वरूपासिद्धिः ) पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावः । यथा, पृथिवी गन्धवती घटत्वादित्यादौ पृथिवीत्वसामानाधिकरण्येन पटादौ घटत्वाद्यभावः । ( गा० बाध० ) यथा वा, पृथिव्यादयश्चत्वारः परमाणवो नित्या गन्धवत्त्वादिति[२] । ( त० भा० )

---

१ इदं च प्रागभावानङ्गीकारपक्षेपि संगच्छत इति विज्ञेयम् ।
२ अत्र गन्धवत्त्वं चतुर्षु नास्ति । अत एव भागे स्वरूपासिद्धत्वम् । ( त० भा० )

**भाक्तः**—लाक्षणिकः[1] । यथा सिंहो[2] माणवक इत्यादौ सिंहशब्दः । ( स्व० )

**भानम्**—१ विषयतावदस्यार्थोनुसंधेयः । (दि० १।२) २ ज्ञानम् । यथा, उपनीतभानमित्यादौ । ( स्व० )

**भावः**—१ सत्ता । ( वै० उ० ७।२।२७ ) २ द्रव्यादिषट्कम्[3] । ( मु० १ ) ३ धात्वर्थः । ( गा० व्यु० ) ४ इतराविशेषणतया क्रियाबोधपरत्वम् । यथा, आत्मनेपदविधायके 'भावकर्मणोः' इति पाणिनिसूत्रे भावपदार्थः । ( गा० व्यु० ल० ) भावनाविशेषो भाव इति यास्को वक्ति । प्रकृतिजन्यबोधे प्रकारो भाव इति शाब्दिकाः । अन्तःकरणमिति सांख्यादयः । भक्तिरपीति वेदान्तिनः । अभिप्रायोपीति पौराणिकाः काव्यज्ञाश्च । आलम्बनोद्दीपनौ, शृङ्गारादिषु स्थायिनो, रत्यादयश्च, निर्वेदादयस्त्रयस्त्रिंशच्च, भाव इति रसिकाः । स्वोत्तमो विद्वानिति नाटकज्ञाः । संगीतसंगतपदार्थद्योतकहस्तचेष्टाविशेष इत्यभिनयकलाज्ञा नर्तकाश्च संगिरन्ते ।

**भावना**—(गुणः) १ अनुभवजन्यः स्मृतिहेतुर्गुणविशेषः[4] । (त० सं० ४) २ भवितुर्भावनानुकूलो भावयितुर्व्यापारविशेष इति मीमांसकाः[5] । ( लौ० भा० )

**भास्वरत्वम्**—[ क ] परप्रकाशकत्वम् । यथा, सूर्यतेजसि विद्यमानस्य रूपस्य भास्वरत्वम् । ( वै० उ० २।१।३ )

[ ख ] जातिविशेषः[6] । ( दि० १ )

**भिन्नप्रकारकत्वम्**—अभावप्रतियोगितावच्छेदकतया ग्राह्यतानवच्छेदकरूपप्रकारावगाहित्वम् । ( गा० वाध० ) यथा, पर्वतो वन्हिमानिति बुद्धिमपे-

---

१ गौण इत्यर्थः ।

२ अत्र, सिंहपदस्य सिंहसदृशे लक्षणा । सादृश्यं च शौर्यादिनेति नैयायिकाः । शाब्दिकास्तु सिंहपदस्य सिंह एवार्थः । माणवके च सिंहवृत्तिशौर्यादयो गुणा आरोप्यन्त इत्याहुः ।

३ तल्लक्षणं च भावत्वमेक । तच्चात्र समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वम् । (दि० १)

४ स तु संस्कारप्रभेदो जीवमात्रवृत्तिरतीन्द्रियश्चेति बोध्यम् । ( भा० प० ) ( त० सं० )

५ एतन्मते शाब्दीभावनार्थीभावना चेति भेदेन द्विविधा भावनेति विज्ञेयम् ।

६ स तु तेजोवृत्तिः शुक्लत्वव्याप्यश्चेति विज्ञेयम् । ( दि० १ )

क्ष्य 'पर्वतो महानसीयवन्ह्यभाववान्' इति निश्चयस्य[1] भिन्नप्रकारकत्वम् । (स्व०)

**भूतकालः**–यत्प्रध्वंसेन यः कालोवच्छिद्यते स तस्यातीतकालः । (वै० उ० २।२।८) यथा, गतः स कालो[2] यत्रासीदित्यादावतीतकालः । (स्व०)

**भूतत्वम्**–१ अतीतत्ववदस्यार्थोनुसंधेयः । (तर्का० ४) २ [क] बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । (गौ० वृ० १।१३) (न्या०बो०) (गा० चतु०) [ख] आत्मावृत्तिविशेषगुणवत्त्वम् । (मु०) यथा पृथिव्यादीनां[3] पञ्चानां भूतत्वम् । (गौ० १।१।१३) (भा० प०)

**भूतार्थवादः**–(अर्थवादः) [क] तत्कालेपि तद्गुणज्ञापकः । यथा, जरायामप्ययं शूर इत्यादि । (सि० च०)

[ख] प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोर्थवादः । यथा इन्द्रो वृत्राय वज्रमुदयच्छदित्यादि । (लौ० भा०)

[ग] अविरुद्धाप्राप्तार्थबोधक इति केचिद्वदन्ति ।

**भूमिका**–१ प्रयोजनसंपादिका युक्तिः । (राम०) यथा, विशेषपदस्य प्रयोजनमभिधातुं भूमिकामाहेत्यादौ । (दि०१) २ रङ्गसंचारिपात्राणां स्थानकं भूमिकां विदुरिति नाटकज्ञा आहुः ।

**भूयस्त्वम्**–१ [क] इतरद्रव्यानभिभूतैः पार्थिवावयवैरारब्धत्वम्[4] । (वै०उ० ८।२।५) [ख] जलाद्यनभिभूतभागारब्धत्वम् । (वै० वि० ८।२।५) यथा

---

१ अत्र च नवीनमते प्रतिबन्धकतायां समानप्रकारकत्वं तन्त्रमिति नियमस्य सत्त्वेन, पर्वतो वन्हिमानिति बुद्धिं प्रति 'पर्वतो महानसीयवन्ह्यभाववान्' इति निश्चयस्य भिन्नप्रकारकत्वान्न प्रतिबन्धकत्वम्, इति बोध्यम् ।

२ तदुक्तम् । गतः स कालो यत्रासीदवज्ञा कल्पशाखिनाम् । उदुम्बरफलेभ्योपि स्पृहयामोधुना वयम्, इति ॥

३ पृथिव्यादयश्च, पृथिव्यापस्तेजो वायुराकाशमिति । (गौ०१।१।१३)

४ पारिभाषिकं चैतद्भूयस्त्वं समानतन्त्रेपि । (वै० उ० ८।२।५)

घ्राणेन्द्रियस्य भूयस्त्वम् । २ पुनःपुनः परिशीलनवत्त्वम् । यथा भूयोदर्शनमित्यादौ (स्व०)

**भूयोदर्शनम्**—साध्यसाधनयोर्व्याप्तिग्रहे तयोर्भूयःसहचारदर्शनम् । (सि० च०) यथा, धूमधूमध्वजयोर्नानास्थानावच्छेदेन सामानाधिकरण्यावगाहिज्ञानम् । (स्व०)

**भेदः**—१ अन्योन्याभाववदस्यार्थोनुसंधेयः । २ प्रभेदवदस्यार्थोनुसंधेयः । (स्व०)

**भोगः**—सुखदुःखान्यतरसाक्षात्कारः । (त० भा० ४) (त०दी०) (वाक्य०)

**भोजनम्**—गलाधोनयनम् । तच्च गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा, ओदनं भुङ्क्ते इत्यादौ धात्वर्थः । (गा० व्यु० २)

**भ्रमः**[1]—(अप्रमा) [क] यत्प्रकारिका या विषयता तत्प्रकारव्यधिकरणविषयताकम् , । स्वप्रकारव्यधिकरणविषयताकम् , । स्वव्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगि, ज्ञानम् । (चि० १)

[ख] तदभाववन्निरूपिततन्निष्ठविषयताप्रतियोगि ज्ञानम् । तद्धर्माधिकरणावृत्तितद्विषयताकं ज्ञानम् । तत्संबन्धावच्छिन्न[2]तद्धर्मावच्छिन्नप्रतियोगिताकतदभाववति तत्संबन्धेन तद्धर्मविशिष्टतन्निरूपितवैशिष्ट्यविषयताशालि ज्ञानम् । विशेष्यिता[3]संबन्धेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतदभाववदवच्छिन्ना या तद्व्यक्तिप्रकारिता तच्छालि ज्ञानम् । (मू०म०१)

[ग] मिथ्याज्ञानापरपर्यायोयथार्थनिश्चयः । (गौ०वृ०४।२) (त०सं०)

[घ] अतस्मिन्तद्ग्रहः । (सर्व० अक्ष०) (भा० प०) (त० भा०)

[ङ] तदभाववति तत्प्रकारकं ज्ञानम् । यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । (त० प्र० १) (त० दी०) भ्रमो द्विविधः । विपर्यासः ।

---

१ लक्षणं च स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्वैतात्रितयसंबन्धेन संबन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम् । (गा० अव० हेतु०)

२ इदं तु तद्धर्मरूपेण तद्भ्रमस्वरूपमिति बोध्यम् ।

3 इदं च तत्तद्व्यक्तेर्भ्रमस्वरूपमिति विज्ञेयम् ।

संशयः । आद्यः, शरीरादौ यदात्मत्वप्रकारकं 'गौरोहमित्याकारकं' निश्चयरूपम् । ( मु० गु० ) । द्वितीयः, स्थाणुर्वा पुरुषो वेति । ( स्व० )

## म.

**मङ्गलम्**–१ आशीर्वादाद्यन्यतमम् । यथा, निधाय हृदि विश्वेशं विधाय गुरुवन्दनमिति । ( स्व० ) २ अगर्हिताभीष्टार्थसिद्धिर्मङ्गलमिति पौराणिका वदन्ति ।

**मतानुज्ञा**– ( निग्रहस्थानम् ) [ क ] स्वपक्षदोषाभ्युपगमात्परपक्षदोषप्रसङ्गः । ( गौ० ५।२।२१ ) यः परेण चोदितं दोषं स्वपक्षेभ्युपगम्यानुद्धृत्य वदति 'भवत्पक्षे समानो दोषः' इति, स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन्परमतमनुजानातीति मतानुज्ञानाम निग्रहस्थानमापद्यत इति । ( वात्स्या० ५।२।२१ )

[ ख ] पराभिमतार्थस्य स्वप्रतिकूलस्य स्वयमेवाभ्यनुज्ञा स्वीकारः । ( त० भा० )

[ ग ] स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम् । ( दि० १ ) ( नील० )

**मत्सरः**–( दोषः ) [ क ] स्वप्रयोजनप्रतिसंधानं विना पराभिमतवारणेच्छा । यथा राजकीयादुदपानान्नोदकं पेयमित्यादि ।

[ ख ] परगुणनिवारणेच्छा । ( गौ० वृ० ४।३ )

**मध्यस्थः**– वादिप्रतिवाद्युभयप्रयुक्तन्यायवाक्यद्वयजन्यविरुद्धकोटिद्वयोपस्थितिजन्यसाध्यादिसंदेहप्रयोज्यैकतरसत्कोटिकानुमितिर्यस्य भवति सः । यथा हि पर्वतादौ वन्ह्यादिसाधने वादिना 'पर्वतो वन्हिमान्धूमवत्त्वात्' इत्यादिन्याये प्रयुक्ते, प्रतिवादिना च 'पर्वतो न वन्हिमान्पाषाणमयत्वात्' इत्यादिवाक्ये प्रयुक्ते च सति मध्यस्थपुरुषस्य 'पर्वतो वन्हिमान्न वा' इति संशयानन्तरं 'पर्वतो वान्हिमान्' इत्यनुमितिर्भवतीति । ( स्व० )

---

१ तदुक्तम् । आशीर्वादनमस्कारवस्तुनिर्देशभेदतः । मङ्गलं त्रिविधं प्रोक्तं शास्त्रादीनां मुखादिषु, इति ॥ ( सि० च० )

२ अत्रापि स्वप्रयोजनप्रतिसंधानं विनेति पूरणीयम् ।

**मनः**[1]–(द्रव्यम्) [क] सुखाद्युपलब्धिसाधनमिन्द्रियम्। (गौ० वृ० १।१।१६) (त० भा०) (भा० प०) (त० सं०)

[ख] मनस्त्वाभिसंबन्धवत्। (त० भा०) (न्या० म०) यथा, सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः। (वात्स्या० १।१।९) तच्च प्रत्यात्म[2]नियतत्वादनन्तं, अणु नित्यमतीन्द्रियं चेति। मनो विभ्विति मीमांसकाः। मनो नेन्द्रियमिति मायावादिप्रभृतयो वदन्ति। न्यायनये मनस्यष्टौ गुणास्तिष्ठन्ति। संख्यादिपञ्चकं परत्वमपरत्वं वेगश्चेति। (त० भा०) (न्या० म०) (भा० प०) (सि० च०)

**मननम्**–[क] अनुमितिवदस्यार्थोनुसंधेयः। (कु० १)

[ख] युक्तिभिरनुचिन्तनम्। (त० प्र० १) यथा, आत्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादौ।

**ममता**–स्वकीयत्वाभिमानः। यथा, अहंतां ममतां त्यक्त्वापीह लोके सुखी भवेदित्यादौ। (स्व०)

**मन्त्रः**–(वेदः) [क] अर्थस्मारकवाक्यविशेषः। यथा, ऋगादिर्मन्त्रः। (स्व०)

[ख] प्रयोगसमवेतार्थस्मारको मन्त्र इति मीमांसकाः। (लौ० भा०)

**मरणम्**–[क] जीवनादृष्टनाशः।

[ख] प्राणध्वंसः। (गौ० वृ० १।१।१९)

---

१ मनःसद्भावे प्रमाणमनुमानम। तच्च, सुखादिसाक्षात्कारः करणसाध्यो जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवत्, इति।

मनोलक्षणं च, [क] युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्। (गौ० १।१।१६) [ख] स्पर्शरहितत्वे सति क्रियावत्त्वम्। (त० दी०) [ग] मानसत्वावच्छिन्नकार्यतानिरूपितकारणत्वे सतीन्द्रियत्वम्। (वाक्य०) [घ] द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः। (सर्व० औलु०) [ङ] आत्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वमिति मीमांसका आहुः। (न्या० म०)

२ तत्तदात्मसमवेतभोगजनकत्वविशिष्टतत्तदात्मासमवेतभोगजनकत्वप्रयुक्तानन्तत्ववन्मन इति वाक्यार्थः। (वाक्य०)

[ ग ] चरमप्राणशरीरसंयोगध्वंसः । ( गौ० वृ० १।१।१९ ) ( नील० ) ( दि० १ ) ( वै० वि० ६।२।१५ )

[ घ ] शरीरमनोविभागः । ( वै० उ० ६।२।१५ ) यथा, न जायते म्रियते वा विपश्चिदित्यादौ । (स्व०) स्कन्धनाशो मरणमिति बौद्धा आहुः ।

**महत्त्वम्**–[ क ] मानव्यवहारा[2]साधारणकारणत्वम् ।

[ ख ] द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा । ( वै० उ० ७।१।८ ) यथा, महत्त्वं षड्विधे हेतुरित्यादौ । ( स्व० )

**महाप्रलयः**–( प्रलयः ) [ क ] चरमसंयोगनाशः । ( गा० सिद्धा० )

[ ख ] सर्वभाव[3]कार्यध्वंसः । ( त० दी० १ )

**मानः**–आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीः । ( गौ० वृ० ४।२ ) यथा, पराभवोप्युत्सव एव मानिनामित्यादौ । ( स्व० )

**मानसिकः**–( नमस्कारः ) 'अयं मत्त उत्कृष्टः, अहमस्मादपकृष्टः' इति ज्ञानविशेषः । ( स्व० )

**माया**–परवञ्चनेच्छा । ( गौ० वृ० ४।२ ) यथा, त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते, इत्यादौ । ( स्व० ) ईश्वरोपाधिर्मायेति शांकराः । भगवदिच्छेति केचिद्वेदान्तिनः । चित्प्रकृत्यपरपर्याया लक्ष्मीरपीति माध्वाः । भगवच्छक्तिविशेष इति वल्लभीयाः । आदिमायाचण्डीत्याद्यपरपर्याया कालिकेति शाक्ता आहुः ।

**मिथ्याज्ञानम्**–भ्रमवदस्यार्थोनुसंधेयः ।

**मीमांसा**–१ लाघवज्ञानात्मकस्तर्कः । ( दि०२ )२ विचार इति केचित् ।

**मुक्तिः**–निःश्रेयसवदस्यार्थोनुसंधेयः ।

**मुख्यत्वम्**–१ स्वेतरासाधारणकारणककार्यकभिन्न[4]त्वम् । (त० प्र० १) यथा

---

१ प्राणशरीरसंयोगे चरमत्वं च, स्वसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधिकरणत्वम् । ( राम० )

२ मानव्यवहारो हस्तवितस्त्यादिव्यवहारः । ( वै० उ० ७।१।८ )

३ तदुक्तम् । नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्, इति । ( दि० ४ )

४ इदं च कारणनिष्ठं मुख्यत्वमिति विज्ञेयम् ।

मुक्तिं प्रति तत्त्वज्ञानरूपकारणस्य मुख्यत्वम्। २ प्रवृत्त्युद्देश्यत्वम्[1]। (राम०) यथा सुखदुःखसंवेदनरूपफलस्य मुख्यत्वम्। (स्व०) ३ प्रकारतान्यत्वम्[2]। (त० प्र० २) यथा, घटवद्भूतलमिति ज्ञाने भूतलनिष्ठविशेष्यताया मुख्यत्वम्। (स्व०)

**मूर्तगुणत्वम्**[3]–[क] अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम्। [ख] मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वम्। (दि०गु०)

**मूर्तम्**[4]–क्रियावद्द्रव्यम्। यथा वायुर्मूर्तः। मूर्तानि पञ्च। पृथिवी। आपः। तेजः। वायुः। मनः। (न्या० बो०) (वाक्य०)

**मूर्तामूर्तगुणत्वम्**[5]–[क] कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वम्। [ख] द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वम्। (दि०गु०)

**मूर्तिः**–१ व्यक्तिवदस्यार्थोनुसंधेयः। (गौ० वृ० २।१३२) २ शब्दार्थौ मूर्तिरिति काव्यज्ञा वदन्ति।

**मृदुत्वम्**–[क] अवयवसंयोगविशेषः। (त० दी०१) [ख] स्पर्शविशेषः। (सि० च०) यथा, शिरीषपङ्क्तेः कुरुकामिनीनां शरीरवल्ल्या सह मार्दवेन, इत्यादौ। (स्व०)

**मोक्षः**– निःश्रेयसवदस्यार्थोनुसंधेयः।

**मोहः**–१ मिथ्याप्रतिपत्तिलक्षणः। (वात्स्या० ४।१।३) यथा, शरीरादावात्मभ्रमः। (त० दी०) २ उपेक्षाविषयत्वमिति सांख्या आहुः। (सर्व० सांख्य०) ३ संसारप्रयोजकोविद्याविशेष इति वेदान्तिनः।

---

१ इदं च फलनिष्ठं मुख्यत्वमिति विज्ञेयम्।

२ इदं च विशेष्यतानिष्ठं मुख्यत्वमिति विज्ञेयम्।

३ मूर्तवृत्तिगुणाश्च, रूपादिचतुष्टयं परत्वादिपञ्चकं वेगः स्थितिस्थापकश्चेति। (भा०प०गु०)

४ तल्लक्षणं तु मूर्तत्वमेव। तच्च, [क] अपकृष्टपरिमाणवत्त्वम् (मु०१) [ख] परिच्छिन्नपरिमाणवत्त्वम्। (त० दी०) [ग] वेगवत्त्वम्। [घ] क्रियावत्त्वम्। (न्या० बो०) (वाक्य०)

५ मूर्तामूर्तगुणाश्च, संख्या परिमाणं पृथक्त्वं संयोगो विभागश्चेति। (भा० प० गु०)

## य.

**यत्**–[ क ] तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्माव-च्छिन्नः । ( गा० श० ) यथा, यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः । सोयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः, इत्यादौ यच्छब्दार्थो हरिः । ( स्व० )

[ ख ] तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थ इति शाब्दिका आहुः ।

**यथार्थबुद्धिः**–तद्वति तत्प्रकारकं ज्ञानम्[1] । यथा घटे 'अयं घटः' इति ज्ञानम् । ( स्व० )

**यथार्थवक्ता**–( आप्तः ) प्रकृतवाक्यार्थविषयकयथार्थ[2]शाब्दबोधविषयकतात्पर्यवान् । ( वाक्य० ४ ) यथा व्यासो गौतमश्च यथार्थवक्ता । ( स्व० )

**यथार्थानुभवः**–प्रमावदस्यार्थोनुसंधेयः । ( स्व० )

**यागः**–[ क ] देवतोद्देश्यकद्रव्यत्यागात्मकेच्छाविशेषः । ( गा० व्यु० ३ ) यथा यजेत स्वर्गकाम इत्यादौ यज्धात्वर्थः । ( स्व० )

[ख] दे[3]वतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छेति संप्रदायः । ( दि० गु० )

[ ग ] क्वचित्, हविःप्रक्षेपात्मको व्यापारः । यथा याजका यजन्तीत्यादौ धात्वर्थः । ( गा० व्यु० ३ )

**याचनम्**–१ स्वोद्देश्यकदानेच्छा । यथा, पौरवं गां याचत इत्यादौ याचत्यर्थः । २ व्यापारजन्यत्वप्रकारकेच्छा । यथा, याचमानः शिवं सुरानित्यादौ याञ्चा । ( गा० व्यु० २ )

**यावत्त्वम्**–१ अपेक्षाबुद्धिविशेषविषयत्वम् । ( त० प्र० २ ) यथा, यत्समाना-

---

१ इदं च लक्षणं स्मृतिसाधारणमपि भवतीति विज्ञेयम् ।

२ अत्र, याथार्थ्यं च तद्वति तत्प्रकारकत्वमेव ।

३ अत्र देवतोद्देश्यकत्वं च देवतासम्बन्धविशेष्यकत्वम् । शब्दमयी देवतेति पक्षे तु 'तस्या इदम्' इत्यारोपज्ञानविषयत्वमुद्देश्यत्वमिति बोध्यम् । ( दि० गु० )

धिकारणा यावन्तोभावा इत्यादौ यावत्त्वम्। (स्व०) २ व्यापकत्वम्। (गा० सिद्धा०) यथा यावन्तो[1] घटा रूपवन्त इत्यादौ। यथा वा यावन्तो[2] मनुष्या मरणशीला इत्यादौ। (स्व०)

**यावद्द्रव्यभावित्वम्**—स्वाश्रयनाशजन्यनाशप्रतियोगित्वम्। (दि० १।२) यथा घटादिवृत्तिरूपादेर्यावद्द्रव्यभावित्वम्। (स्व०)

**युक्तः**—(योगी) [क] योगाभ्यासवशात्सर्वदा सकलविषयकज्ञानवान्। (भा०प०) [ख] प्रथमप्रत्यासत्त्या निरन्तरमखिलपदार्थज्ञानवान्। (सि० च०)

**युक्तिः**—१ साधकबाधकप्रमाणोपन्यासः। (त०प्र०१) २ अनुमानमिति केचित्।

**युञ्जानः**—(योगी) [क] चिन्तासहकारेण सकलज्ञानवान्। (भा०प०) [ख] चिन्ताविशेषवशनाथद्वितीय[3]प्रत्यासत्त्या समयविशेषे ज्ञानवान्। (सि० च०)

**युतसिद्धिः**[4]—[क] द्वयोरन्यतरस्य वा पृथग्गतिमात्रम्, । युताश्रयाश्रयित्वं वा। (वै०उ० ७।२।९) यथा घटभूतलयोर्युतसिद्धिः। (स्व०) [ख] असंबन्धयोर्विद्यमानत्वम्, । पृथगाश्रयाश्रितत्वं वा। (वै०उ०७।२।१३) [ग] परस्परसंबन्धशून्ययोरवस्थानम्। (वै०वि०७।२।१३)

**युष्मद्**—त्वंशब्दवदस्यार्थोनुसंधेयः।

**योगः**—१ संबन्धः। (स्व०) २ अवयवशक्तिः। (त० दी० ४) (नील०) यथा पाचका[5]दिपदेषु। ३ अप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योग इति बौद्धा वदन्ति। ४ चित्तवृत्तिनिरोध[6] इति योगिनः। (सर्व० पात०)

---

१ अत्र च, घटत्वव्यापकरूपवन्त इत्यन्वयबोधो जायते।

२ अत्रापि, मनुष्यत्वव्यापकत्वं मरणशीलत्वे बुध्यत इति विज्ञेयम्।

३ अत्र, युक्तपदार्थघटकप्रथमप्रत्यासत्तिमपेक्ष्य द्वितीयप्रत्यासत्तिरित्यनुसंधेयम्।

४ इयं च, संयोगं प्रति प्रयोजिका। (वै०उ० ७।२।९)

५ अत्र च पाचकादिपदात्पचतीति व्युत्पत्त्या पाककर्ता बुध्यत इति बोध्यम्।

६ अत्रेदं बोध्यम्। [क] आत्मस्थे मनसि षडङ्गयोगेन इन्द्रियादिकं परित्यज्य मनो यदात्ममात्रे तिष्ठति तदा मनःकर्मणोनुत्पादः। तदा मनो निश्चलं भवति। तदवस्थायां शरीरावच्छे-

५ देवतानुसंधानमिति रामानुजीयाः । (सर्व० राम०) ६ कामुककामिनीसंमेलनमित्यालंकारिकाः ।

**योगक्षेमः**[1]—अनुभवमनुरुध्य वस्तुस्थितिसंगमनम् । यथा भूतले[2] न घट इत्यादौ घटांशे भूतलवृत्तित्वाभावः संगम्यत इति । (स्व०)

**योगजः**[3]—(संनिकर्षः) योगाभ्यासजनितो धर्मविशेषः । स चादृष्टविशेषः । स च युक्तयुञ्जानभेदतो द्विविधः । (भा० प०) (सि० च०)

**योगरूढम्**—(पदम्) [क] यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तत् । (मु० ४)

[ख] अवयवसमुदायोभयशक्तिकमेकसजातीयार्थप्रतिपादकम् । (सि० च०)

[ग] योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं पदम् । यथा पङ्कजादिपदम्[4] । (नील०)

**योग्यता**—१ [क] एकपदार्थेपरपदार्थप्रकृतसंसर्गवत्त्वम्[5] । (न्या० म० ४)

---

देन दुःखं न जायते । स आत्मना चाह्यव्यावृत्तमनसः संयोगो योग उच्यते । (वै०) (वै० वि० ५।२।१६) (वै० उ० ५।२।१६)

[ख] इन्द्रियाणि विषयेभ्यः प्रत्याहृत्येन्द्रियेभ्यो मनःप्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं योगः, इति । (नील०)

१ अत्र, योगस्याप्राप्तप्राप्तिः, क्षेमः सिद्धस्य रक्षणमिति व्युत्पत्तिरनुसंधेया । (राम०)

२ अत्र च, भूतले घट इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वावगाहित्वस्यानुभवसिद्धतया, भूतले न घट इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वाभावोवश्य*मभ्युपगन्तव्यः, इति ।

३ स चालौकिके योगिप्रत्यक्षे कारणम् ।

४ अत्र च पङ्काज्जायत इत्यवयवशक्त्या पङ्कजनिकर्तृत्वेन, रूढिशक्त्या च कमलत्वेन कमलं बोधयतीति पङ्कजपदं योगरूढमित्यवधेयम् ।

५ इयं योग्यता च शाब्दबोधप्रयोजिका, शब्दयोग्यतेति व्यवह्रियते ।

---

* इदमत्राकूतम् । भूतले न घट इति वाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य 'भूतले घटः' इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितया, नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति, तादृशसमभिव्याहारस्थले नञ्सत्वे तत्र धर्मिणि तदभावःप्रतीयत इति नियमोङ्गीकर्तव्यः । अयमेव 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति न्यायार्थः, इति (गा० व्यु० १)

इतरपदार्थसंसर्गेपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वम्, । बाधकप्रमाणाभावः, । बाधकप्रमाविरहः[1] । यथा, प्रमेयं वाच्यमित्यादौ । ( चि० ४ ) ( तर्का० ४ )

[ ख ] अन्वयप्रयोजकरूपवत्त्वम् । ( दीधि० प्रामा० )

[ ग ] अबाधितार्थकत्वम् । ( गा० अव० )

[ घ ] अर्थाबाधः । ( त० सं० ४ ) यथा, जलेन स्थलं सिञ्चतीत्यादौ ।

[ ङ ] अन्वयाविरोधिरूपविरह इत्यन्ये ।

[ च ] बाधनिश्चयाभावो योग्यतेति नव्याः । ( नील० )

२ [क] प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसमवहितत्वम्[2] । (मू०म०१)

[ ख ] यत्राधिकरणे यत्सत्त्वमापादकीकृत्य यदुपलम्भ आपादयितुं शक्यते तदधिकरणनिरूपितविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकप्रकारकोपलम्भाभावप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् ।

[ ग ] तर्कितप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वम्[3] । ( मु० )

३ [ क ] तदधिकरणावृत्तिविशेषणानवच्छिन्नतत्प्रतियोगिनिष्ठव्याप्तिप्रतियोगित्वम्[4] । ( मू० म० १ )

[ ख ] तत्प्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वम् । ( दि० १ )४ योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वम्[5] ।

---

१ सा चेतरपदार्थसंसर्गेपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः । ( चि० ४)

२ इयं योग्यता त्वनुपलब्धिनिष्ठा भट्टप्राभाकराभिमता चाभावप्रत्यक्षप्रयोजिका, प्रतियोग्युपलम्भाभावयोग्यतेति व्यवह्रियते ।

३ तदर्थश्च, प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य स अभावप्रत्यक्षे[0] हेतुः, इति । ( मु० )

४ इयं योग्यता च, तदधिकरणविषयकाभावप्रत्यक्षे हेतुभूतो यस्तदधिकरणकतदापादककाव्याप्तियोग्यतदुपलम्भस्य विषयतासंबन्धावच्छिन्नप्रतियोगिताकोभावः, तत्रत्या विज्ञेया । (दि० १)

५ इयं योग्यता च संसर्गाभावनिष्ठा संसर्गाभावप्रत्यक्षे प्रयोजिका च, प्रतियोगियोग्यतेति व्यवह्रियते ।

---

० अत्र; अत्र घटो नास्तीत्याद्याकारकं प्रत्यक्षमिति बोध्यम् ।

५ जात्यवच्छिन्नप्रतियोगिताकत्वजात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरत् । (दि० १।२) ६ [ क ] अनुमित्सानन्तरं[2] लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः[3] ।

[ ख ] अनुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेपि सिद्धौ सत्यां यावत्कालमध्येनुमितिर्जायते तावानेव कालः । ( दीधि० पक्ष० ) ७ साधकबाधकमानाभावः[4] । ( गा० बाध० )

**योग्यानुपलब्धिः**[5]—( अनुपलब्धिः ) [ क ] प्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भकयावत्सामग्रीविशिष्टप्रतियोग्युपलम्भाभावः । ( कु० ३ )

[ ख ] अभावप्रत्यक्ष[6]सामग्रीविशिष्टप्रतियोग्यनुपलब्धिः । ( त० प्र० १ )

**योनिजम्**—( शरीरम् ) शुक्रशोणितयोः परस्परमेलनजन्यम् । ( दि० १ ) ( सि० च० ) यथा मनुष्यशरीरं योनिजम् । ( स्व० )

**यौगपद्यम्**—१ एककालवृत्तित्वम् । ( गा० सत्प्र० ) २ एककालोत्पत्तिकत्वम् । यथा, अयौगपद्याज्ज्ञानानामित्यादौ यौगपद्यम् । ( स्व० )

**यौगिकम्**—( पदम् ) [ क ] यत्रावयवार्थ एव बुध्यते तत् । ( मु० ४ )

[ख] अवयवशक्तिमात्रेणार्थप्रतिपादकम् । यथा पाचका[7]दिपदम् । (नील०)

---

१ इयं योग्यता चान्योन्याभाववृत्तिरन्योन्याभावप्रत्यक्षे प्रयोजिका च, अधिकरणयोग्यतेति व्यवह्रियते ।

२ अनुमित्सोत्पत्त्यधिकरणक्षणमारभ्य क्रमेण पक्षविषयकलिङ्गज्ञानव्याप्तिस्मरणयोरुत्पत्तौ सत्यामुत्सर्गतो यावता कालेन परामर्शोत्पत्तिः, अनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणा यो वा तावन्मात्रक्षणावस्थायी स्थूलकालस्तत्समुदाय एव वेत्यर्थः । एवं च क्षणचतुष्टयं तदधिककालानवस्थायी*स्थूलसमयश्च योग्यतेति पर्यवसितम् । ( गा० पक्ष० )

३ इयं च योग्यता मिश्रमतानुसारिण्यनुमितिप्रयोजिका च, अनुमित्सायोग्यतेति व्यवह्रियत इति बोध्यम् ।

४ इयं योग्यता त्वनुमितौ प्रयोजिका, पक्षतात्मकसंशययोग्यतेत्युच्यते ।

५. अत्र, अभावप्रत्यक्षे चेन्द्रियं न करणं, किं तु योग्यानुपलब्धिरेवेति भट्टा आहुः । ( दि० १ )

६ अत्रेदं बोध्यम् । यस्य सत्त्वं यत्रानुपलब्धिविरोधि तस्याभावस्तत्र गृह्यते, इति । ( चि० ४ )

७ अत्र, पचतीति व्युत्पत्त्या पाककर्ता बोध्यत इति विज्ञेयम् ।

---

* तदनुगमश्च, स्वप्रागभावानधिकरणत्वस्वनाशाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वोभयसंबन्धेन सिसाधयिषाविशिष्टकालत्वम् । ( गा० पक्ष० )

**यौगिकरूढम्**[1]–( पदम् ) [ क ] यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तत् । ( मु० ४ )

[ ख ] योगेन रूढ्या च परस्परासहकारेणार्थप्रतिपादकम् । यथा, उद्भिदादिपदं[2] यौगिकरूढम् । ( नील० )

## र.

**रक्षणम्**–त्राणवदस्यार्थोनुसंधेयः ।

**रसः**[3]–( गुणः ) १ [ क ] रसनग्रहणो[4] योर्थः सः । ( वै० उ० ३।१।१ )

[ ख ] रसत्वजातिमान् । ( वै० उ० ७।१।६ ) स च षड्विधः । मधुरः । अम्लः । लवणः । कटुः । कषायः । तिक्तः, इति । स च रसः पृथिवीजलवृत्तिः । तत्र पृथिव्यां मधुरादिषट्प्रकारः पाकजोनित्यः । अप्सु मधुरोपाकजो नित्यानित्यात्मा । नित्यगतो नित्यः । अनित्यगतोनित्यः । ( त० भा० ) ( त० सं० ) २ शृङ्गारादिभेदेन नवविधो रस इति रसिका वदन्ति ।

**रसनम्**[5]–( इन्द्रियम् ) [ क ] अविन्द्रियम् ।

[ ख ] रसग्राहकं महदिन्द्रियम् । ( न्या० म० ) ( त० भा० ) तच्च जिह्वाग्रवृत्ति । ( त० सं० )

**रागः**–( दोषः ) आसक्तिलक्षणः । यथा तृष्णा । ( वात्स्या० ४।१।३ )

**रात्रिः**–संपूर्णादित्यमण्डलदर्शनयोग्यो यः कालस्तद्भिन्नःकालः । ( वै० ) (?)

---

१ अत्र, यौगिकं च तद्रूढं चेति व्युत्पत्तिरनुसंधेया । ( नील० )

२ अत्र, उद्भित्पदं योगेन तरुगुल्मादेः, रूढ्या तु यागविशेषस्य वाचकम् । ( नील० ) ( मु० ४ )

३ स च बाह्यैकेन्द्रियग्राह्यः । ( वै० उ० ३।१।१ ) लक्षणं तु रसत्वमेव । तच्च रसनग्राह्यगुणविभाजकधर्मवत्त्वम् । ( वाक्य० ) ( वै० उ० ७।१।६ )

४ रसनग्राह्यो गुण इत्यर्थः । ( त० भा० ) ( त० सं० )

५ रसनस्य जलीयत्वेनुमानं प्रमाणम् । तद्यथा, रसनेन्द्रियं जलीयं रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालावत्, इति । ( सि० च० ) ( मु० )

**रुचिः**–प्रीतिजनकता । यथा नारदाय रोचते कलह इत्यादौ रुच्यर्थः । ( गा० व्यु० ४ )

**रूढम्**–( पदम् ) [ क ] यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थो बुध्यते तत् । ( मु० ४ )

[ख] रूढिशक्तिमात्रेणार्थप्रतिपादकम् । यथा गोपदघटादिपदम् । (नील०)

**रूढिः**–( शक्तिः ) समुदायशक्तिः । ( त० दी० ) यथा, मण्डप[1] इत्यादौ रूढिः । ( स्व० )

**रूढिलक्षणा**–निरूढलक्षणावदस्यार्थोनुसंधेयः ।

**रूपम्**[2]–( गुणः ) [ क ] चक्षुर्मात्रग्रहणो योर्थस्तत् । ( वै० उ० ३।१।१ )

[ ख ] चक्षुर्मात्रग्राह्यो[3] विशेषगुणः । तच्च सप्तविधम् । शुक्लः । नीलः । पीतः । रक्तः । हरितः । कपिशः । चित्रः, इति । तच्च पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधं पाकजमनित्यम् । जले तेजसि च शुक्लमेव रूपं तिष्ठति । तच्चापाकजं, नित्यमनित्यं, भास्वराभास्वरभेदेन द्विविधं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । शुक्लं भास्वरं तेजसि । अभास्वरं शुक्लं जले । ( त० भा० ) ( त० सं० )

**रूपम्**–१ तत्तद्वृत्तिर्विशेषधर्मः । यथा, अनुमितिविरोधितावच्छेदकं रूपमित्यादौ । ( स्व० ) २ कार्यमिति मायावादिनः । ३ शुक्रशोणितमिति बौद्धा आहुः ।

---

१ अत्र, मकारादिवर्णसमुदायशक्त्या जनाश्रयो बोध्यते, इति विज्ञेयम् ।

२ तच्च बाह्यैकेन्द्रियग्राह्यम् । ( वै० उ० ३।१।१ ) द्रव्याद्युपलम्भकारणं च । ( मु० गु० ) तल्लक्षणं तु रूपत्वमेव । तच्च [ क ] चक्षुर्मात्रबहिरिन्द्रियग्राह्यजातिमत्त्वम् । ( वै० उ० ७।१।६ ) [ ख ] नीलसमवेतगुणत्वापरजातिः । ( सर्व० औलु० )

३ तदर्थश्च [ क ] चक्षुरितरेन्द्रियजन्यग्रहीयलौकिकविषयताशून्यत्वे सति चक्षुर्जन्यग्रहीयलौकिकविषयताशालित्वे सति गुणत्ववत् । [ ख ] त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत् । (वाक्य०) ( वै० उ० ७।१।६ )

रूपहानिः[1]–[क] रूपस्य निःसामान्यत्वगर्भस्य विशेषलक्षणस्य[2] व्याघातः[3]। (दि० १) (त० प्र०) यथा विशेषत्वस्य जातित्वस्वीकारे रूपहानिः। (स्व०) [ख] स्वतो व्यावर्तकत्वस्य[2] हानिरित्यपि[4] केचिद्वदन्ति ।

रोधनम्–देशान्तरसंचार[5]विरोधिव्यापारः। यथा गां व्रजं रुणद्धीत्यादौ धात्वर्थः। (गा० व्यु० २)

## ल.

ल[6]:–आख्यातवदस्यार्थोनुसंधेयः। स च लकारो दशविधः। लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ्, इति ।

लक्षणम्[7]–१ [क] उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः। (वात्स्या० १।१।२) [ख] दूषणत्रय[8]रहितो धर्मः[9]। (त० भा०) (त० प्र०) (त० दी०) यथा गोर्लक्षणं सास्नादिमत्त्वम्। २ व्या[10]वर्तकम्। यथा जटाभिस्तापस इत्यादौ तापसादेर्जटादिकं लक्षणम्। (गा० व्यु० ३)

लक्षणा[11]–(वृत्तिः) [क] शक्यसंबन्धः। (भा० प०) (त० दी० ४) (न्या० बो०) (वाक्य०) यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य प्रवाहसमीपे तीरे लक्षणा। (मु०) (वाक्य० ४)

---

१ सा च, विशेषस्य जातिमत्त्वे बाधिकेति विज्ञेयम्। (दि० १)

२ विशेषलक्षणं, स्वतो व्यावर्तकत्वं च 'विशेषः' इत्यस्य टिप्पणे संवादयिष्यते ।

3 अत्रायमाशयः। विशेषे जात्यङ्गीकारे सामान्यशून्यत्वघटितलक्षणासंभव इति ।

४ अत्र, विशेषस्य विशेषत्वात्मकजातिमत्त्वस्वीकारे स्वतो व्यावर्तकत्वं न संभवतीत्याशयः।

५ संचारविरोधित्वं च संचारानुत्पादप्रयोजकत्वम्। (गा० व्यु० २)

६ स च शाब्दिकमतप्रसिद्धः प्रत्ययः। संक्षेपतस्तदर्थश्च, लड्वर्तमाने लेड्वेदे भूते लङ्लुङ्लिटस्तथा। विध्याशिषोश्च लिङ्लोटौ लृङ्लृटौ लुड्भविष्यति, इति ॥

७ लक्षणस्य प्रयोजनं च व्यावृत्तिर्व्यवहारोवेति विज्ञेयम्। (त० दी०) (सि० च०)

८ दूषणत्रयं च, अव्याप्तिः। अतिव्याप्तिः। असंभवः। (त० दी० १)

९ स एवासाधारणधर्म इत्युच्यते। (त० भा०) (त० प्र०) (त० दी०)

१० अयं च 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति पाणिनिसूत्रघटकलक्षणशब्दार्थः।

११ अन्वयानुपपत्तिर्लक्षणाबीजमिति प्राञ्चः। तात्पर्यानुपपत्तिरेव सर्वत्र लक्षणाबीजमिति नव्याः। (भा० प०) (मु०) सर्वत्र शक्यैवोपपत्तौ लक्षणा नास्त्येवेति शाब्दिका वदन्ति ।

[ ख ] क्वचित्, प्रतिपाद्यसंबन्धोपि लक्षणा । यथा छत्रिणो[1] यान्तीत्यादावजहल्लक्षणा ।

[ ग ] शक्यतावच्छेदकारोपो[2] लक्षणेति शाब्दिकाः[3] । प्रथमतो लक्षणा द्विविधा । निरूढलक्षणा । स्वारसिकलक्षणा, इति । (स्व०) प्रकारान्तरेण सा लक्षणा चतुर्विधा । जहत्स्वार्था । अजहत्स्वार्था । जहदजहत्स्वार्था । लक्षितलक्षणा चेति । ( मु० ४ ) प्रकारान्तरेणापि सा च त्रिविधा । जहल्लक्षणा । अजहल्लक्षणा । जहदजहल्लक्षणा । (त० दी० ४) प्रकारान्तरेणापि च सा द्विधा । गौणी[4] । शुद्धा । तत्र शुद्धा द्विविधा । जहल्लक्षणा । अजहल्लक्षणा । ( न्या० म० ४ ) ( न्या० बो० )

**लक्षितलक्षणा**–( लक्षणा ) । यत्र तु शक्यार्थस्य स्वाश्रयपदवाच्यत्वरूपा लक्षणा सा । यथा द्विरेफमानयेत्यादौ[6] । ( मु० ४ )

**लक्ष्यत्वम्**–लक्षणानिर्वाहकतात्पर्यविषयत्वम् । ( कृष्ण० ) यथा गङ्गायां घोष इत्यादौ तीरस्य लक्ष्यत्वम् । ( स्व० )

**लघुत्वम्**–[ क ] गुरुत्वाभावः । ( त० दी० १ ) यथा, विन्ध्ये विन्ध्यसमानाः करिणो बत दर्पणे लघव इत्यादौ लघुत्वम् । ( स्व० )

[ ख ] स्पर्शविशेष इति केचित् । ( सि० च० ) लघुत्वं त्रिविधम् । शरीरकृतम् । उपस्थितिकृतम् । संबन्धकृतम् । ( दि० १ ) (सि०च०)

---

१ अत्र छत्रिन्नित्यस्य मतुबर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्त्या शक्यसंबन्धरूपा लक्षणा न संभवति । ( नील० )

२ आरोपनिमित्तानि च गौतमेनोक्तानि, सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्यानि, इति ।

३ अत्र च विलक्षणशक्त्यैवोपपत्तौ लक्षणारूपपदार्थान्तरकल्पनमनुचितमिति केचिच्छाब्दिका वदन्ति ।

४ अत्र सादृश्यात्मकः शक्यसंबन्धः । यथा गौर्वाहीक इति । ( न्या० म० ) ( न्या० बो० ) ( त० दी० ) व्यञ्जनापि लक्षणान्तर्भूता, अर्थशक्तिमूला च । ( त० दी० )

५ द्विरेफमानयेत्यादौ स्वपदार्थो रेफद्वयम् ।

६ अत्र, द्विरेफादिपदे रेफद्वयसंबन्धो भ्रमरपदे ज्ञायते । भ्रमरपदस्य च संबन्धो भ्रमरे ज्ञायत इति विज्ञेयम् । ( मु० ४ )

**लङ्**–(लः) [क] अनद्यतनत्वमतीतत्वं च लङर्थः (तर्का० ४) सि० च०)

[ख] शब्दप्रयोगाधिकरणदिनाद्यक्षणवृत्तिध्वंसप्रतियोगित्वम्। यथा, अपचदित्यादौ। (गा० व्यु० ल०)

[ग] शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनध्वंसप्रतियोगित्वमिति कश्चिद्वक्ति।

**लट्**–(लः) वर्तमानकालो लडर्थः। स च, [क] तत्तच्छब्दप्रयोगाधिकरणकालः। यथा पचतीत्यादौ। (गा० व्यु० ल०) [ख] प्रारब्धापरिसमाप्तो भूतभविष्यद्भिन्नो वा काल इति शाब्दिका वदन्ति।

**लाघवज्ञानसहकृता**–(अनुमितिः) सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शाद्विशेषधर्मे लाघवज्ञानसहकृताज्जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः। यथा पर्वतो वन्हिमान्धूमादित्यादौ पर्वतो महानसीयवन्हिमानित्यनुमितिः[1]। (स्व०)

**लाघवम्**–लघुत्ववदस्यार्थोनुसंधेयः।

**लिङ्**[2]–(लः) विधिर्लिङर्थः। विधिश्चात्र [क] प्रवर्तकज्ञानविषयो धर्मः। स च धर्मो न्यायनये कृतिसाध्यत्वं बलवदनिष्टाजनकत्वसहितमिष्टसाधनत्वं[3] च। यथा, ओदनकामः पचेत, स्वर्गकामो यजेतेत्यादावोदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाकयागादिक्रियायां प्रतीयते। (कु० ५) (तर्का०) (गा० व्यु० ल०) (त० दी०)

[ख] विधिप्रेरणाप्रवर्तनादिशब्दाभिधेयः प्रवृत्त्यनुकूलव्यापार इति शाब्दिका आहुः।

---

१ अत्रेदं बोध्यम्। वन्हेर्महानसीयत्वे लाघवमिति लाघवज्ञानसत्त्वे वन्हिव्याप्यधूमवान्पर्वत इति परामर्शात् 'पर्वतो महानसीयवन्हिमान्' इत्यनुमितिर्जायत इति सर्वैरनुभूयते, इति।

२ अत्रेदं बोध्यम्। द्वेषविषयतावच्छेदकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनानुगते एकैकविधिप्रत्ययस्य शक्तिः, इति। (गा० व्यु० ल०)

3 इष्टत्वं चात्र समभिव्याहृतपदोपस्थितकामनाविषयत्वम्। (गा० व्यु० ल०)

[ग] कार्यत्वं विध्यर्थः । कृतिसाध्यताज्ञानमेव[1] प्रवर्तकम् । अहरहः संध्यामुपासीतेत्यादौ नित्यतया निष्फले संध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्टसाधनत्वं लिङ्र्थ इति प्राभाकरप्रभृतयो मीमांसका आहुः । नैयायिकास्तु, नित्यकर्मस्थलेपि नरकात्यन्ताभावस्यैव प्रायश्चित्तसंध्यावन्दनादिफलत्वसंभवादिष्टसाधनत्वमेव लिङ्र्थ इति प्राहुः । चैत्यं न वन्देतेति वाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमित्यपरे वदन्ति । ( गा० व्यु० ल० ) ( सि० च० ) लिङ् द्विधा । विधिलिङ् । आशीर्लिङ् । आद्यः, कृतिसाध्यत्वे सति बलवदनिष्टाजनकेष्टसाधनत्वम् । द्वितीयस्तु वक्त्रिच्छाविषयत्वम् । ( सि० च० ) (तर्का०)

**लिङ्गत्वम्**—व्याप्तिः । ( गा० अव० )

**लिङ्गपरामर्शः**[2]—परामर्शवदस्यार्थोनुसंधेयः ।

**लिङ्गम्**[3]—१ ( हेतुः ) व्याप्तिबलेनार्थगमकम् । ( त० भा० २ ) तच्च व्याप्यम् । ( गौ० वृ० ३।११३ ) यथा पर्वतो वन्हिमान्धूमादित्यादौ धूमो लिङ्गम् । ( स्व० ) २ लक्षणम् । ( गौ० वृ० १।१।१६ ) यथा, युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । ( गौ० १।१।१६ ) यथा वा कपिध्वजादर्जुनादेर्लक्षणम् । ( गौ० वृ० ३।११३ ) ३ सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयत इति मीमांसकाः ( लौ० भा० ) तत्र व्याप्यात्मकं

---

१ इदमत्राकूतम् । इष्टसाधनतालिङ्गककृतिसाध्यतानुमितिः, इष्टसाधनताज्ञानकालीनकृतिसाध्यताज्ञानं वा काम्यस्थले प्रवर्तकम् । नित्यस्थले च, अहमिदानींतनकृतिसाध्यसंध्यावन्दनको ब्राह्मणत्वे सति विहितसंध्याकालीनशौचादिमत्त्वादिति शौचादिमत्त्वप्रतिसंधानजन्यकृतिसाध्यताज्ञानं प्रवर्तकम्, इति । ( सि० च० )

२ इदमेव तृतीयं लिङ्गज्ञानम् । तथा हि । लिङ्गज्ञानं त्रिविधम् । तद्यथा पर्वते धूमेन वन्हिसाधने, महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम् । पक्षे यद्धूमज्ञानं तद्द्वितीयम् । अत्रैव वन्हिव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम् । इदमेव लिङ्गपरामर्श इत्युच्यते । ( सि० च० )

3 अत्र व्युत्पत्तिः, व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गम्, इति । ( सि० च० )

लिङ्गं त्रिविधम् । अन्वयव्यतिरेकि । केवलान्वयि । केवलव्यतिरेकि चेति । ( त० सं० २ ) ( गौ० वृ० )

**लिङ्गि**—साध्यम् । ( दीधि० २ ) यथा, लिङ्गाविषयकलिङ्गिविषयकेत्यादौ ।

**लिट्**—( लः ) अतीतत्वमनद्यतनत्वं परोक्षत्वं च लिडर्थः । (गा० व्यु० ल०) ( तर्का० ) यथा, जुगोप गोरूपधरामिवोर्वीमित्यादौ लिडर्थः । (स्व०)

**लुङ्**—( लः ) अतीतत्वं लुङर्थः । यथा, अपाक्षीदित्यादौ ( गा० व्यु० ल० )

**लुट्**—( लः ) [ क ] अनद्यतनत्वं लुर्थः । ( तर्का० ४ )

[ ख ] अनद्यतनभविष्यत्वम्[1] । यथा पक्तेत्यादौ तिङ्प्रत्ययार्थः ।

[ ग ] भविष्यत्त्वमेव लुडर्थ इति केचिदाहुः । ( गा० व्यु० ल० )

**लृङ्**—( लः ) १ व्याप्यक्रियया व्यापकक्रियाया आपादनं लृङर्थः । (तर्का०) यथा, घटश्चेदभविष्यद्भूतलमिवाद्रक्ष्यतेति । ( स्व० ) २ [ क ] भूतत्वं भविष्यत्त्वं च लृङर्थः । ( तर्का० ) ( सि० च० ) यथा, परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् । अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् , ॥ इत्यादौ । यथा च, सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यदिति ।

[ ख ] क्रियाया अनिष्पत्तौ गम्यमानायां भूते भाविनि हेतुमद्भावे सति लृङिति शाब्दिका वदन्ति ।

**लृट्**—(लः) भविष्यत्त्वं लृडर्थः । यथा पक्ष्यतीत्यादौ । (गा०व्यु०ल०) (तर्का०)

**लोकः**—१ वेदतदुपजीविप्रमाणातिरिक्तप्रमाणम् । ( मू० म०१ ) यथा, आप्तवाक्यं लोकः । ( स्व० ) २ स्वर्गादिर्मनुष्यो वा लोक इति पौराणिकाः काव्यज्ञाश्च वदन्ति ।

**लोट्**—( लः ) लिङ्प्रत्ययवदस्यार्थोऽनुसंधेयः । ( ग० व्यु० ल० ) ( सि० च० ) यथा, शुभं भवतु, पचतु भवानित्यादौ । ( स्व० )

---

१ अनद्यतनभविष्यत्त्वं च, [ क ] शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । [ ख ] शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा । (गा०व्यु०ल०)

**लोभः**—धर्मविरोधेन परद्रव्येच्छा । ( गौ० वृ० ४।३ ) यथा, लोभश्चेदगुणेन किम्? इत्यादौ । ( स्व० )

**लौकिकः**—[ क ] लोकसाम्यमनतीतो नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्तः । ( वात्स्या० १।१।२५ )

[ ख ] अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः । (गौ० वृ० १।२५) यथा कश्चन ग्राम्यो जनो लौकिकः । ( स्व० )

**लौकिकत्वम्**—१ विषयता[1]विशेषः । यथा ह्रदो वन्हिमानिति चाक्षुषप्रत्यक्षे प्रयोजकस्य संनिकर्षस्य लौकिकत्वम् । २ मानसेतरलौकिकसाक्षात्कार-विषयत्वम्[2] । ( मू० म० १ ) यथा, स्वर्गादितो भिन्नस्य कार्यजातस्य लौकिकत्वम् । ( स्व० ) ३ विधिमन्तरा रागादिप्राप्तत्वम् । ( नील० ) यथा भोजनादेर्लौकिकत्वम् । ४ वैदिकाभिन्नत्वम्[3] । ( वाक्यं० ) यथा घटमानयेत्यादिवाक्यस्य लौकिकत्वम् । ( स्व० )

## व०

**वचनम्**—ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा शिष्यं धर्मं ब्रूत इत्यादौ ब्रूञो-र्थः । ( गा० व्यु० २ )

**वर्ण्यसमः**—(जातिः) [ क ] ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यस्तावेतौ साध्य-दृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः । ( वात्स्या० ५।१।४ )

[ ख ] दृष्टान्ते वर्ण्यत्वस्या[4]पादनम् । ( गौ० वृ० ५।४ )

[ ग ] वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनम् । यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ क्रियाजनकनोदनाख्य-संयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वम् । आत्मनस्तु क्रियावत्त्वे तज्जनकनो-दनाख्यसंयोगवत्त्वमपि स्यादिति । ( नील० )

---

१ साक्षात्कारत्वव्यञ्जकविषयताविशेष इत्यर्थः । ( गा० सत्प्र० )

२ इदं च फलादिनिष्ठं लौकिकत्वमिति बोध्यम् ।

३ इदं च वाक्यादिनिष्ठं लौकिकत्वमिति बोध्यम् ।

४ वर्ण्यत्वं वर्णनीयत्वम् । तच्च संदिग्धसाध्यकत्वादि । ( गौ० वृ० ५।४ )

**वर्तमानः**—१ [ क ] येन हि वस्तुना यः कालोवच्छिद्यते स तस्य वर्तमानः । ( वै० उ० २।२।८ )

[ ख ] तत्तच्छब्दप्रयोगाधिकरणकालः । ( गा० व्यु० ल० ) (वाक्य०) यथा पचतीत्यत्र लडर्थः । ( स्व० ) २ शब्दप्रयोगाधिकरणकालवृत्तिः । यथेदानीं घटोस्तीत्यादौ घटो वर्तमानः । ( नील० )

**वस्तु**—भावत्वे सति संकेतविषयः । यथा घटपटादि सर्वं जगत् । तद्द्विविधम् । बाह्यम् । अबाह्यम् । तत्रात्मा तद्योग्यगुणास्तदभावस्तद्वृत्तिजातिरेतान्यबाह्यवस्तूनि, मनसैव वेद्यानि च । एतदन्यानि तु बाह्यवस्तूनि । ( स्व० )

**वहनम्**—नयनवदस्यार्थोनुसंधेयः । ( गा० व्यु० २ )

**वाक्छलम्**—( छलम् ) [ क ] अविशेषाभिहितेर्थे वक्तुरभिप्रायादर्थान्तरकल्पना । ( गौ० १।२।५३) नवकम्बलोयं माणवक इति प्रयोगः । अत्र नवः कम्बलोस्येति वक्तुरभिप्रायः । विग्रहे तु विशेषो न समासे । तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं 'नव कम्बला अस्येति तावदभिहितं भवता' इति कल्पयति, कल्पयित्वा चासंभवेन प्रतिषेधति 'एकोस्य कम्बलः, कुतो नव कम्बलाः' इति । तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति । ( वात्स्या० १।२।५३ )

[ ख ] शक्त्यैकार्थशब्दबोधतात्पर्यकशब्दस्य शक्त्यार्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम् । यथा, नेपालादागतोयं नवकम्बलत्वादित्युक्ते कुतोस्य नवसंख्याकाः कम्बलाः? इति । एवं, गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गम्, श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीत्यभिधानमित्यादिकमूह्यम् । ( गौ० वृ० १।५२ )

**वाक्यम्**[२]—[ क ] आकाङ्क्षायोग्यतासंनिधिमतां पदानां समूहः । (त० भा० ४)

[ ख ] पदसमूहः । ( त० सं० ) यथा गामानयेत्यादि ।

---

१ विस्तरस्तु ( गा० व्यु० ल० ) तत्र द्रष्टव्यः ।

२ तल्लक्षणं च वाक्यत्वमेव । तच्च विशिष्टार्थपरशब्दत्वम् । ( चि० ४ )

[ ग ] सुप्तिङन्तचयो वाक्यमिति शाब्दिकादयो वदन्ति । समभिव्याहारो वाक्यमिति मीमांसकाः । वाक्यं द्विविधम् । वैदिकम्[1] । लौकिकम् । वैदिकमीश्वरोक्तत्वात्[2]सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं[3] प्रमाणम् । अन्यदप्रमाणम् । ( त० सं० )

**वाक्यार्थज्ञानम्**[4]–(शाब्दबोधः) एकपदार्थेपरपदार्थविषयकं ज्ञानम् । (वाक्य०) यथा घटमानयेत्यादावानयनरूपक्रियायां द्वितीयान्तार्थविषयकं ज्ञानम् ।

**वाचकम्**–[ क ] ईश्वरसंकेतेनार्थबोधकं पदम् । यथा गोत्वादिविशिष्टबोधकं गवादिपदम् । ( गा० श० )

[ ख ] शक्त्यार्थबोधकं पदम् । ( स्व० )

**वाचनिकः**[5]–( नमस्कारः ) उत्कृष्टत्वादिप्रकारकबोधजनकशब्दः । यथा, वन्दे गोविन्दमानन्दज्ञानदेहं पतिं श्रियः, इति । ( स्व० )

**वाचालत्वम्**–अनुपयुक्तबहुभाषणशीलत्वम् । ( स्व० )

**वाच्यः**–[ क ] वाचकबोध्योऽर्थः[6] । यथा गवादिर्गोपदार्थः । ( गा० श० )

[ ख ] यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यमिति मीमांसकाः ( लौ० भा० )

**वादः**[7]–(कथा) [क] प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । (गौ० १।२।४२) एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावादस्त्यात्मा नास्त्यात्मेति । नानाधिकरणौ

---

१ वेदघटकं वाक्यमित्यर्थः । ( वाक्य० )

२ तस्येश्वरोक्तत्वे प्रमाणमनुमानम् । तच्च, वेदः पौरुषेयो वाक्यत्वाद्भारतादिवदिति । ( सि० च० )

३ यद्धर्मबुद्ध्योक्तं तदेव प्रमाणमित्यर्थः । तेन बृहस्पतिप्रणीतनास्तिकसूत्रव्युदासः । ( सि० च० )

४ अत्र वाक्यार्थस्तु, पदार्थानां मिथोन्वयरूप उद्देश्यविधेयसंबन्ध इति शाब्दिका वदन्ति ।

५ लक्षणं च वाचनिकनमस्कारत्वम् । तच्च [ १ ] नत्वमत्वादिव्याप्या नाना जातयः । [ २ ] शाब्दबोधवृत्तिशाब्दत्वव्याप्यजातिविशेष इति नव्याः । ( मू० म० १ )

६ स एव मुख्यार्थ इत्युच्यते । ( गा० श० )

७ स च निग्रहाणामभिकरणम् । ( त० भा० )

विरुद्धौ न पक्षप्रतिपक्षौ। यथा नित्य आत्मानित्या बुद्धिरिति। परिग्रहोभ्युपगमव्यवस्था। सोयं पक्षप्रतिपक्षपरिग्रहो वादः। तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन्क्रियत इति। साधनं स्थापना। उपालम्भः प्रतिषेधः। (वात्स्या० १।२।४२)

[ ख ] प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सति पक्षप्रतिपक्षसाधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः। ( गौ० वृ० १।४१ )

[ ग ] नानाप्रवक्तृकः प्रत्यधिकरणसाधनोन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः। ( वात्स्या० १।१।१ )

[ घ ] तत्त्वनिर्णयफलः कथाविशेषः। ( सर्व० अक्ष० )

[ ङ ] तत्त्वबुभुत्सोः कथा। ( त० भा० )

**वादनम्**—अभिघाताख्यसंयोगावच्छिन्नक्रिया। ( दि० ४ ) यथा भेरीं वादयतीत्यादौ णिजन्तवद्धात्वर्थः। ( स्व० )

**वादी**—प्रकृतसाध्यसाधनाय न्यायप्रयोगकर्ता। यथा पर्वते वन्हिसाधने विपरीतोद्भावकस्य प्रतिवादिनो निवृत्त्यर्थं वादी प्रतिज्ञादिघटितपञ्चावयवोपेतं न्यायवाक्यं प्रयुङ्क्ते इति। ( स्व० )

**वायवी**—( दिक् ) सुमेरुसंनिहितोदयगिरिव्यवहिता च दिक्। ( वै० वि० २।२।१० ) यथा झळकीग्रामतो वायव्यां मुंबापुरी। ( स्व० )

**वायुः**—( द्रव्यम् ) रूपरहितः स्पर्शवान्। स द्विविधः। नित्यः। अनित्यः। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। अनित्यस्त्रिविधः। शरीरम्।

---

१ लक्षणं च [क] स्पर्शेतरविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वम्। ( वै० उ० २।१।४ ) [ ख ] रूपाभावे सति स्पर्शवत्त्वम्। ( वाक्य० ) [ ग ] पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्। ( दि० १ ) [ घ ] त्वगिन्द्रियसमवेतद्रव्यत्वसाक्षाद्व्याप्यजाति*मत्त्वम्। ( सर्व० औलु० )

---

* इयमेव वायुत्वरूपा जातिरिति बोध्यम्। ( सर्व० औलु० )

इन्द्रियम् । विषयः । शरीरं[1] वायुलोके प्रसिद्धम् । इन्द्रियं स्पर्शग्राहकं त्वक्, सर्वशरीरवृत्ति । विषयो[2] वृक्षादिकम्पनहेतुः । ( त० सं० ) प्राणस्तु विषयो वायुः । स चैकोपि हृदादिस्थान[3]रूपोपाधिभेदात्पञ्च संज्ञा लभते । यथा प्राणोपानो व्यान उदानः समानः, इति । ( दि० १।२ ) किं च । मुखनिर्गमादिक्रिया[4]भेदेनापि पञ्च संज्ञा लभते । यथा नागः कूर्मः कृकलो देवदत्तो धनंजयः, इति । ( सि० च० ) वायौ नव गुणास्तिष्ठन्ति । स्पर्शा[5]दयोष्टौ वेगाख्यसंस्कारश्च । ( भा० प० १ ) ( त० भा० ) प्राञ्चश्च[6], वायुर्न प्रत्यक्षः, किंतु स्पर्शादिनानुमेय इत्याहुः । नव्यास्तु[7], वायुः प्रत्यक्ष इति वदन्ति । ( सि० च० ) ( त० प्र० )

**वारणम्**–[ क ] कस्याश्चित्क्रिया[8]याः प्रतिषेधः । स च प्रतिषेधः कर्तृत्वाभावानुकूलव्यापारः । यथा यवेभ्यो गां वारयति, कूपादन्धं वारयतीत्यादौ वारणार्थः । ( गा० व्यु० ५ )

[ ख ] प्रवृत्तिविघात[9] इति शाब्दिका वदन्ति ।

---

१ तच्च शरीरं पिशाचादीनां, अयोनिजं च । ( मु० १ )

२ विषयो वायुश्च, प्राणादिर्महावायुपर्यन्त इति ज्ञेयम् । ( भा० प० १ )

३ तदुक्तम् । हृदि प्राणो गुदेपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः, इति ॥

४ तदुक्तम् । उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं चापि सर्वव्यापी धनंजयः,* इति ॥

५ स्पर्शस्त्वत्रापाकजोनुष्णाशीतस्पर्शोभिप्रेतः । ( मु० )

६ तन्मते च, विषयतासंबन्धेन बहिर्द्रव्यप्रत्यक्षं प्रति समवायेन महत्त्वविशिष्टोद्भूतरूपमुद्भूतस्पर्शश्च कारणमिति बोध्यम् । ( सि० च० ) ( त० प्र० )

७ एतन्मते तु, [ क ] बहिर्द्रव्यप्रत्यक्षं प्रति महत्त्वविशिष्टविभुव्यावृत्तगुणः कारणम् । ( सि० च० ) [ ख ] आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकम् । ( मु० )

८ क्रिया चात्र भक्षणगमनादिरूपा ग्राह्या । ( गा० व्यु० ५ )

९ संयोगानुकूलव्यापाराभावानुकूलव्यापार इत्यर्थः ।

---

* पोषणस्य हेतुर्धनंजयः, इति पाठोस्ति । ( सि० च० )

**वासना**—१ मिथ्याज्ञानजन्यो 'गौरोऽहम्' इत्यादिमानसज्ञानजनको दोषविशेषः । यथा, आत्मा देहाद्यभिन्न इति । (गा० सामा०) २ एकसंतानवर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिरिति विज्ञानवादिनो बौद्धा वदन्ति । (सर्व० बौद्ध०)

**वि**—(उपसर्गः) विरोधः । (गौ० वृ० १।१।२३) यथा विमर्शः संशय इत्यादौ (स्व०) । यथा वा, वैधर्म्यमित्यादौ विरुद्धो धर्मः, इति । (मु० १)

**विकल्पः**—१ प्रकारता । यथा सविकल्पकं ज्ञानमित्यादौ । (स्व०) २ वैचित्र्यम् । तच्च, क्वचित्सत्त्वम् । क्वचिदसत्त्वम् । (गौ० वृ० ५।४) यथा, साध्यदृष्टान्तयोर्धर्मविकल्पादित्यादौ । (गौ० ५।४)

**विकल्पसमः**—(जातिः) [क] साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं प्रसजतो विकल्पसमः । क्रियाहेतुगुणयुक्तं किंचिद्गुरु । यथा लोष्टः । किंचिल्लघु । यथा वायुः । एवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत्स्याद्यथा लोष्टः । किंचिदक्रियं यथात्मा । विशेषो वा वाच्य इति । (वात्स्या० ५।१।४)

[ख] कस्यचिद्धर्मस्य क्वचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात्प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनम् । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद्गुरुत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्तत्वव्यभिचारदर्शनाद्धर्मत्वाविशेषात्कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति । (गौ० वृ० ५।४)

[ग] दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम् । (नील०)

**विकारः**—[क] अयं विकारधर्मो द्रव्यसामान्ये । यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते, व्यूहान्तरं चोपजायते तं विकारमाचक्ष्महे । (वात्स्या० २।२।४६)

[ख] स्वरूपपरित्यागेन रूपान्तरापत्तिः । (गौ० वृ० २।१।१८)

---

१ अत्र शिष्टमुदाहरणादिकं तु भाष्यतुल्यमेवेति विज्ञेयम् ।

[ ग ] स्वरूपस्य विनाशेविनाशे वा द्रव्यान्तरारम्भकत्वम् । यथा दुग्धादेर्दध्यारम्भकत्वम् , बीजादेर्वृक्षाद्यारम्भकत्वं च । ( गौ० वृ० २।१०६ )

**विकार्यम्**—कर्मशब्दव्याख्यानावसरे टिप्पणे संपादितोऽस्यार्थः ।

**विक्लित्तिः**—तेजःसंयोगादिनावयवशैथिल्यम् । यथा शाब्दिकमते, तण्डुलं पचतीत्यादौ फलीभूतो धात्वर्थः । ( स्व० )

**विक्षेपः**— ( निग्रहस्थानम् ) [ क ] कार्यव्यासङ्गात्कथाविच्छेदः । ( गौ० ५।२।२० ) यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति ' इदं मे करणीयं विद्यते, तस्मिन्नवसिते कथयिष्यामि ' इति विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति । ( वात्स्या० ५।२।२० )

[ ख ] असंभवत्कालान्तरकत्वेनारोपितं कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः । ( गौ० वृ० ५।६२ ) ( नील० ) ( दि० १ )

**विगीतत्वम्**—१ वेदनिषिद्धत्वम्[1] । ( चि० १ ) यथा सुरापानादेर्विगीतत्वम् । ( स्व० ) २ लौकिकविषयकत्वम् , । वेदनिषिद्धविषयकत्वम् । ३ पापजनकत्वम् , । बलवदनिष्टानुबन्धित्वम् । ( मू० म० १ ) ( दि० १ )

**विग्रहः**—[ क ] निर्देशे यथावचनम् । ( वात्स्या० १।२।१ ) यथा राजपुरुष इत्यादौ राज्ञः पुरुष इति ।

[ ख ] वृत्त्यर्थावबोधकं वाक्यं विग्रह इति शाब्दिका वदन्ति ।

**विघातः**—ध्वंसः । ( दि० १ ) यथा विघ्नविघाताय मङ्गलमित्यादौ । ( मु० १ )

**विघ्नः**[2]—विजातीया[3]दृष्टविशेषः । ( स्व० )

**विचारः**—विपरीतोद्भावकपरविजिगीषया न्यायप्रयोग इति गुरुचरणाः प्राहुः ।

---

१ अत्र वेदपदं स्मृत्याद्युपलक्षणम् ।

२ लक्षणं तु विघ्नत्वम् । तच्च, मङ्गलनाश्यतावच्छेदकीभूतनिष्ठो जातिविशेषः । विघ्नकारणं च मङ्गलभिन्नेतरविघ्नप्रागभावनाशककारणकलापः । ( मू० म० १ )

३ अत्र वैजात्यं च ( मू० म० १ ) तत्र द्रष्टव्यम् ।

यथा परार्थानुमानस्थले पर्वतो वन्हिमान्धूमवत्त्वादित्यादि[1] । ( स्व० )

**विचिकित्सा**—संशयवदस्यार्थोनुसंधेयः । ( गौ० वृ० ४।३ )

**विज्ञानम्**—बुद्धिवदस्यार्थोनुसंधेयः । ( स्व० ) विज्ञानवादिनो बौद्धास्तु, विज्ञानं द्विविधम् । प्रवृत्तिविज्ञानम् । आलयविज्ञानम् । तत्राद्यं 'अयं घटः' इत्याद्याकारकम् । द्वितीयं च 'अहं जानामि' इत्याकारकम् । तदेवात्मे-त्युच्यते, इति वदन्ति । ( दि० १।२ ) ( सर्व० बौद्ध० )

**वितण्डा**—( कथा ) [ क ] स प्रतिपक्षस्थापनाहीनः । ( गौ० १।२।४४ ) स जल्पो वितण्डा भवति । किंविशेषणः ? । प्रतिपक्षस्यापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिक्षावित्युक्तौ तयोरेकतरं वैत-ण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति। वात्स्या० १।२।४४)

[ ख ] प्रतिपक्षस्यापनाहीना विजिगीषुकथा । ( गौ० वृ० १।४३ )

[ ग ] स्वपक्षस्थापनाहीना कथा परपक्षदूषणमात्रावसाना ( वात्स्या० १।१।१ ) ( त० भा० ) ( त० दी० ) ( सर्व० अक्ष० )

**वितर्कः**—प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा, किमिन्दुः किं पद्मं किमु मुकु-रबिम्बं किमु मुखमित्यादौ किंपदार्थः ( गा० श० )

**विधि**[2]:—१ (वेदः) [क] विधायकः ।(गौ० २।१।६२) यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोनुज्ञा वा । यथा, अग्निहोत्रं जुहुयात्स्वर्ग-काम इत्यादि । ( वात्स्या० २।१।६२ )

[ ख ] इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यम् ।(गौ०वृ० २।६२)

[ ग ] विध्यभिधायकप्रत्ययः[3], । तद्घटितवाक्यं वा । ( न्या० म० ४ )

---

१ अत्र च पर्वते वन्हौ साधनीये, प्रतिवादिना च पर्वतो न वन्हिमानित्यादि विपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निवृत्त्यर्थं वादिना पर्वतो वन्हिमानित्यादिप्रतिज्ञादिघटितवाक्य-प्रयोगरूपविचारः क्रियत इति विज्ञेयम् ।

२ विधेः सहकारिभूतानि षट् प्रमाणानि सन्ति । श्रुतिः । लिङ्गम् । वाक्यम् । प्रकरणम् । स्थानम् । समाख्या, चेति । ( लौ० भा० ) इदं च मीमांसकमतमनुरुध्य ।

३ स च प्रत्ययो लिङ्लोट्लेट्तव्यकृत्यप्रत्ययरूपः । ( सि० च० )

स त्रिविधः[1] । अपूर्वविधिः । नियमविधिः । परिसंख्याविधिः । ( न्या० म० ४ ) ( सि० च० ) प्रकारान्तरेण मीमांसकनये । विधिश्चतुर्विधः । उत्पत्तिविधिः । नियोगविधिः । अधिकारविधिः । प्रयोगविधिश्चेति । ( लौ० भा० ) २ लिङ्डर्थवदस्यार्थोनुसंधेयः । ( कु० ) ( तर्का० )

**विधेयता**—[ क ] वन्हिमनुमिनोमीत्याद्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः । यथा पर्वतो वन्हिमानित्याद्यनुमितौ वन्हिवृत्तिर्विधेयता ।

[ ख ] केचित्तु, प्रत्यक्षादिधारणी विशेष्यतावच्छेदकताभिन्ना मुख्यविशेष्यतानिरूपितप्रकारतैव विधेयता, इत्याहुः । ( गा० पक्ष० )

[ ग ] तदादिशब्दप्रतिपाद्यत्वे सत्युद्देश्यसंबन्धित्वेनापूर्वबोधविषयत्वमिति शाब्दिका वदन्ति ।

**विनश्यदवस्थत्वम्**—स्वप्रतियोगित्वस्वाव्यवहितपूर्ववृत्तित्वोभयसंबन्धेन नाशविशिष्टत्वम् । यथा भावकार्यस्य विनश्यदवस्थत्वम् । ( स्व० )

**विनिगमना**—अन्यतरपक्षपातिनी युक्तिः । ( सि० च० )

**विपक्षः**[2]—निश्चितसाध्याभाववान् । यथा पर्वते वन्हिसाधने ह्रदः । (त०स०२)

**विपरीतज्ञानम्**—संशयवदस्यार्थोनुसंधेयः । ( नील० )

**विपर्ययः**—भ्रमवदस्यार्थोनुसंधेयः ।

**विप्रकर्षः**—१ [ क ] संयुक्तसंयोगभूयस्त्वम्[3] । ( वै० उ० ७।२।२१ )

[ ख ] बहुतरसंयोगान्तरितत्वम्[3] । ( दि० गु० ) यथा मुंबापुर्याः पुण्यग्राममपेक्ष्य झळकीग्रामस्य विप्रकर्षः । ( स्व० ) २ बहुतरतपनपरि-

---

१ तदुक्तम् । विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते, इति ॥ ( न्या० म० ४ )

२ लक्षणं च विपक्षत्वम् । तच्च, [ क ] साध्याभावप्रकारकनिश्चयविशेष्यत्वम् ( न्या० बो० ) [ ख ] विशेष्यतासंबन्धेन साध्याभावप्रकारकनिश्चयवत्त्वम् । ( वाक्य० )

3 तच्च दिक्कृतो विप्रकर्ष इति विज्ञेयम् ।

स्पन्दान्तरितजन्मत्वम्[1]। ( वै० उ० ७।२।२१ ) यथा गौतमर्षिमपेक्ष्य गदाधरभट्टाचार्यस्य विप्रकर्षः। ( स्व० )

**विप्रकृष्टत्वम्**—विप्रकर्षवदस्यार्थोनुसंधेयः।

**विप्रतिपत्तिः**—१ [ क ] व्याहतमेकार्थदर्शनं[2] विप्रतिपत्तिः। व्याघातो विरोधोसहभाव इति। अस्त्यात्मेत्येकं दर्शनम्। नास्त्यात्मेत्यपरम्। ( वात्स्या० १।१।२३ )

[ख] विरुद्धकोटिद्वयोपस्थापकः शब्दः। ( गौ० वृ० १।२३ ) ( दि० गु० )

[ ग ] विरुद्धार्थप्रतिपादकवाक्यद्वयम्[2]। ( नील० ) यथा पर्वतो वन्हिमान्नवेति वाक्यम्। ( स्व० ) २ [ क ] विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः[3]। विप्रतिपद्यमानः पराजयं प्राप्नोति। निग्रहस्थानं खलु पराजयप्राप्तिः। ( वात्स्या० १।२।६० )

[ ख ] विरुद्धा प्रतिपत्तिः। ( गौ० वृ० १।५९ ) ( दि० गु० )

**विप्रतिषेधः**—१ तुल्यबलविरोधः। यथा, शब्दोनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्यसम इति प्रतिवादिनो द्वितीयः पक्षः। प्रतिषेधाप्रतिषेधेप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः, इत्यत्र। ( गौ० वृ० ५।४१ ) २ द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसंभविस्वकार्यसमर्पणमिति शाब्दिका वदन्ति।

**विभक्तिः**—१ विभागवदस्यार्थोनुसंधेयः। २ [ क ] वृत्तिवदस्यार्थोनुसंधेयः। ( गौ० वृ० २।१२३ )

[ ख ] सुप्तिङ्रूपेति शाब्दिका वदन्ति। विभक्तिर्द्वयी। नामिक्याख्यातिकी च। ब्राह्मणः, पचतीत्युदाहरणम्। उपसर्गनिपातास्तर्हि न पदसं-

---

१ अयं च कालकृतो विप्रकर्ष इति बोध्यम्।

२ इदं च संशयप्रयोजकमिति बोध्यम्।

३ इयं तु निग्रहस्थानप्रयोजिकेति बोध्यम्।

ज्ञाः । लक्षणान्तरं वाच्यमिति । शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः, पदसंज्ञार्थमिति । ( वात्स्या० २।२।६० )

**विभजनम्**–[ क ] सामान्यधर्मावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनम् । ( गा० सव्य० )

[ ख ] सामान्यधर्मस्य साक्षान्न्यूनवृत्तियावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः ( वाक्य० १ ) यथा, द्रव्यं विभजत इति प्रतिज्ञाय 'पृथिव्यापस्तेजो वायुराकाशम्' इति विभजनम् । ( स्व० )

**विभवः**–१ विभुत्ववदस्यार्थोनुसंधेयः । ( वै० उ० ७।१।२२ ) २ रामाद्यवतारो विभव इति रामानुजीया वदन्ति । ( सर्व० रामा० ) ३ संवत्सरविशेष इति मौहूर्तिका वदन्ति ।

**विभागः**–१ ( गुणः ) संयोगनाशको[2] गुणः । सर्वद्रव्यवृत्तिः । ( त० सं० ) स द्विविधः । कर्मजः । विभागजः । ( त० दी० ) कर्मजो द्विविधः । एककर्मजः । द्विकर्मजः । आद्यः श्येनशैलयोर्विभागः । द्वितीयो मेषयोर्विभागः । विभागजोपि द्विधा । कारणमात्रविभागजन्यः । कारणाकारणविभागजन्यः । तत्रादिमश्च, कपालद्वयविभागात्कपालपूर्वदेशविभागः[3] । द्वितीयस्तु, हस्तपुस्तकविभागात्कायपुस्तकविभागः[4] । ( भा० प० गु० ) ( त० दी० ) ( सि० च० ) २ विभजनवदस्यार्थोनुसंधेयः । ( स्व० )

---

१ स्वसमभिव्याहृतपदार्थतावच्छेदकसाक्षाद्व्याप्यपरस्परविरुद्धधर्मप्रकारकज्ञानानुकूलशब्दप्रयोग इत्यर्थः ।

२ प्रतियोगितासंबन्धानवच्छिन्ननाशविशिष्टजन्यतानिरूपितजनकतावानित्यर्थ इति केचित् । परे तु- संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्नकारणतावानित्यर्थ इत्याहुः । ( नील० )

३ अत्र चैवं विज्ञेयम् । कार्यव्याप्ते कारणे कर्मोत्पन्नं यदावयवान्तराद्विभागं विधत्ते, न तदाकाशादिदेशाद्विभागः । यदा त्वाकाशादिदेशाद्विभागः, न तदावयवान्तरादिति स्थितिनियमः । ( सर्व० औलु० )

४ अत्रेदमाकूतम् । हस्ते कर्मोत्पन्नमवयवान्तराद्विभागं कुर्वदाकाशादिदेशेभ्यो विभागानारभते, ते कारणाकारणविभागाः । कर्म यां दिशं प्रति कार्यारम्भाभिमुखं, तामपेक्ष्य कार्याकार्यविभागमारभते । यथा हस्ताकाशविभागाच्छरीराकाशविभागः । ( सर्व० औलु० ) विस्तरश्च, ( वै० उ० ७।२।१० ) ( सर्व० औलु० ) तत्रानुसंधेयः ।

**विभाजकोपाधिः**—सामान्यधर्मसाक्षाद्व्याप्यो[1] धर्मः । ( मू० म० १ ) यथा, ज्ञानविभाजकोपाधिर्भ्रमत्वं प्रमात्वं च । ( स्व० )

**विभुत्वम्**—[ क ] सर्वगतत्वम् । ( गौ० वृ० ४।८७ )

[ ख ] परममहत्परिमाणवत्त्वम् । ( मु० १ )

[ ग ] मूर्तेतरद्रव्यत्वम् । ( त० प्र० १ )

[ घ ] सर्वमूर्तद्रव्यसंयोगित्वम् । यथा, आकाशादिद्रव्यचतुष्टयस्य विभुत्वम् । ( त० दी० १ ) ( वाक्य० १ ) ( न्या० बो० )

**विभुविशेषगुणत्वम्**—अकारणगुणोत्पन्नगुणत्ववदस्यार्थोनुसंधेयः । ( भा० प० गु० )

**विमर्शः**—१ ज्ञानम् । ( स्व० ) २ विचार इति काव्यज्ञा वदन्ति ।

**विमोक्षः**—निःश्रेयसवदस्यार्थोनुसंधेयः । ( स्व० )

**विरहः**—१ अत्यन्ताभावः । ( स्व० ) २ प्रियवियोग इत्यालंकारिका वदन्ति ।

**विरुद्धः**[2]—( हेत्वाभासः ) [ क ] सिद्धान्तमभ्युपेत्य तद्विरोधी । ( गौ० १।२।४७ ) तं विरुणद्धीति तद्विरोधी । अभ्युपेतं सिद्धान्तं व्याहन्तीति । यथा, सोयं विकारो व्यक्तेरपैति । नित्यत्वप्रतिषेधादपेतोप्यस्ति । विनाशप्रतिषेधान्न नित्यो विकार उपपद्यते । इत्येवं हेतुर्व्यक्तेरपेतोपि विकारोस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । ..... सोयं हेतुर्यत्सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति । ( वात्स्या० १।२।४७ )

[ ख ] अव्याप्तोगृहीतव्याप्तिको विपरीतव्याप्तिकश्च विरुद्धः । ( वै० उ० ३।१।१५ )

[ ग ] साध्यासमानाधिकरणः, । साध्याभावव्याप्यः[3], । साध्यवदन्योन्याभावव्याप्तो वा । ( चि० २ ) यथा शब्दो नित्यः कार्यत्वादित्यादौ

---

१ अत्र साक्षाद्व्याप्यत्वं च तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम् ।

२ यत्र विरोधः स विरुद्ध इति परमार्थः । ( त० भा० ) ( वाक्य० )

३ अत्र, साध्याभावव्याप्तिश्च [ क ] साध्यवदवृत्तित्वमिति प्राञ्चः । [ ख ] नव्यास्तु, साध्यव्यापकाभावप्रतियोगित्वमिति वदन्ति । ( नील० ) साध्याभावव्याप्यश्च सत्प्रतिपक्ष इति केचिन्नवीना वदन्ति । तन्मते विरुद्धस्तु साध्यासमानाधिकरण एवेति सूक्ष्मतरमेतत् ।

कार्यत्वादिर्हेतुर्विरुद्धः । ( त० भा० ) ( गौ० वृ० १।४६ ) ( भा०प० ) ( मु० ) ( वै० वि० ३।१।१५ ) ( त० सं० ) ( वाक्य० )

**विरुद्धत्वम्**[1]– ( हेतुदोषः ) साध्यव्यापकाभावप्रतियोगित्वम् , । वृत्तिमतः साध्यवदवृत्तित्वम् , । साध्यवद्वृत्तित्वानधिकरणत्वम् , । साध्यासमानाधिकरणधर्मत्वम् , । साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा । ( चि० २ ) यथा ह्रदो वन्हिमाञ्जलादित्यत्र जलस्य विरुद्धत्वम् । ( स्व० )

**विरोधः**–१ इष्टार्थभङ्गः । ( त० भा० ) यथा विरोधेन ब्राह्मणैर्देशान्तरं न जिगमिष्यत इति । ( स्व० ) २ तद्वत्ताग्रहप्रतिबन्धकज्ञानविषयत्वम् । ( गा० सत्प्र० ) यथा ह्रदे वन्हिमत्ताग्रहप्रतिबन्धकनिश्चयविषयस्य वन्ह्यभाववद्ध्रदस्य विरोधः । ( स्व० ) ३ विरुद्धत्ववदस्यार्थोनुसंधेयः । (त० भा०) ( वाक्य० ) ४ विरोधित्ववदस्यार्थोनुसंधेयः । (दीधि० २) ( गा० बाध० ) ५ परस्परा[2]भावव्याप्यत्वाविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वम् । ( गा० सव्य० ) यथा घटघटाभावयोर्विरोधः । ( स्व० )

**विरोधित्वम्**–[ क ] सहानवस्थायित्वम् । ( दीधि० २ )
[ ख ] एकसमयावच्छेदेनैकत्रावर्तमानत्वम् । ( गा० बाध० ) यथा घटघटाभावयोर्विरोधित्वम् । ( स्व० )

**विरोधिपरामर्शः**–( परामर्शः ) तद्विपरीतव्याप्यवत्तानिर्णयः । (गा० सत्प्र०) यथा ह्रदो वन्हिमान्धूमादित्यादौ वन्ह्यभावव्याप्यजलवान्ह्रद इति परामर्शः । ( स्व० )

**विरोधिविषयता**[3]–[ क ] पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपाव-

---

१ साध्याभावव्याप्तिर्विरुद्धत्वमिति परमार्थः । ( त० भा० ) ( वाक्य० ) व्याप्तिश्चात्र, अन्वयव्याप्तिरिति प्राञ्चः । व्यतिरेकव्याप्तिरिति नव्या आहुः । ( नील० )

२ अयं च, स्वरूपतो विरोध इत्युच्यते । ( गा० सव्य० )

३ इयं विषयता च गादाधरीय ' अत्रवदन्ति ' कल्पोक्तहेत्वाभासलक्षणघटितेति विज्ञेयम् ।

च्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं[1] तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयता ।

[ ख ] साध्यवत्पक्षविषयतावहिर्भूतविषयता । यथा ह्रदो वन्हिमानित्यादौ वन्ह्यभाववद्ध्रदविषयता भवति विरोधिविषयता । ( गा० सामा० )

**विवरणम्**—तत्समानार्थबोधकपदान्तरेण तदर्थकथनम् । यथा पचतीत्यस्य 'पाकं करोति' इति विवरणम् । ( मु० ४ )

**विवृतिः**—विवरणवदस्यार्थोनुसंधेयः ।

**विशिष्टद्वयाघटितत्वम्**[1]—यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति, तादृशविशिष्टद्वयाघटितत्वम्[2] । यथा ह्रदो वन्हिमान्धूमादित्यादौ वन्ह्यभाववद्ध्रदात्मकबाधस्य, जलावच्छिन्नवन्ह्यभावजलवद्ध्रदैतद्विशिष्टद्वयाघटितत्वम् ( गा० सामा० )

**विशिष्टम्**—विशेषणवद्विशेष्यम् । ( चि० १ ) यथा द्रव्यं गुणवदित्यादौ द्रव्यम् । ( स्व० )

**विशिष्टविशेषणकज्ञानम्**—विशेषणवद्विशेष्यस्य धर्मिणि वैशिष्ट्यविषयकं ज्ञानम् । यथा दण्डवान्पुरुष इति ज्ञानम् । ( स्व० ) तद्द्विविधम् । तदुपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि । तद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहि । आद्ये विशेषणज्ञानासंसर्गाग्रहयोरेवापेक्षा, न तु विशेषणतावच्छेदकप्रकारकधियोपि । ( गा० बाध० ) द्वितीये विशेषणतावच्छेदकप्रकारकधियोपेक्षा । क्वचित्, विशेष्ये यद्विशेषणं तत्रापि विशेषणान्तरमिति रीत्या जायमानं ज्ञानं भवति । यथा दण्डवान्पुरुष इति ज्ञानम्[3] । क्वचित्, एकत्र

१ एतस्य प्रयोजनं च गादाधरीयद्वितीयहेत्वाभाससामान्यलक्षणेनुसंधेयम् ।

२ यद्रूपावच्छिन्नविषयकनिश्चयाविशिष्टयद्रूपावच्छिन्नाविषयकयद्रूपावच्छिन्नविषयकनिश्चयत्वं स्वव्यापकत्वस्वाभाववद्वृत्तित्वोभयसंबन्धेन स्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताविशिष्टान्यप्रतिबन्धकतानतिरिक्तवृत्ति भवति, तत्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयत्वं फलितोर्थ इति गुरुचरणाः प्राहुः ।

३ अत्र ज्ञाने, पुरुषांशे दण्डो दण्डे च दण्डत्वं विशेषणतया भासते । विशृङ्खलोपस्थितिः प्रयोजिका चेति विज्ञेयम् ।

द्वयमिति रीत्या जायमानं ज्ञानं भवति । यथा दण्डवान्पुरुष इति ज्ञानम्[1] । क्वचित्, विशिष्टवैशिष्ट्यावगाहि ज्ञानं[2] भवति । यथा दण्डवान्पुरुष इति ज्ञानम्[3] । क्वचित्, विशिष्टज्ञानम्[4] । यथा, अयं दण्डीति ज्ञानम्[5] । (स्व०)

**विशिष्टान्तराघटितत्वम्[6]**—[क] अनुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं, तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं, तदवच्छिन्नत्वम् । यथा धूमवान्वन्हेरित्यादौ व्यभिचारस्य बाधादिरूपविशिष्टान्तराघटितत्वम् । ( गा० सामा० )

[ख] केचित्तु, स्वसमानाधिकरणहेत्वाभासविभाजकरूपसमानाधिकरणं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशं रूपं, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तदवच्छिन्नत्वम्[9], इत्याहुः ।(न्या०र०)

[ ग ] विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्र-

---

१ अत्र ज्ञाने च, एकस्यां व्यक्तौ पुरुषत्वं दण्डश्चेतदुभयं विशेषणतया भासते । न तु विशेषणविशेष्यतावच्छेदकभावेन, इति बोध्यम् ।

२ अत्र ज्ञाने च विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणं भवतीति ध्येयम् ।

३ अत्र च दण्डरूपविशेषणावच्छिन्नप्रतियोगिकवैशिष्ट्याख्यः संबन्धः संसर्गतया पुरुषांशे भासते । इदमेव ज्ञानं, विशिष्टविशेषणकज्ञानप्रभेदो तद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहि, इति बोध्यम् ।

४ विशेषणवद्विशेष्यविषयकं ज्ञानमित्यर्थः । (चि० १ )

५ अत्र ज्ञाने च, इदंपदार्थविशेष्यांशे दण्डात्मकविशेषणप्रतियोगिकसंबन्धः संसर्गतया भासते । विशेषणज्ञानं कारणं चेति विज्ञेयम् ।

६ एतद्विशेषणप्रयोजनं च, गादाधरीयद्वितीयहेत्वाभाससामान्यलक्षणेनुसंधेयम् ।

७ यद्रूपावच्छिन्ने लक्षणं संगमनीयं, तदेव स्वपदार्थः । ( गा० सामा० )

८ अत्रैवं श्रूयतेस्मद्गुरुमुखात् । अयं परिष्कारस्तु, वाराणसीग्रामनिवासिजगन्नाथशास्त्रिभ्यः संगृह्य पुण्यग्रामनिवासिभिः ‘ गोडबोले ’ इत्युपनामकभिरुशास्त्रिभिः सम्यग्विरचय्य प्रकटीकृतः, इति ।

९ अत्र, तादृशं रूपं च विपरीतव्यभिचारत्वादिकमेवेति बोध्यम् ।

१० इदं च गादाधर्यां स्वसजातीयविशिष्टान्तराघटितत्वमित्युच्यते ।

११ तादृशोभयाभावश्च, प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वैतदुभयाभावः । ( गा० सामा० )

योजकाभावाधिकरणताकत्वम् । यथा धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादौ व्यभिचारघटितबाधस्य व्यभिचाररूपविशिष्टान्तराघटितत्वम् । ( गा० सामा० )

**विशृङ्खलत्वम्**–१ पार्थक्यम् । २ क्वचित् , निरूप्यनिरूपकभावानापन्नविषयतावत्त्वेन तत्तदर्थविषयकत्वम् । यथा घटवद्भूतलमित्यादौ 'घटः' इति 'भूतलम्' इति चोपस्थितेर्विशृङ्खलत्वम् । ( स्व० )

**विशेषः**[2]–( पदार्थः ) [ क ] अन्त्यो[3] नित्यद्रव्यवृत्तिः । ( भा० प० )

[ ख ] नित्यद्रव्यवृत्तिर्व्यावर्तकः । ( त० सं० )

[ ग ] अन्योन्याभावविरोधिसामान्यरहितः समवेतः । ( सर्व० औलु० )

[ घ ] अत्यन्तव्यावृत्तबुद्धिहेतुः । यथा वैशेषिक इति । ( गण० )

**विशेषः**–१ विशेषकवदस्यार्थोनुसंधेयः । ( गौ० वृ० २।६ ) २ प्रभेदवदस्यार्थोनुसंधेयः । ( स्व० ) ३ व्याप्यधर्मः । यथा स्थाणुत्वव्याप्यवक्र-

---

१ इदं च, सिद्धान्तसिद्धं विशिष्टान्तराघटितत्वमित्युच्यते ।

२ विशेषपदार्थस्वीकारस्यावश्यकत्वमिदानीं प्रदर्श्यते । घटादीनां कपालसमवेतत्वादिकं पटादिभेदकमस्ति । परमाणूनां तु परस्परभेदकं न किंचिदस्त्यतोनायत्या विशेष आश्रयितव्यः । एवं, शब्दसमवायिकारणतावच्छेदकतयापि विशेषः सिध्यति, इति । ( सि० च० ) विशेषलक्षणं तु [ क ] सामान्यशून्यत्वे सति सामान्यभिन्नत्वे च सति समवेतत्वम् [ ख ] स्वतोव्यावृत्तत्वम् । ( वाक्य० ) ( त० प्र० १ ) [ ग ] स्वतो*व्यावर्तकत्वम् । अत्र व्यावर्तकत्वं नाम व्यावृत्तिजनकत्वम् । व्यावृत्तिश्चेतरभेदस्तज्ज्ञानं वा । ( सि० च० )

३ अन्तेवसाने वर्तत इत्यन्त्यः । यदपेक्षया विशेषो नास्तीत्यर्थः । एकमात्रवृत्तिरिति फलितोर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः । परमाणूनां परस्परभेदको विशेष एव । स तु स्वत एव† व्यावृत्तः । तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः । ( मु० १ ) अत्र स्वतोव्यावृत्तत्वं च स्वतोव्यावर्तकत्ववदनुसंधेयम् ।

---

* अत्र स्वतोव्यावर्तकत्वं च [ क ] स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसमानजातीयेतरभेदानुमित्यविषयत्वम् । ( दि० १ ) [ ख ] स्वेन रूपेण भेदानुमापकत्वम् । यथा परमाणौ परमाण्वन्तरभेदसाधने विशेषस्य तत्तद्व्यक्तित्वेनैव हेतुत्वेन स्वतोव्यावर्तकत्वम् । अत्र तु तत्तद्व्यक्तित्वं च तादात्म्यसंबन्धेन सैव व्यक्तिः । ( राम० )

† अत्र प्रयोगः । एतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषात्, इति ।

कोटरादिमानयमित्यादौ वक्रकोटरादिमत्त्वं विशेषः । (सि० च०)

**विशेषकः**–१ इतरव्यावर्तकधर्मः । (गौ० वृ० ३।१०९) यथा गवादेः सास्नादिमत्त्वं विशेषकः । (स्व०) २ तिलक इति काव्यज्ञा वदन्ति ।

**विशेषगुणत्वम्**[1]–[क] द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिगुणवृत्तिजातिमत्त्वम् । (त० दी० ४)

[ख] भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम् । (दि० गु०)

**विशेषणता**[3]–(संनिकर्षः) स्वरूपसंबन्धविशेषः । (मू० म० १) यथा घटाभाववद्भूतलमिति चाक्षुषप्रत्यक्षे भूतलांशे घटाभावस्य विशेषणतारूपः संनिकर्षः । (स्व०) सा द्विविधा । इन्द्रियविशेषणता । इन्द्रियसंनिकृष्टविशेषणता । आद्यया शब्दाभावो गृह्यते । द्वितीयया भूतलादौ घटाभावो गृह्यते । (न्या० म० १)

**विशेषणता**[4]–(प्रकारता) [क] तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वम् । (दि० ४) यथा दण्डवान्पुरुषोस्तीत्यादौ दण्डस्य विशेषणता । (स्व०)

[ख] स्वरूपसंबन्धविशेष[5] इति प्राञ्चो वदन्ति । (नील०)

**विशेषणम्**–(व्यावर्तकम्) १ प्रत्याय्य व्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकम्, । विवक्षितान्वयप्रतियोगितावच्छेकम्, । यदन्विततया ज्ञात एव विशेष्यतात्पर्यविषयीभूतेतरान्वयधीस्तद्यवच्छेदकम् । यथा

---

१ विशेषगुणाश्च षोडश, बुद्ध्याद्यष्टकं रूपादिचतुष्टयं स्नेहः सांसिद्धिकद्रवत्वं शब्दो भावना चेति । (भा० प० गु०)

२ यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं, तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिस्तद्वत्त्वे सति गुणत्वमिति तदर्थः । (नील०)

३ सा चाभावप्रत्यक्षे हेतुरिति ध्येयम् ।

४ अत्र विशेषणतावच्छेदकं तु, विशेषणे यद्विशेषणं तत् । (गु०) यथा दण्डवान्पुरुष इत्यत्र दण्डत्वं विशेषणतावच्छेदकम् । (स्व०)

५ स्वेतरक्तबुद्धिजनकत्वं यत्स्वरूपं तदेव विशेषणत्वमित्यर्थः । (न० भा०)

दण्डिनमानयेत्यादौ दण्डः । ( चि० १ ) २ [ क ] विद्यमानं सद्व्यावर्तकम् । यथा पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिः । ( गा० व्यु० ३ ) यथा वा, यदा देवदत्तगृहे काकवत्ता तदा काको विशेषणम् । ( वै० उ० ७।२।८ )

[ ख ] सदसद्वा समानाधिकरणं व्यावर्तकं विशेषणमित्युदयनाचार्याः । ( चि० १ ) केचित्काव्यज्ञास्तु, विशेषणं त्रिविधम् । व्यावर्तकम् । विधेयम् । हेतुगर्भं चेति । तत्राद्यं, नीलो घट इत्यादौ नीलः । द्वितीयं, ग्रामं गच्छंस्तृणं स्पृशतीत्यादौ गच्छन्निति । तृतीयं च, स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यमित्यादौ कूजद्भिरिति विशेषणम्, इत्याहुः । ( स्व० )

**विशेषणासिद्धः**[1]—( हेत्वाभासः ) यो हेतुः, स्वघटकविशेषणविशिष्टः सन्पक्षे न तिष्ठति सिध्यति च सः । ( स्व० ) यथा शब्दो नित्यो द्रव्यत्वे सत्यस्पर्शत्वादित्यत्र[2] हेतुः । ( त० भा० )

**विशेषितम्**—विशिष्टवदस्यार्थोनुसंधेयः ।

**विशेष्यता**[3]—( सन्निकर्षः ) स्वरूपसंबन्धविशेषः । यथा भूतले घटो नास्तीति चाक्षुषप्रत्यक्षे घटाभावस्य भूतलविशेष्यता । ( स्व० )

**विशेष्यता**[4]—( विषयता ) [ क ] तत्तज्ज्ञानीयो यत्किंचित्प्रकारतानिरूपितः संसर्गताभिन्नो विषयताविशेषः । यथा घटवद्भूतलमित्याकारकज्ञाने भूतलस्य विशेष्यता । ( स्व० )

[ ख ] भासमानवैशिष्ट्य[5]ानुयोगित्वमिति संप्रदायः । ( कु० ४ )

[ ग ] स्वरूपसंबन्धविशेष इति प्राञ्चो वदन्ति । ( नील० )

---

१ स च स्वरूपासिद्धप्रभेद इति ध्येयम् ।

२ अत्र, द्रव्यत्वविशिष्टास्पर्शत्वं हेतुः । स च शब्दे नास्त्येवेति बोध्यम् ।

३ सा तु विषयताविशेषः, अभावप्रत्यक्षे कारणं चेति विज्ञेयम् ।

४ अत्रायं सिद्धान्तः । विशेष्यता केनापि संबन्धेनानवच्छिन्ना न भवति, इति ।

५ वैशिष्ट्यं च संबन्धविशेषः ।

**विशेष्यासिद्धः**[1]–( हेत्वाभासः ) यो हेतुः, स्वघटकविशेष्यविशिष्टः सन्पक्षे न तिष्ठति सिध्यति च सः । ( स्व० ) यथा शब्दो नित्योऽस्पर्शत्वे सति द्रव्यत्वा[2]दिति । ( त० भा० )

**विश्वासः**–दोषाभावप्रकारकनिश्चयः । यथा, देवदत्तो यज्ञदत्तं विश्वसितीत्यादौ धात्वर्थः । ( स्व० )

**विषयता**–[ क ] विषय[3] इत्याकारकप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । ( न्या० म० १ ) यथा, अयं घट इति ज्ञाने घटस्य विषयता । ( स्व० ) [ ख ] क्वचित्, कोटित्वपर्याप्त्यधिकरणत्वमिति मीमांसकाः । ( मू० म० प्रामा० ) विषयता त्रिविधा । विशेष्यता । प्रकारता । सांसर्गिकी[4] । यथायं घट इति प्रत्यक्षे, घटत्वे प्रकारता । इदमर्थे विशेष्यता । संबन्धे समवायादौ च सांसर्गिकी विषयता । ( कु० ४ ) ( त० प्र० )

**विषयत्वम्**–१ विषयतावदस्यार्थोऽनुसंधेयः । २ [ क ] लौकिकसाक्षात्कारविषयकार्यद्रव्यत्वम् । ( वै० उ० ४।२।१ )

[ ख ] साक्षात्परंपरया वोपभोगसाधन[5]त्वे सति जन्यद्रव्यत्वम् । ( वै० वि० ४।२।१ )

[ ग ] शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वम् । ( वाक्य० १ ) यथा मृत्पाषाणादिरूपपृथिव्याः, सरित्समुद्रादिरूपजलस्य, सुवर्णादिरूपतेजसः, प्राणादिरूपवायोश्च विषयत्वम् । ( त० सं० ) ( भा० प० )

**विष्टम्भः**–उत्तरदेशगतिप्रतिबन्धः । ( गौ० वृ० ४।८७ ) यथा व्याघ्रो वने विचरन्तं जम्बूकं विष्टभ्नातीत्यादौ धात्वर्थः । ( स्व० )

---

१ स च स्वरूपासिद्धप्रभेद इति विज्ञेयम् ।

२ अत्र, अस्पर्शत्वविशिष्टं द्रव्यत्वं हेतुः । स च शब्दे नास्त्येवेति बोध्यम् ।

३ घटो ज्ञानविषयः, पटो ज्ञानविषय इत्यनुगतप्रतीतिसाक्षिको ज्ञानविषयस्वरूपसंबन्धविशेष इत्यर्थः । (त० प्र०) एवं, विषयितापि ज्ञानेच्छाकृतिसंस्कारान्यतमनिष्ठः स्वरूपसंबन्धविशेष इति बोध्यम् ।

४ इयं च संसर्गतेत्यपि व्यवह्रियते ।

५ अत्रायं नियमः । यच्च कार्यं यददृष्टाधीनं, तत्तदुपभोगं साक्षात्परंपरया वा जनयति, इति ।

**विसंवादः**—[ क ] समयविरुद्धवादः । ( स्व० )

[ ख ] विप्रलम्भ इति काव्यज्ञा वदन्ति ।

**विहितत्वम्**—[ क ] इष्टसाधनत्वेन वेद[1]बोधितत्वम् । ( वाक्य० ) यथा स्वर्गकामो यजेतेत्यादौ यज्ञादिकर्मणो विहितत्वम् । ( स्व० )

[ ख ] बलवदनिष्टाननुबन्धित्वेन वेदबोधितत्वमिति मीमांसकाः । ( मु० म० १ )

**वीप्सा**[2]—१ सकलधर्मिप्रत्यायनेच्छा । यथा, यद्य[3]त्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे, इत्यादौ यत्पदे वीप्सा । (गा० अव० हेतु०) (चि०अव०) २ व्याप्तेर्व्यापकत्वस्य वा बोधनेच्छा । यथा यो[4] यो धूमवान्स वह्निमानित्यत्र यत्पदे वीप्सा । यथा वा, यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव, इत्यादौ । ( स्व० ) ३ अनवयवेन द्रव्याणामभिधानमेव वीप्सार्थ इति महाभाष्यकारः पतञ्जलिराह ।

**वृ[5]त्तिः**—[क] शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सबन्धः । (चि० ४)

[ ख ] शक्तिलक्षणान्यतरसंबन्धः । ( मु० ४ ) ( न्या० बो० ) यथा, घटपदपस्य कम्बुग्रीवादिमति शक्तिः । (स्व०) वृत्तिर्द्विविधा । संकेतः । लक्षणा । ( गा० श० ) प्रकारान्तरेण वृत्तिर्द्विविधा । मुख्या । गौणी । तत्राद्या शब्दशक्तिः, सैव संकेत इत्युच्यते । द्वितीया लक्षणा, इति । सर्वत्र शक्त्यैवोपपत्तौ लक्षणाख्या वृत्तिर्नास्त्येवेति शाब्दिका वदन्ति । व्यञ्जनाख्यं

---

१ अत्र वेदेत्युपलक्षणम् । स्मृत्याद्यपि संगृह्यते ।

२ वीप्साप्रयोजनं च क्वचिद्व्यभिचारनिवारणमिति प्राञ्च आहुः । ( गा० अव० हेतु० )

३ तदुक्तं मालतीमाधवे । कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद । यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय, इति ॥

४ अत्र च वीप्सया 'महानसं धूमवद्वह्निमच्च, महानसान्यद्धूमवद्वह्निमच्च' इति वाक्यार्थचतुष्टयविषयकबोधो, धूमवान्धूमव्यापकवह्निमानिति विशिष्टार्थबोधो वा जायत इति बोध्यम् । ( गा० अव० )

५ सा च पदवृत्तिरित्युच्यत इति विज्ञेयम् ।

वृत्त्यन्तर[1]मैच्छन्नालंकारिकाः । गौणीं वृत्त्यन्तर[2]मैच्छन्नन्ये । (सि० च०)

**वृत्तिः**—१ संनिकर्षः । २ ज्ञानम् । (वात्स्या० १।१।३ ) ३ आधेयत्वम् । एवं निष्ठाशब्दार्थोऽप्यनुसंधेयः । ४ आधेयतावान् । यथा, तत्र वृत्तिर्योभाव इत्यादौ । ( स्व० ) ५ अन्तःकरणपरिणामो वृत्तिरिति मायावादिनः । ६ कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तय इति प्राचीनशाब्दिका वदन्ति ।

**वृत्तिनियामकः**[3]—( संबन्धः ) अविशिष्टव्यावृत्तविशिष्टधीनियामकः[4] संबन्धः । (चि० १ ) यथा घटवद्भूतलमित्यादौ घटभूतलयोः संयोगः । ( स्व० )

**वृथाचेष्टा**—स्वकर्तव्यताप्रयोजकेच्छाविषये स्वरूपायोग्यकर्म । ( मू० म० १ ) यथा स्वर्गोद्देशेन कृतं चैत्यवन्दनं वृथाचेष्टा । ( स्व० )

**वृद्धिः**—१ [ क ] कारणवतो द्रव्यस्यावयवोपचयः । अवर्धत गौरिति । ( वात्स्या० २।२।६२ )

[ ख ] अवयवोपचयः । ( दि० १ ) २ आकार ऐकार औकारस्त्रयो वर्णा वृद्धिरिति शाब्दिका वदन्ति ।

**वेगः**[5]—( गुणः ) [ क ] वेगत्वजातिमान् । ( त० दी० ४ )

[ ख ] द्वितीयपतनासमवायिकारणम् । ( सि० च० ) यथा, यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलादित्यादौ । ( स्व० ) स च वेगो मूर्तमात्रवृत्तिः । ( भा० प० ) स द्विविधः । कर्मजः । वेगजः ।

---

१ तद्यथा तन्मते, गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शुभाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इत्यादावनया वृत्त्या प्रियाया मरणं व्यज्यते ।

२ यथा च तन्मते, अग्निर्माणवक इत्यादावनया वृत्त्योज्ज्वलत्वादिगुणो गम्यते ।

३ वृत्तिनियामकसंबन्धाश्च संयोगसमवायस्वरूपकालिकदैशिकविशेषणतादयः । एतद्व्यतिरिक्तास्तु वृत्त्यनियामका बोध्याः । ते च, गगनादिसंयोगाङ्गुलिद्वयसंयोगविषयत्वविषयित्वानुयोगित्वप्रतियोगित्वनिरूपकत्वनिरूप्यत्वतादात्म्यादयोऽनन्ता एव ।

४ आधारत्वाधेयत्वान्यतरावच्छेदक इति यावत् ।

५ तल्लक्षणं च, [ क ] क्रियाजन्यत्वे सति क्रियाजनकत्वम् । [ ख ] मूर्तमात्रवृत्तितावच्छेदकसंस्कारविभाजकोपाधिमत्त्वम् । ( वाक्य० ) ( भा० प० ) ( त० भा० )

तत्राद्यो नोदनोत्पादककर्मजन्यः, शरीरादौ प्रसिद्धः। द्वितीयो वेगवत्कपालजन्यघटे प्रसिद्धः। (सि० च०)

**वेदः**–[क] लौकिकवाक्यभिन्नवाक्यम्। (कु० ५)[1]

[ख] अपौरुषेयवाक्यं[2] वेद इति मीमांसका वदन्ति। (सर्व० जैमि०) स द्विधा। मन्त्रः। ब्राह्मणः। ब्राह्मणस्त्रिधा। विधिवचनम्। अर्थवादवचनम्। अनुवादवचनम्। (गौ०) (वात्स्या०२।१।६१) (गौ० वृ०२।६२) मीमांसकास्तु, विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविध इत्याहुः (लौ० भा०)

**वैधर्म्यम्**–१ [क] व्यावृत्तो[3] धर्मः। (वै० उ० १।१।४)

[ख] यदुक्तं यस्य साधर्म्यं वैधर्म्य[4]मितरस्य तत्। (भा० प०) यथा, अभावस्य समवायिकारणत्वं वैधर्म्यम्। (स्व०) २ क्वचित्, व्यतिरेकव्याप्तिः। (गौ० वृ० १।३४)

**वैधर्म्यसमः**–(जातिः) [क] वैधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेर्वैधर्म्यसमः। (गौ० ५।१।२)

[ख] वादिनान्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनो वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम्। यथा शब्दोऽनित्यः कृतकत्वाद्घटवद्व्यतिरेकेणाकाशवद्वेति स्थापनायामनित्यघटवैधर्म्यादमूर्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्य इति। (गौ० वृ० ५।२) यथा वा, क्रियाहेतुगुणयुक्तो

---

१ लक्षणं च [क] विजातीयधर्मजनकाध्ययनप्रतियोगित्वम्। (कु० ५) [ख] शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्। (कु० ५) (चि० ४) (वै०उ० ६।१।१) (वै० वि० ६।१।१) [ग] ऋग्यजुःसामाथर्वान्यतमत्वं वा। (वै० वि० ६।१।१)

२ नैयायिकास्तु, वेदस्येश्वरकर्तृकत्वं मन्यन्ते। तत्कर्तृत्वे प्रमाणमनुमानम्। तच्च, वेदः पौरुषेयो वाक्यत्वाद्भारतादिवदिति। (सर्व० जैमि०)

३ विरुद्धो धर्म इति फलितोऽर्थः। (मु० १)

४ ज्ञेयत्वादिकं विहाय यद्यस्य पदार्थस्य साधर्म्य*मुक्तं, तदितरस्य तद्वैधर्म्यमित्यर्थः। (मु० १)

---

* तच्च, साधर्म्यशब्दव्याख्यानावसरे संपादयिष्यते।

लोष्टः परिच्छिन्नो दृष्टो, न च तथात्मा । तस्मान्न लोष्टवत्क्रियावानिति । न चास्ति विशेषहेतुः, क्रियावत्साधर्म्यात्क्रियावता भवितव्यं, न पुनः क्रियावद्वैधर्म्यादक्रियेणेति । विशेषहेत्वभावाद्वैधर्म्यसमः । ( वात्स्या० ५।१।२ ) ( नील० )

**वैयधिकरण्यम्**—व्यधिकरणत्ववदस्यार्थोनुसंधेयः ।

**वैयर्थ्यम्**—व्यर्थत्ववदस्यार्थोनुसंधेयः ।

**वैराग्यम्**—ऐहिकपारत्रिकविषयादौ दोषदर्शनान्निरभिलाषस्य 'ममैते विषया वश्याः, नाहमेतेषां वश्यः' इति विमर्शः । ( सर्व० पात० )

**वैशेषिकः**— १ द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥ ( सर्व० औलु० ) यथा कणादो मुनिर्वैशेषिकः । ( स्व० ) २ विशेषगुणः । ( भा० प० ) ( मु० ) यथा, आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुण इत्यादौ शब्दः । ( भा० प० १ )

**व्यक्तिः**[1]–[ क ] गुण[2]विशेषाश्रयो मूर्तिः । ( गौ० २।२।६९ ) व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वद्रव्यं व्यक्तिः । यो विशेषगुणानां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासंभवं तद्द्रव्यम् । मूर्तिः, मूर्छितावयवत्वादिति । ( वात्स्या० २।२।६९ ) [ ख ] जात्याकृतिसमानाधिकरणः संख्यादिभिन्नो यो गुणस्तदाश्रयः । यथा गवादिर्व्यक्तिः । परे तु, जात्याश्रयो व्यक्तिरित्याहुः । अन्ये तु, परिच्छिन्नपरिमाणस्याश्रयो मूर्तिः । सैव व्यक्तिरित्याहुः । ( गौ० वृ० २।१३२ ) संख्यादिविशिष्टा व्यक्तिरिति मञ्जूषाकृदुक्ति ।

**व्यक्त्यभेदः**[3]–[ क ] स्वाश्रयव्यक्तेरैक्यम् । ( नील० )

---

१ तल्लक्षणं च व्यक्तित्वम् । तच्च, प्रमेयत्वमेव । ( गौ० वृ० २।१३२ ) एवं च सिद्धान्ते, सर्वेषां पदार्थानां व्यक्तिरिति संज्ञेत्याशयः ।

२ इदं लक्षणं च जात्याकृतिशक्तिविषयव्यक्तेरेवेति विज्ञेयम् । ( गौ० वृ० २।१३२ )

३ स चाकाशत्वादेर्जातित्वे बाधक इति बोध्यम् । ( दि० १ ) तदुक्तमुदयनाचार्यैः । व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः, इति ॥

[ ख ] एकव्यक्तिकत्वम्[1] । ( दि० १ ) यथा, आकाशत्वस्य व्यक्त्यभेदः । ( स्व० )

**व्यतिरेकः**—१ अभावः । ( न्या० बो० ) यथा, पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमित्यादौ । ( स्व० ) २ निश्चितकोटिद्वयवद्व्यावृत्तत्वज्ञानम्[2] । ( गा० सत्प्र० ) यथा धूमवान्वन्हेरित्यादौ धूमधूमाभाववद्व्यावृत्तवन्हिमानिति ज्ञानम् । ( स्व० ) ३ व्यतिरेकव्याप्तिः । ४ क्वचित्, साध्याभावः । ( वाक्य० ) यथा, अन्वयेन व्यतिरेकेण च व्याप्तिमादित्यादौ । ( त० सं० ) ५ व्यतिरेकव्यभिचारः । ( वै० उ० ५।१।३ ) यथा, अभिघातजे मुसलादौ कर्मणि व्यतिरेकात्, इत्यादौ । ( वै० ५।१।३ ) ६ साध्याभावहेत्वभावयोः, कारणाभावकार्याभावयोर्वा साहचर्यम् । ( सि० च० ) यथा, यत्र वह्निर्नास्ति तत्र धूमो नास्तीति । यथा वा, चक्रादिघटितदण्डादिसामग्र्यभावे घटाभाव इति । ७ अत्यन्ताभावप्रतियोगित्वम् । यथा, व्यतिरेकिसाध्यकस्थले वह्निमानित्यादावित्यत्र वह्नेर्व्यतिरेकः । ( स्व० )

**व्यतिरेकव्यभिचारः**—[ क ] कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्त्वम् ( दि० गु० )

[ ख ] कार्यसत्त्वे कारणाभावः । ( ? ) ( गा० ) यथा, तर्कदीपिकायां समाप्तिं प्रति मङ्गलस्य कारणत्वे वक्तव्ये किरणावल्यादावाशङ्क्यमानो व्यभिचारो व्यतिरेकव्यभिचारः । ( स्व० )

**व्यतिरेकव्याप्तिः**[3]—[ क ] साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । ( कु० ३ ) ( गा० सामा० ) ( मु० ) ( न्या० बो० )

[ ख ] हेत्वभावनिष्ठा साध्याभावनिरूपिता व्यापकता[4]रूपा । ( वाक्य० )

---

१ स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वेतदुभयसंबन्धेन भेदविशिष्टान्यत्वं फलितोऽर्थः । ( राम० )

२ तच्च ज्ञानं, असाधारणधर्मवत्ताज्ञानविधया प्राचीनमते कोटिद्वयोपस्थितिद्वारा संशयं प्रति प्रयोजकमिति विज्ञेयम् ।

३ व्यतिरेकनिरूपिता व्याप्तिरित्यर्थः । ( कु० ३ ) ( गा० सामा० )

४ व्यापकत्ववत्त्वं च हेतोः, स्वाश्रयप्रतियोगित्वसंबन्धेन बोध्यम् । ( वाक्य० )

[ग] हेत्वभावसाध्याभावयोर्व्याप्तिः । (त० दी०) यथा पर्वतो वह्निमान्धूमादित्यादौ यो यो वन्ह्यभाववान्स धूमाभाववानिति । (स्व०)

**व्यतिरेकिहेतुः**[1]—(अवयवः) [क] तथा वैधर्म्यात् । (गौ० १।१।३५) उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् । अनित्यः शब्द उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यम् । यथात्मादि द्रष्टव्यमिति । (वात्स्या० १।१।३५)

[ख] ज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः ।

[ग] अप्रतीतान्वयव्याप्तिकहेतुबोधको हेत्ववयवः । (गौ० वृ० १।३४)

**व्यतिरेक्युदाहरणम्**[2]-(अवयवः) [क] तद्विपर्ययाद्वा विपरीतम् । (गौ० १।१।३७) साध्यवैधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणमिति । अनित्यः शब्द उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यमात्मादि । (वात्स्या० १।१।३७)

[ख] साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणम् । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद्यन्नैवं तन्नैवं यथा घट इति । (गौ० वृ० १।३६)

**व्यतिरेक्युपनयः**[3]—(अवयवः) [क] उदाहरणापेक्षो न तथेति साध्यस्योपसंहारः । (गौ० १।१।३८) साध्यवैधर्म्ययुक्ते पुनरुदाहरणे, आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम् । न च तथा शब्द इत्यनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते । (वात्स्या० १।१।३८) यथा वा, पर्वतो वह्निमान्धूमादित्यादौ वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायम्, इति वाक्यम् । (गौ० वृ० १।३७)

---

१ लक्षणं च व्यतिरेकिहेतुत्वम् । तच्च, [क] व्यतिरेकव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् । [ख] अनुमितिचरमकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकाप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वम् । (चि० अव० २)

२ लक्षणं च व्यतिरेक्युदाहरणत्वम् । तच्च, [क] साध्यसाधनाभावसंबन्धबोधकत्वम् । (चि० अव० २) [ख] व्यतिरेकव्याप्तिबोधकत्वम् । (दीधि० २)

३ लक्षणं च व्यतिरेक्युपनयत्वम् । तच्च, साध्याभावव्यापकीभूताभावप्रतियोगिहेतुविशिष्टपक्षबोधकावयवत्वम् । (चि० अव०)

**व्यधिकरणत्वम्**—१ तदनधिकरणवृत्तित्वम् । (त० प्र०) (मु० २) (गा० चक्र०) यथा कपिसंयोगाभावस्य कपिसंयोगव्यधिकरणत्वम् । (स्व०) २ तदधिकरणावृत्तित्वम् । (मू० म० १) यथा घटत्वाभावस्य घटत्वव्यधिकरणत्वम् । (स्व०) ३ साध्यतावच्छेदकसंबन्धसामान्ये [1]स्वप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तत्[2]कत्वम् । (दीधि० सिद्धा०)

**व्यपदेशः**—[क] शब्दप्रयोगः । (दि० १।२)

[ख] मुख्यव्यवहार इति शाब्दिका वदन्ति ।

**व्यभिचरितत्वम्**—व्यभिचारवदस्यार्थोनुसंधेयः ।

**व्यभि[3]चारः**—(हेतुदोषः) [क] एकत्राव्यवस्था । (वात्स्या० १।२।४६) यथा धूमवान्वह्नेरित्यादौ वह्नेर्धूमव्यभिचारः ।

[ख] साध्याभाववद्वृत्तित्वं, साध्यतावच्छेकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं वा व्यभिचार इत्याधुनिकनैयायिका व्यवहरन्ति । (स्व०)

**व्यभिचारः**—१ कार्यकारणभावभङ्गः । स चान्वयव्यतिरेकव्यभिचारान्यतरः । तथा हि । व्यभिचारो द्विविधः । अन्वयव्यभिचारः । व्यतिरेकव्यभिचारः । तत्राद्यः कारणसत्त्वे कार्याभावात् । द्वितीयः कार्यसत्त्वे कारणाभावात् । (गा०) (?) २ जारकर्म व्यभिचार इति लौकिकजना वदन्ति ।

**व्यभिचारित्वम्**—व्यभिचारवदस्यार्थोनुसंधेयः ।

---

१ स्वपदेनाभावो ग्राह्यः ।

२ इदं च व्यधिकरणत्वं सिद्धान्तसिद्धव्याप्तिघटकाभावनिष्ठं, प्रतियोगिवैयधिकरण्यशब्देन व्यवह्रियत इति विज्ञेयम् ।

3 अत्र च व्यभिचारज्ञानं द्विविधम् । यथार्थम् । अयथार्थम् । तदपि द्विविधम् । निश्चयः । शङ्का । व्यभिचारज्ञानविरहः क्वचित्तर्कात् । क्वचित्स्वतःसिद्ध एव । स यथा, यदा न भ्रमे व्यभिचारज्ञानं तदा । (सि० च०)

**व्यर्थत्वम्**—स्वसमानाधिकरणावश्यक्लृप्तधर्मान्तरघटितत्वम् । यथा प्रमेयत्वविशिष्टसास्नादिमत्त्वस्य गोर्लक्षणत्वे वाच्ये व्यर्थत्वम् । ( स्व० )

**व्यवधानम्**—यत्किंचिद्वस्तूत्तरत्वविशिष्टवस्त्वन्तरपूर्वत्वम्[1] । तच्च द्विविधम् । दिक्कृतं व्यवधानं, कालकृतं चेति । ( स्व० )

**व्यवसायः**— [ क ] इन्द्रियेणावधारणम् । ( वात्स्या० १।१।४ )

[ ख ] सविकल्पकं ज्ञानम् । ( गौ० वृ० १।१।४ ) यथा, अयं घट इति ज्ञानम् । ( स्व० )

**व्यवस्थितिः**— [ क ] अयोगान्ययोगाभ्यां परिच्छेदः । यथा पृथिव्यां गन्धस्य व्यवस्थितिः । भवति हि । पृथिवी गन्धवत्येव । पृथिव्येव गन्धवतीति । ( वै० उ० २।२।२ )

[ ख ] बाधकाभावादवधारणम् । (वै० वि० २।२।२)

**व्यवहारः**—[ क ] शब्दप्रयोगः । (न्या० बो०) ( वाक्य० ) ( सि० च० )

[ ख ] तद्रूपावच्छिन्नबोधकशब्दः । ( नील० ) यथा, अयं गौरिति व्यवहारः । ( स्व० )

**व्याकरणम्**—पूर्वपूर्वव्याकरण(?)शब्दगुणदोषविद्भिरभियुक्तैः प्रकृतिप्रत्ययादिपरिकल्पनया शब्दत्वाख्यायकम् । (चि० ४) यथा, अग्नेर्ढगित्यादि । (स्व०)

**व्यानः**—( वायुः ) नाडीमुखेषु विततनाद्व्यानः । ( दि० १।२ ) ( सि० च० )

**व्यापकत्वम्**—१ [ क ] तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । (न्या० बो०) तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम् । (गा०)

[ ख ] तत्समानाधिकरणा यावन्तो धर्मा यत्समानाधिकरणास्तत्त्वम् । ( न्या० म० ) यथा प्राणित्वस्य मनुष्यत्वव्यापकत्वम् । ( स्व० )

[ ग ] स्वप्रतिबद्धबुद्धिजनकत्वं यत्स्वरूपं तदेव व्यापकत्वमिति प्राञ्चः । ( त० भा० ) २ निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगिता[2]-

---

१ अत्र वस्त्वन्तरपूर्वं च वस्त्वन्तरमपेक्ष्याव्यवहितसंयुक्तसंयोगवत्त्वमित्याद्यूहनीयम् ।

२ प्रतियोगितानवच्छेदकसंबन्धावच्छिन्नप्रतियोगिताको यादृशाभावो लक्षणघटकत्वेनाभिमतस्तस्य प्रतियोगीत्यर्थः ।

सामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नत्वम्[1]। (दीधि० २) (मु० २) यथा पर्वतो वन्हिमान्धूमादित्यादौ वह्नेर्धूमव्यापकत्वम्। (स्व०) ३ येन[2]निरूपितसाध्यतावच्छेदकताघटकसंबन्धसामान्ये प्रतियोगित्वाधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वाभावस्तद[3]न्यत्वम्। (गा० कूट०)

व्यापारः—१ यं जनयित्वैव यस्य यज्जनकत्वं स तद्व्या[4]पारः। (त० प्र० २) यथा लौकिकप्रत्यक्षे चेन्द्रियार्थसंनिकर्षषट्कं[5] व्यापारः। अनुमित्यादौ तु परामर्शादिः। २ [क] प्रवृत्तिविषयः। यथा देवदत्तो ग्रामं गच्छतीत्यादौ धात्वर्थः। (स्व०)

[ख] शाब्दिकास्तु, पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाभिधानविषयो व्यापार इति वदन्ति।

व्याप्तिः[6]—[क] साध्याभाववदवृत्तित्वम्, । साध्यवद्भिन्नसाध्याभाववदवृत्तित्व-

---

१ इदं च, साध्यस्य हेतुव्यापकत्वमिति बोध्यम्।

२ अत्र यत्पदं साध्यतावच्छेदकपरम्।

३ इदं च व्यापकत्वं, प्रतियोगिताव्यापकत्वमिति व्यवह्रियते।
अत्र च वन्हिधूमोभयवान्धूमादित्यादौ यदा पर्याप्तिसंबन्धेनोभयत्वस्य साध्यतावच्छेदकता विवक्षिता, तदाप्यनेन परिष्कारेण निर्वहतीति विज्ञेयम्।

४ तल्लक्षणं च व्यापारत्वम्। तच्चात्र [क] द्रव्यान्यत्वे सति तज्जन्यत्वे च सति तज्जन्यजनकत्वम्। (न्या० म०) (त० दी०) (सि० च०) [ख] शिवादित्यमिश्रास्तु, व्यापारत्वमखण्डोपाधिरित्याहुः। (न्या० म० १)

५ तथा हि। इदं षट्कं चेन्द्रियेण जन्यते, इन्द्रियजन्यं प्रत्यक्षं जनयति चेति व्यापारलक्षणाक्रान्तं भवतीति विज्ञेयम्।

६ सा च, अनुमित्यौपयिकी हेतुनिष्ठा च पूर्वपक्षीया साध्यव्याप्तिरिति बोध्यम्।

७ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणसाध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव इति समुदितार्थः। (न्या० बो०) एतदादीनि पञ्च व्याप्तिलक्षणानि 'पञ्चलक्षणी' इति नैयायिकैर्व्यवह्रियन्ते।

म् ,। साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् ,। सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् , । साध्यवदन्यावृत्तित्वं[1] वा ।

[ ख ] साध्यासामानाधिकरण्यानधिकरणत्वम् । साध्यवैयधिकरण्यानधिकरणत्वम्[2] । ( चि० २ )

[ ग ] यत्समानाधिकरणाः[3] साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम्[4] , । यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं[5] वा ।

[ घ ] व्याप्यवृत्तेर्[6]हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं " हेतुसमानाधिकरणस्य व्याप्यवृत्तेः, प्रतियोगिव्यधिकरणस्य वाभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं " यत्साध्यतावच्छेदकं[7] तदवच्छिन्नसामानाधिकरण्यम् ।

[ ङ ] साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यावच्छेदकस्वसमा-

---

१ साध्यतावच्छेदकसंबन्धावच्छिन्नं यत्साध्यवत्त्वं तदवच्छिन्नप्रतियोगिताकस्यान्योन्याभावस्य स्वप्रतियोगितावच्छेदकवत्त्वबुद्धिविरोधितापटकसंबन्धेन यदधिकरणं तन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकधर्मवत्त्वमिति समुदितार्थः । ( वै० वि०३।१।१४) (मु०)

२ अनयोः प्रथमं लक्षणं सिंहलक्षणं, द्वितीयं तु व्याघ्रलक्षणमित्युच्यते ।

३ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता तदाश्रयसामानाधिकरण्यं यत्र क्वचिद्यावदधिकरणान्तर्भावेन, तत्त्वमिति समुदितार्थः । ( गा० च० )

४ इदं लक्षणं च प्रथमस्वलक्षणमित्युच्यते । अत्र, एतल्लक्षणादीनि चतुर्दश लक्षणानि व्यधिकरणधर्मावच्छिन्नाभावाभिप्रायकानि, चतुर्दशलक्षणीसंज्ञकानि च भवन्तीति बोध्यम् ।

५ इदं च द्वितीयस्वलक्षणमित्युच्यत इति बोध्यम् ।

६ यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तदनवच्छेदकावच्छिन्नसामानाधिकरण्यमिति पर्यवसितोर्थः । ( गा० च० )

७ एतानि त्रीणि लक्षणानि चक्रवर्तिलक्षणानीत्युच्यन्ते ।

८ साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यानतिरिक्तवृत्ति यद्धर्मविशिष्टसमानाधिकरणसाध्याभाववत्त्वं, तद्धर्मवत्त्वमिति समुदितार्थः । ( गा० च० )

नाधिकरणसाध्याभाववत्त्वकत्वम्[1], । यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वम् ।

[ च ] साध्याभाववति[2] यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वम्[3] ।

[ छ ] यावन्तः[4] साध्याभावाः प्रत्येकं तत्तत्सजातीयास्तत्तदधिकरणनिरूपितवृत्तित्वाभावास्तद्वत्त्वम्[5], । यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वम्[5], । यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं[5] वा ।

[ ज ] वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वम्[6], । वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वम्[7] ।

[ झ ] साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वम्[8] ।

[ ञ ] साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति

---

१ एते च द्वे प्रगल्भलक्षणे इत्युच्येते ।

२ यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्तत्त्वमिति समुदितार्थः । ( गा० च० )

३ इदं च विशारदलक्षणमित्युच्यते ।

४ स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्ना यावन्त्यः प्रतियोगिताः, प्रत्येकं तत्तदवच्छेदकावच्छिन्नतदाश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकत्वप्रतियोगितानिरूपकाभावसजातीयाभाववत्त्वमिति समुदितार्थः । ( गा० च० )

५ एतानि त्रीणि मिश्रलक्षणानीत्युच्यन्ते ।

६ इदं च कूटाघटितलक्षणमित्युच्यते ।

७ इदं लक्षणं च कूटघटितलक्षणमित्युच्यते ।

८ इदं लक्षणं च पुच्छलक्षणमित्युच्यते ।

तत्त्वम् । (दीधि० २) यथा वन्हिमान्धूमादित्यादौ धूमनिष्ठा व्याप्तिः । ( ख० )

व्याप्तिः[1] — [क] उपाधिविधुरः[2] संबन्धः । (त० भा०) (सर्व० चार्वा०)

[ख] यद्विशिष्टसमानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तद्वत्त्वम् । (न्या० म० २)

[ग] प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं[3] यन्न भवति तेन समं तस्य सामानाधिकरण्यम्[4] । (चि०)

[घ] विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति, साधने तद्धर्मविशिष्टसामानाधिकरण्यम्, । साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकस्वसामानाधिकरण्यसामा-

---

१ इयं तु, अनुमित्यौपयिकी सिद्धान्तसिद्धा हेतुनिष्ठा च साध्यनिरूपिता व्याप्तिरिति विज्ञेयम् ।

२ अनौपाधिकः संबन्ध इत्यर्थः । अनौपाधिकत्वं तु [ क ] यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम् । [ ख ] यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यम्, इति । ( वै० उ० ३।२।१४ )

३ पर्यवसितार्थश्च [ क ] प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रयोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं*तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिः । (दीधि० २) [ख] यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकताकाधिकरणतावदन्यत्वं हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावतः, तन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताशून्यं यत्साध्यतावच्छेदकं तदवच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिवृत्ति यद्धेतुतावच्छेदकं तद्वत्त्वम् । ( वै० वि० ३।२।१४ ) ( मु० २ ) [ ग ] यद्धर्मविशिष्टानधिकरणत्वं हेत्वधिकरणस्य, तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम् । ( दि० २ )

४ इयमेव सर्वोपसंहारप्रवृत्तव्याप्तिः†इत्युच्यते ।

---

* स्वावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मस्तदवच्छिन्नसामानाधिकरण्यम्, इति फलितोर्थः ( गा० सिद्धा० )

† तदर्थस्तु, सकलहेत्वधिकरणान्तर्भावेन साध्यसत्त्वनिर्वाह्यव्याप्तिः, इति । ( गा० बाध० )

न्याभावत्वकत्वम्। (दीधि०) यथा, यत्र धूमस्तत्राग्निरिति साहचर्य[1]नियमो व्याप्तिः। (त० भा०) (मू० म० १) (भा० प०) (गौ० वृ० २।४८) (मु०२) (त० सं०) व्याप्तिर्हि, अन्वयव्याप्तिव्यतिरेकव्याप्तिभेदेन द्विविधा, साध्यसंबन्धितावच्छेदिका च। वन्हिमान्धूमादित्यादावुभयविधापि व्याप्तिर्धूमे संभवति। केवलान्वयिसाध्यके त्विदं वाच्यं ज्ञेयत्वादित्यादावन्वयव्याप्तिरेव, इति। (स्व०)

**व्याप्यत्वम्**– [क] व्याप्तिः। (मु०) यथा वह्निव्याप्यो धूम इत्यादौ धूमस्य व्याप्यत्वम्। (स्व०)

[ख] व्यभिचारित्वाभावः। यथा सोपाधिको व्याप्यत्वासिद्ध इत्यादौ। (न्या० बो०)

**व्याप्यत्वासिद्धः**[2]–(हेत्वाभासः) यत्र व्याप्तिर्नावगम्यते सः। (त० भा०) व्याप्यत्वासिद्धो द्विविधः[3]। साध्येनासहचरितः। सोपाधिकः[4]साध्यसंबद्धः। प्रथमः, यत्सत्तत्क्षणिकं यथा घनः। संश्च विवादास्पदीभूतः शब्दादिरिति। द्विती-

---

१ समुदितार्थश्च [क]. साहचर्यं सामानाधिकरण्यं तस्य नियमः। हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थः। (त० दी०) [ख] नियतसाहचर्यं व्याप्तिरित्यर्थः। नियतत्वं व्यापकत्वम्। तथा च धूमनियतवन्हिसामानाधिकरण्यम्। (न्या०बो०) [ग] साहचर्यं साध्यनिष्ठहेतुसामानाधिकरण्यम्। तन्नियमस्तन्मात्रसत्त्वम्। तद्विरोध्यसत्त्वमिति यावत्।......तथा च, साध्यनिष्ठहेतुव्यापकत्वं स्वाश्रयसामानाधिकरण्यसंबन्धेन हेतुसंबद्धम्, इति (वाक्य०)

२ स चासिद्धप्रभेद इति बोध्यम्। लक्षणं तु वक्ष्यमाणा व्याप्यत्वासिद्धिरेव।

३ द्वैविध्यमेवोदाहरणान्तरेण विशदयति। तथा हि। व्याप्यत्वासिद्धस्तु द्विधा। एको व्याप्तिग्राहकप्रमाणाभावमात्रात्। अपरस्तूपाधिसद्भावात्। तत्र प्रथमो यथा, यत्सत्तत्क्षणिकं यथा प्रदीपादि। द्वितीयो यथा, क्रत्वन्तर्वर्तिनी हिंसा *अधर्मो हिंसात्वात्क्रतुबाह्यहिंसावदिति। (त० भा०)

४ अत्र च व्याप्यत्वस्यासिद्धिर्यस्मादिति व्युत्पत्त्योपाधिरेव व्याप्यत्वासिद्धिस्तद्वानित्यर्थः। (वाक्य०)

---

* अत्र निषिद्धत्वमुपाधिः। (त० भा०)

यः, पर्वतो धूमवान्वह्निमत्त्वा[1]दित्यत्र वन्हिमत्त्वम् । (त० सं०) (त० भा०)

**व्याप्यत्वासिद्धिः**—(हेतुदोषः) १ अव्यभिचरितसामानाधिकरण्यस्याभावः । (गौ० वृ० १।४८) यथा धूमवान्वन्हेरित्यादौ । (स्व०) २ क्वचित्, व्यर्थविशेषणघटितं[2] हेतुतावच्छेदकम् । (वै० वि० ३।१।१५) यथा पर्वतो वन्हिमान्नीलधूमात्प्रमेयधूमाद्वेत्यादौ नीलधूमत्वादिकं व्यर्थविशेषणघटिततया व्याप्यत्वासिद्धिः । ३ क्वचित्, साधनतावच्छेदके व्याप्यतानवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिरित्यपि केचिद्वदन्ति । (गौ० वृ० १।४८) (मु०) (वै० वि० ३।१।१५) यथा पर्वतो वन्हिमान्नील[3]धूमात्, देशो वन्हिमान्कम्बुग्रीवा[3]दिमत इत्यादौ नीलधूमत्वस्य कम्बुग्रीवादिमत्त्वादेश्च गुरुतया व्याप्यतानवच्छेदकत्वं व्याप्यत्वासिद्धिः । (स्व०) व्याप्यत्वासिद्धिश्च साध्याप्रसिद्धिसाधनाप्रसिद्ध्यादिभेदेनानेकविधा । (गौ० वृ० १।४८) (मु०) (वै० वि० ३।१।१५)

**व्याप्यवृत्तित्वम्**—[क] स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । (दीधि०)

[ख] अनवच्छिन्नाधारताकत्वम् । (गा० पक्ष०)

[ग] निरवच्छिन्नवृत्तिकत्वम् । (गा० चक्र०) यथा घटत्वद्रव्यत्वादीनां व्याप्यवृत्तित्वम् । (स्व०)

---

१ अत्रार्द्रेन्धनसंयोग उपाधिः, व्यभिचारितासंबन्धेन तद्विशिष्टं वह्निमत्त्वमिति भावः । (वाक्य०) अत्रानुमानप्रकारश्च, वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचरितत्वाद्घटत्वादिवत्, यो यद्व्यापकव्यभिचारी सोऽपि तद्व्यभिचारी, इति बोध्यः । (न्या० बो०)

२ स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितमित्यर्थः ।

३ अत्रायमाशयः । व्याप्तिर्हि साध्यसंबन्धितावच्छेदकरूपा । गुरुधर्मश्च साध्यसंबन्धितानवच्छेदकः । अतो नीलधूमत्वादेः साध्यसंबन्धितानवच्छेदकत्वान्न *व्याप्तिस्वरूपत्वमिति । (गौ० वृ० १।४८)

---

* अत्र प्राञ्च एतन्नाङ्गीकुर्वन्ति । तथा हि । व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः । पुरुषस्त्वधिकेन निगृह्यत इति । (दि० २) अत्रायमभिप्रायः । गुरुधर्मस्य हेतुतावच्छेदकत्वस्थले सर्वत्र प्राचीनैर्व्याप्यत्वासिद्धिर्नाङ्गीक्रियते । अपि तु स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्थल एवेति । (राम०)

**व्यावर्तकम्**—१ आश्रयाणां परस्परभेदानुमितिजनकम् । यथा विशेषस्तत्तत्परमाणुव्यावर्तकः । ( वाक्य० ) यथा वा सास्नादिमत्त्वं महिष्यादिव्यावर्तकम् । ( स्व० ) २ क्वचित् , विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगि । तच्च व्यावर्तकं द्विविधम् । विशेषणम् । उपलक्षणम् । आद्यं यथा, पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिः । द्वितीयं यथा, जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीयजटादिकम् । ( गा० व्यु० ३ )

**व्यावृत्तत्वम्**—१ [ क ] अवृत्तित्वम् ।

[ ख ] विरोधः । यथा धूमधूमाभाववद्व्यावृत्तवह्निमानित्यादौ । ( गा० स०व्य० ) २ क्वचित् , [क] अन्योन्याभावप्रतियोगित्वम्[1] । यथा नराणां क्षत्रियः शूरो, नरेषु वेत्यत्र निर्धारणविभक्त्यर्थः ।

[ ख ] अत्यन्ताभावप्रतियोगित्वम्[2] । यथा नराणां क्षत्रिये शौर्यं, नरेषु वेत्यत्र निर्धारणविभक्त्यर्थः । ( गा० व्यु० ६ ) ३ इतरभेदानुमितिविशेष्यत्वम् । यथा गौरितरेभ्यो भिद्यत इत्यादौ गोव्यावृत्तत्वम् । ( स्व० )

**व्यावृत्तिः**—१ [ क ] इतरभेदः । ( त० दी० )

[ ख ] इतरभेदानुमितिः । ( वाक्य० ) यथा गौरितरेभ्यो भिद्यते सास्नादिमत्त्वादित्यादौ गौरितरेभ्यो भिद्यत इति । २ प्रयोजनम् । यथा, एतद्विशेषणदानस्य व्यावृत्तिः कथ्यत इत्यादौ । ( स्व० )

**व्यासङ्गः**—[ क ] मनसो विषयान्तरासक्तत्वम् । ( स्व० )

[ ख ] इन्द्रियाणां स्वस्वविषयसंबन्धे सति यत्किंचिदिन्द्रियजन्यज्ञाने सत्यपीन्द्रियान्तरजन्यज्ञानाभव इति केचिद्वदन्ति ।

**व्यासज्यवृत्तित्वम्**—१ स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्[3] । ( गा०

---

१ इदं च, अभेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् । ( गा० व्यु० ६ )

२ इदं तु भेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् ( गा० व्यु० ६ )

३ समानाधिकरणभेदप्रतियोगितावच्छेदकत्वनादात्म्यैतदुभयसंबन्धेन यत्किंचित्पदार्थविशिष्टत्वमित्यर्थः ।

मिश्र० ) यथा, उभयत्वस्य व्यासज्यवृत्तित्वम् । २ अपेक्षाबुद्धिविशेषविषयत्वम् । यथा, द्वित्वत्रित्वादीनां व्यासज्यवृत्तित्वम् । ( स्व० )

**व्युत्पत्तिः**–१ [ क ] यां बुद्धिमासाद्य पदार्थविशेषबोधः सा । ( चि० ३ ) [ ख ] शब्दशक्तिग्रहः । ( नील० ) यथा, पदस्यार्थः पदार्थ इति व्युत्पत्तिः । ( त० दी० ) २ व्यवहारः । यथा, लोकव्युत्पत्तिरित्यत्र । ( नील० ) ३ नियमः । यथा, पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिरित्यादौ । ( स्व० )

**व्यूहः**–१ निःश्वासादिः । ( गौ० वृ० ३।३१ ) यथा, मतान्तरे मानुषादिशरीरपरीक्षणे, गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्, इत्यत्र । ( गौ० ३।३१ ) २ प्रतिहतस्य परावर्तनम् । ( गौ० वृ० ४।८७ ) यथा, अव्यूहाविष्टम्भविभुत्वान्याकाशधर्माः, इत्यत्र । ( गौ० ४।८७ ) ३ वासुदेवसंकर्षणप्रद्युम्नानिरुद्धसंज्ञकश्चतुर्विधो व्यूह इति रामानुजीया वदन्ति । ( सर्व० रामा० )

## श.

**शक्तम्**–निरूपकतासंबन्धेन शक्तिमत्त्वम् । यथा घटपटादिपदानां शक्तत्वम् । ( न्या० बो० ) ( वाक्य० )

**शक्तिः**–प्रतिबन्धकाभावादिरूपकारणत्वम् । ( त० दी० ) यथा वह्नौ दाहानुकूला शक्तिः । ( स्व० ) शक्तिः पदार्थान्तरमेव, न तु कारणत्वमिति प्राभाकरा आहुः । ( नील० )

**शक्तिः**[1]–( संकेतः ) अर्थस्मृत्यनुकूलः पदपदार्थसंबन्धः । स च 'इदं पदममुमर्थं बोधयतु, अस्मात्पदादयमर्थो बोद्धव्यः'[3] इतीश्वरसंकेतः[4] । ( गा० श० ) ( मु० ४ ) ( त० सं० ४ ) ( त० दी० ) ( न्या० बो० ) यथा

---

१ शक्तिश्चात्र, वक्ष्यमाणा पदशक्तिर्ग्राह्या ।

२ सा च, पदशक्तिः शाब्दबोधप्रयोजिका चेति विज्ञेयम् ।

३ एतत्पदजन्यबोधविषयोयमर्थ इत्याकारकेश्वरेच्छा शक्तिरित्यर्थः । ( नील० )

४ अत्र, संकेतो नामेच्छा । ( न्या० बो० )

घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः ।(न्या० बो०) इच्छामात्रं शक्तिरिति नव्या आहुः । (मु० ४) (वात्स्या० २।१।५४) मीमांसकास्तु, अभिधानाम पदार्थान्तरं संकेतग्राह्यं शक्तिरित्याहुः । (न्या० म०) (त० दी०) पदपदार्थयोः संबन्धान्तरं शक्तिरिति शाब्दिका वदन्ति । शक्तिस्त्रिविधा[1] । योगः । रूढिः । योगरूढिः । तत्राद्या पाचकादिपदेषु । द्वितीया घटादिपदेषु । तृतीया पङ्कजादिपदेषु । (त० दी०) प्राभाकरास्त्वेवं शक्तिं विभजन्ते । शक्तिर्द्विविधा । अनुभाविका । स्मारिका । तत्राद्या कार्यत्वान्विते । द्वितीया तु जातौ, इति । (न्या० म० ४) (दि० ४) तत्तन्मते तत्तदर्थेषु पदानां शक्तेर्दिगिदानीं प्रदर्श्यते । गवादिपदानां, जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति नैयायिकाः प्राहुः । व्यक्तावेव शक्तिरिति नव्याः । जात्याकृतिव्यक्तिषु तिसृषु शक्तिरिति शाब्दिकाः । जातावेव शक्तिर्व्यक्तिलाभस्त्वाक्षेपादिति भट्टादयो मीमांसकाः । कार्यत्वान्वितव्यक्तौ शक्तिरिति प्राभाकराः, इति । धातोश्च, फलावच्छिन्नव्यापारे शक्तिरिति नैयायिकाः प्राहुः । फले व्यापारे च शक्तिरिति शाब्दिकाः । फल एव शक्तिरिति मीमांसकाः । व्यापारे शक्तिरिति रत्नकोशकृत्, इति । आख्यातस्य तु, कृतौ शक्तिरिति नैयायिकाः प्राहुः । कर्तरि शक्तिरिति शाब्दिकाः । व्यापारमात्रे शक्तिरिति मीमांसकाः । उत्पादकतायां शक्तिरिति रत्नकोशकृत्, इति । शिष्टं च समयशब्दव्याख्यानावसरे संपादनीयमित्यत्रैव विरम्यते ।

**शक्यत्वम्**—विषयतासंबन्धेन शक्त्याश्रयत्वम् । (न्या० बो०) यथा गवादेर्गोपदशक्यत्वम् । (स्व०)

**शब्दः**[2]—(गुणः) [क] श्रोत्रग्रहणो योर्थः स शब्दः । (वै० २।२।२१)

---

१ अत्र यौगिकरूढिस्तुरीयापि शक्तिरस्तीति केचिद्वदन्ति ।

२ तल्लक्षणं च श्रोत्रग्राह्यगुणविभाजकधर्मवत्त्वम् । (वाक्य०) शब्दस्त्वाकाशमात्रवृत्तिर्बाह्यैकेन्द्रियग्राह्यश्चेति नैयायिकराद्धान्तः। पृथिव्यादिषु पञ्चसु शब्दस्तिष्ठतीति सांख्या वेदान्तिनश्चाहुः ।(सि० च०)

[ ख ] श्रोत्रग्राह्यो गुणः । स द्विविधः । ध्वन्यात्मकः । वर्णात्मकः । तत्राद्यो भेर्यादौ प्रसिद्धः । द्वितीयः संस्कृतभाषादिरूपः शब्दः[1] । ध्वन्यात्मकवर्णात्मकावपि प्रत्येकं त्रिविधौ । संयोगजौ, विभागजौ, शब्दजौ चेति । तत्राद्यो, भेरीदण्डसंयोगाद्ध्वन्यात्मकः । वायुकण्ठसंयोगाद्वर्णात्मकश्च । द्वितीयौ, वंशे पाट्यमाने दलद्वयविभागात् 'चटचटात्मकः' ध्वन्यात्मकः । ओष्ठद्वयविभागाद्वर्णात्मकश्च । तृतीयौ च, द्वितीयशब्दादिचरमशब्दान्तौ चेति । वर्णात्मकः पुनर्द्विविधः । प्रमाणशब्दः[2] । अप्रमाणशब्दः । तत्राद्य आप्तोपदेशः[3] । सोपि द्विविधः । लौकिकः । वैदिकः । तत्राद्यो घटमानयेत्यादिरूपः । द्वितीयस्त्रिविधः । विधिः । मन्त्रः । अर्थवादश्चेति । प्रकारान्तरेणापि प्रमाणशब्दो द्विविधः । दृष्टार्थः । अदृष्टार्थः । तत्राद्यो घटोस्तीत्यादिरूपः । द्वितीयः स्वर्गनरकादिशब्दः । अप्रमाणशब्दस्तु, वन्हिना सिंचेत्, गौरश्वः, पुरुषो, हस्तीत्यादिरूप इति । शब्दो द्रव्यमिति भट्टा आहुः । शब्दो नित्य इति शाब्दिकमीमांसकादयः । अनित्य[4] इति नैयायिकाः प्राहुः । ( गौ० १।१।८ ) ( २।८१ ) ( वात्स्या० ) ( सर्व० ) ( चि० ४ ) ( त० सं० ) ( सि० च० ) ( त० दी० ) ( नील० )

**शब्दपुनरुक्तम्**–( निग्रहस्थानम् ) [ क ] शब्दस्य पुनर्वचनमन्यत्रानुवादात् । ( गौ० ५।२।१४ )

---

१ अत्रेयं व्युत्पत्तिः, शब्द्यतेनेनार्थ इत्यभिधीयते ज्ञाप्यत इति । ( वात्स्या० १।१।३ )

२ तल्लक्षणं तु प्रमाणशब्दत्वमेव । तच्च [ क ] शाब्दप्रमितिकरणत्वम् । ( न्या० म० ४) [ ख ] प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यजन्यवाक्यत्वम् । ( वाक्य० ४ ) [ ग ] प्रमोत्पादकशब्दत्वमिति मीमांसका वदन्ति । ( मू० म० १)

३ तदर्थश्च [ क ] यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः । ( वात्स्या० १।१।७ ) [ ख ] प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः । ( चि० ४ ) ( गौ० वृ० १।१।७ )

४ शब्दस्यानित्यत्वे प्रमाणमनुमानम् । तच्च, शब्दोनित्यः सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाल्लौकिकप्रत्यक्षविशेष्यत्वाद्वा घटवदिति । ( गौ० वृ० २।८१ )

[ ख ] समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः । यथा घटो घट इति । ( गौ० वृ० ५।५७ ) यथा वा, नित्यः शब्दो नित्यः शब्द इति । ( वात्स्या० ५।२।१४ )

शब्दाध्याहारः–( अध्याहारः ) आकाङ्क्षितशब्दानुसंधानम् । ( नील० ) यथा पिधेहीत्युक्ते[1] 'द्वारम्' इति द्वितीयान्तपदाध्याहारः । ( स्व० )

शब्दार्थः–अर्थशब्दव्याख्यानावसरेऽस्य प्रपञ्चः संपादितः । (चि०) (गा०श०)

शब्दोपजीवि–( प्रमाणम् ) शब्दसहकृतेन येन प्रमितिर्जन्यते तत् । (कु० ५) यथा स्मृतिपुराणादि[2] । ( स्व० )

शरीरम्[3]–[ क ] चेष्टेन्द्रियार्थाश्रयः । ( गौ० १।१।११ ) ( त० भा० ) [ ख ] आत्मनो भोगायतनम्[4] । ( वात्स्या० १।१।९ ) ( त० भा० ) (त० दी० ) ( वाक्य० ) यथास्मदादीनां पार्थिवशरीरम् । ( त० सं० ) शरीरं द्विविधम् । योनिजमयोनिजं[5] च । ( वै० ४।२।५ ) योनिजमयोनिजं च पार्थिवशरीरम् । आप्यं तैजसं वायवीयं चायोनिजमेव । (वै०उ० ४।२।१.१) तत्र योनिजं पार्थिवशरीरं द्विविधम् । जरायुजम् । अण्डजम् । जरायुजं मानुषपशुमृगाणाम् । अण्डजं पक्षिसरीसृपाणाम् । अयोनिजं पार्थिवशरीरं[6] च त्रिविधम् । स्वेदजम् । उद्भिज्जम् । अदृष्टविशेषजन्यम् ।

---

१ अत्राप्यर्थाध्याहार एव, न तु पदाध्याहारः कर्तव्य इत्यन्ये वदन्ति ।

२ तत्तु वेदोपजीवि प्रमाणं भवतीति बोध्यम् ।

३ तल्लक्षणं च शरीरत्वम् । तच्च, [क] प्रयत्नवदात्मसंयोगासमवायिकारणवत्क्रियावदन्त्यावयवित्वम् । ( वै० उ० ४।२।१ ) [ख] अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वम् । ( वै०वि० ४।२।१ ) ( गौ० वृ० १।११ ) [ग] अवच्छेदकतासंबन्धेन भोगाश्रयत्वम् । ( वाक्य० ) जीवशरीरलक्षणं तु, आत्मविशेषगुणजनकमनःसंयोगावच्छेदकत्वम् । ( त० भा० )

४ यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनमित्यर्थः । ( त० दी० )

५ अयोनिजत्वं च शुक्रशोणितसंनिपातानपेक्षत्वम् । ( वै० उ० ४।२।५ )

६ अत्रेदं बोध्यम् । तच्छरीराणामुत्पत्तिर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीक्रियते, इति । ( दि० १)

तत्र स्वेदजं शरीरं यूकालिक्षादीनाम् । उद्भिज्जं वृक्षादीनाम्[१] । अदृष्टविशेषजन्यं मन्वादीनाम्[२] । (वै० उ० ४।२।५) (मु० १) (सि० च०)

**शाठसमः**[३]–(जातिः) त्वत्पक्षे किंचिद्दूषणं भविष्यतीति शङ्का । (गौ०वृ०५।३७)

**शाब्दज्ञानम्**–शाब्दबोधवदस्यार्थोनुसंधेयः ।

**शाब्दबोधः**[४]–पदज्ञानकरणकं ज्ञानम् । (मु०) तच्च वाक्यार्थज्ञानम्[५] । (त० सं० ४) यथा गामानयेति वाक्यजन्यः[६] 'गोकर्मकानयनानुकूलकृतिमांस्त्वम्' इति शाब्दबोधः । (वाक्य० ४)

**शिक्षा**–[क] स्वकर्तव्यत्वेन ज्ञानम् । (राम०)

---

१ यद्यपि वृक्षादीनां शरीरत्व*मस्त्येव । तथापि चेष्टावत्त्वमिन्द्रियवत्त्वं च नोद्भिदां स्फुटतरमतो न शरीरव्यवहारः (वै० उ० ४।२।५)

२ अत्र प्रमाणमागमः । स च, प्रजापतिः प्रजा अनेका असृजत् । स तपोतप्यत । प्रजाः सृजेयमिति । स मुखतो ब्राह्मणमसृजत् । बाहुभ्यां राजन्यम् । ऊरुभ्यां वैश्यम् । पद्भ्यां शूद्रम्, इति । (वै० उ० ४।२।११)

३ अयं शाठसमश्च सूत्रानुक्तोपि 'कार्यसमप्रभेदः' इति वृत्तिकृता प्रतिपाद्यत इति विज्ञेयम् ।

४ तत्र शाब्दत्वं च [क] शब्दात्प्रत्येमीत्यनुभवसिद्धो जातिविशेषः । [ख] जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वव्यापकजातिशून्यत्वे सति पदविषयकत्वाव्यभिचारिजातिशून्यधीत्वम् । (न्या०म०२) शाब्दलक्षणं तु शक्तिलक्षणान्यतरसंबन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । (वाक्य० ४)

५ एकपदार्थेपरपदार्थसंसर्गविषयकं ज्ञानमित्यर्थः । (वाक्य० ४)

६ अत्रेयं शाब्दबोधप्रक्रिया । प्रथमं गवादिपदानां गवादौ 'गवादिर्गवादिपदशक्यो, लक्ष्यो वा' इति संबन्धज्ञानम् । ततः कालान्तरे केनचित् 'गामानय त्वम्' इत्युक्ते गवादिपदेभ्यो गवादीनर्थान्स्मरति । आकाङ्क्षादिज्ञानतस्तदनन्तरं 'गोकर्मकानयनानुकूलकृतिमांस्त्वम्' इति शाब्दबुद्धिर्जायत इति । (वाक्य०)

---

* वृक्षादीनां शरीरत्वे प्रमाणं प्रदर्श्यते । तेषां शरीरत्वोपपादकं भोगाधिष्ठानत्वम् । भोगोपपादकः प्राणवायुः । तदुपपादकं तु वृद्धिक्षतभग्नसंरोहणादिकमिति ।

आगमोप्यस्ति प्रमाणम् । नर्मदातीरसंभूताः सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिम् ॥ गुरुं हुंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥ इत्यादि । (वै० उ० ४।२।५) (दि० १।२)

[ ख ] प्रवृत्तिप्रयोजकेष्टसाधनताज्ञानम्। यथा शिष्यशिक्षार्थं मङ्गलं निबध्नातीत्यादौ शिक्षा। ( स्व० )

**शिथिलः**—प्रचयवदस्यार्थोनुसंधेयः। ( भा० प० गु० )

**शिष्टः**—१ फलसाधनत्वांशे भ्रान्तिरहितः, । ( दि० १ ) इष्टसाधनत्वांशेभ्रान्तः। ( मू० म० १ ) यथा शुकोद्दालकादिः। ( स्व० ) २ स्वीकृतवेदप्रमाणभावः[1], । वेदनिषिद्धाकर्ता, । ( चि० १ ) वेदोक्ततत्त्वज्ञानेन[2] विहितकर्मकारी। ( नील० ) ( सि० च० ) यथा जनकश्वेतकेत्वादिः। ( स्व० )

**शुद्धिः**—भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसंहितभस्मादिसंयोगध्वंसः[3][4][5]। यथा भस्मना कांस्यादिपात्रशुद्धिः। ( त० दी० ) एवं शुद्ध्यन्तरमपि स्वयमूह्यम्। ( स्व० )

**शेषः**—१ इतरनिवृत्तिपूर्वकत्वेनावस्थितो यःकश्चिद्वस्तुविशेषः। ( स्व० ) यथा, ऋत्विजो हविःशेषान्भक्षयन्तीत्यादौ। २ उपयुक्तादन्यो[6] यः कश्चित्। यथा, ज्येष्ठ एव तु गृह्णीयादित्युपक्रम्य, शेषास्तमुपजीवेयुरित्यादौ। ( स्व० )

**शेषवत्**[7]—( अनुमानम् ) १ यत्र कार्येण कारणमनुमीयते तत्। यथा पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोनुमीयते, भूता

---

१ यावद्वेदविशेष्यक 'सर्वे वेदाः स्वस्वतात्पर्यविषयार्थे प्रमाणम्।' इत्याकारकानाहार्यनिश्चयवानित्यर्थः। ( मू० म० १ ) अत्र बालकवनितान्त्यजात्यतिरिक्त इति विशेषणमस्ति। ( मू० म० १ )

२ अत्र भक्तिश्रद्धादिभिरिति पाठोस्ति। ( सि० च० )

३ कालीनान्तं यावत्त्वं चाभावविशेषणम्। तादृशाभावसाहित्यं च ध्वंसविशेषणमिति बोध्यम्।

४ साहित्यं चात्र संबन्धविशेषनियन्त्रितसामानाधिकरण्यम्। ( नील० )

५ स च पात्रादिशुद्धिस्वरूप इति बोध्यम्।

६ अत्र शाब्दिकाः, कारकप्रातिपदिकार्थातिरिक्तः स्वस्वामिभावादिरूपसंबन्धः शेषः। यथा राज्ञः पुरुषः, चैत्रस्य वास इत्यादौ षष्ठ्यर्थ इत्याहुः। ( गा० व्यु० ६ ) एवं, शेषान्तरमपि स्वयमूह्यम्।

७ अत्रेदमपि विज्ञेयम्। शेषः कार्यम्। तल्लिङ्गकं शेषवत्। यथा नदीवृद्ध्या वृष्ट्यनुमानम्। अथवा, शेषो व्यतिरेकः। तद्वत्केवलव्यतिरेकीत्यर्थः। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादि। ( गौ० वृ० १।५ )

वृष्टिरिति । २ परिशेषः । ....यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये, न द्रव्यमेकद्रव्यत्वात् । न कर्म शब्दान्तरहेतुत्वात् । यस्तु शिष्यते सोयमिति शब्दस्य गुणत्वप्रतिपत्तिः । (वात्स्या० १।१।५)

**शोकः**—इष्टवियोगे तल्लाभानर्हताज्ञानम् । (गौ० वृ० ४।३) यथा, निवसति तरुणी ते कोक शोकं विमुञ्च, इत्यादौ । (स्व०)

**श्रद्धा**—[क] फलावश्यंभावनिश्चयः । (त० प्र०) (सि० च०) यथा, कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यतीत्यादौ । (स्व०)

[ख] आस्तिक्यबुद्धिरिति पौराणिका वदन्ति ।

**श्रवणम्**—श्रोत्रेन्द्रियजन्यं शब्दविषयकं ज्ञानम् । यथा, श्रूयते सुपुरुषचरितं किं तद्ये न हरन्ति काव्यालापा इत्यादौ । (स्व०)

**श्रुतिः**—(वेदः) निरपेक्षो रवः । सा त्रिविधा । विधात्री । अभिधात्री । विनियोक्त्री चेति । तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री । यथा व्रीहिभिर्यजेतेति । (लौ० भा०)

**श्रोत्रम्**—(इन्द्रियम्) शब्दोपलब्धिसाधनमिन्द्रियम् । (त० भा०) यथा विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नो नभोदेशः (वै० उ० ८।२।६) (त० भा० प्रमे०) (त० सं०)

## स.

**संकरः**—१ परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः[२] । यथा

---

१ स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणाभावप्रतियोगित्वैतत्त्रितयसंबन्धेन यत्किंचिज्जातिविशिष्टत्वं समुदितार्थ इति गुरुचरणाः प्राहुः ।

२ अयं संकरश्च जातित्वे बाधक इति विज्ञेयम् । (नील०)

भूतत्वस्य[1] मूर्तत्वादिना संकरः । ( दि० १ ) २ धर्मान्तरस्य समावेशः । यथा काञ्चनमयह्रदो वन्हिमान्धूमादित्यादौ[2] धूमरूपहेतौ बाधातिरिक्ताया आश्रयासिद्धेरपि समावेशः । ( स्व० )

**संकल्पः**—ज्ञानविशेषः, इच्छाविशेषो वा । यथा, न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चनेत्यादौ । ( स्व० )

**संकीर्णत्वम्**—संकरवदस्यार्थोनुसंधेयः ।

**संकेतः**( वृत्तिः ) इदं पदममुमर्थं बोधयत्विति, अस्मात्पदादयमर्थो बोद्धव्य इति चेच्छा । ( चि० ४ ) ( गा० श० ) ( त० प्र० ) ( न्या० बो० ) संकेतो द्विविधः । आधुनिकसंकेतः । ईश्वरसंकेतः । तत्राद्यः परिभाषेत्युच्यते[3] । द्वितीयः शक्तिरित्युच्यते । ( गा० श० ) ( वै० वि० ७।२।२० )

**संक्षेपः**—लघुत्ववदस्यार्थोनुसंधेयः । ( गा० अव० ) संक्षेपो द्विविधः । शब्दसंक्षेपः । अर्थसंक्षेपः । ( राम० )

**संख्या**[4]—१ ( गुणः ) [ क ] एकत्वादिव्यवहारहेतुः । सा च नवद्रव्यवृत्तिः, एकत्वादिपरार्धपर्यन्ता[5] । ( त० सं० )

[ ख ] नियतविषयपरिच्छेदहेतुः संख्येति शाब्दिका वदन्ति । २ ज्ञानविशेषः । यथा सांख्य इत्यादौ । ( स्व० )

**संगतिः**[6]—[ क ] आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः ।

---

१ तथाहि । मनोन्तर्भावेनाकाशान्तर्भावेन च परस्परं स्वस्वात्यन्ताभावसमानाधिकरणयोर्भूतत्वमूर्तत्वयोः पृथिव्यादिचतुष्टये समावेश इति भूतत्वं न जातिरिति विज्ञेयम् ।

२ अत्रेयमभियुक्तोक्तिः । उपधेयसांकर्येप्युपाध्यसंकरः, इति । ( चि० ) ( गा० सामा० )

३ इदं च प्राचीनमताभिप्रायेण । नव्यमते च परिभाषापि शक्तिरित्युच्यत इति बोध्यम् ।

४ सा तु चक्षुरिन्द्रियेण त्वगिन्द्रियेण च गृह्यते । संख्याप्रपञ्चस्तु ( वै० उ० ७।२।८ ) तत्र द्रष्टव्यः ।

५ तदुक्तम् । एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्, इति ॥ ( सि० च० )

६ संगतिश्च, कस्यचिद्वस्तुनो निरूपणे*ह्युपयुज्यते । अत्र व्याप्तिरप्यनुसंधेया, यद्यदनन्तरं निरूप्यं भवति तत्तत्संगतं भवतीति । ( राम० )

---

* अत्र प्रमाणं च ' नासंगतं प्रयुञ्जीत ' इत्यभियुक्तोक्तिः । ( राम० )

(दीधि० २) यथा सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणे व्याप्तिपक्षधर्मत्वविरहः संगतिः । (स्व०)

[ख] अनन्तराभिधानप्रयोजकजिज्ञासाजनकं यत्संगतिनिरूपकज्ञानप्रयोज्यं ज्ञानं तद्विषयस्मरणानुकूलसंवन्धः । यथा प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे संगतिश्चानुमाननिष्ठं प्रत्यक्षकार्यत्वम् । संगतिः षड्विधा[1] । प्रसङ्गः । उपोद्घातः । हेतुत्वम् । अवसरः । निर्वाहकैक्यम् । कार्यैक्यम्, इति । (राम०)

**संग्रहः**—१ संक्षेपेण स्वरूपकथनम्[2] । यथा तर्कसंग्रह इत्यादौ । (त० दी०)

२ अनेकेषामेकत्र स्थापनं संग्रह इति काव्यज्ञा वदन्ति ।

**संज्ञा**—१ पदम् । यथा संज्ञासंज्ञिसंवन्धज्ञानमुपमितिरित्यादौ गवयादिशब्दः संज्ञा । (नील०) २ [क] संकेतवदस्यार्थोनुसंधेयः । (वै० उ० २।१।१८)

[ख] नदीवृद्धीत्यादिर्नामापरपर्यायः संकेतविशेष इति शाब्दिका आहुः ।

**संज्ञी**—शब्दार्थः । यथा, संज्ञासंज्ञिसंवन्धज्ञानमुपमितिरित्यादौ गवयादिरूपोर्थः संज्ञी । (नील०)

**संतानः**—१ एकधर्मावच्छिन्नत्वेन ज्ञानम् । (गौ० वृ० २।८४) यथा बौद्धमते, आलयविज्ञानसंतानः । २ वंश इति काव्यज्ञा वदन्ति ।

**संदिग्धानैकान्तिकत्वम्**—[क] पक्षांशे साध्याभावसंशयात्मकपक्षवृत्तित्वावगाहि व्यभिचारज्ञानम् ।

[ख] हेतौ[3] व्यभिचारसंशयः । (गा० वाध०) यथा धूमो वन्ह्यभाववद्वृत्तिर्न वेत्यादिसंशयः । (स्व०)

**संनिकर्षः**—१ इन्द्रियार्थसंनिकर्षवदस्यार्थोनुसंधेयः । २ संनिकृष्टत्ववदस्यार्थोनुसंधेयः । (वै० उ० ७।२।२१)

---

१ तदुक्तम् । सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैक्यकार्यैक्ये षोढा संगतिरिष्यते, इति ॥ (राम०)

२ लक्षणस्वरूपविभागप्रकारकज्ञानानुकूलः संक्षिप्तो व्यापार इत्यर्थः । (वाक्य०)

3 तदुक्तम् । विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोब्रवीत्, इति । (वै० उ० ३।१।१५)

संनिकृष्टत्वम्—[1] १ [ क ] संयुक्तसंयोगाल्पत्वम्[2] ।

[ ख ] अल्पसंयोगान्तरितत्वम्[2] । ( वै० उ० ७।२।२१ ) यथा पञ्चवटयास्त्र्यम्बकेश्वरमपेक्ष्य जनस्थानसंनिकृष्टत्वम् । ( स्व० ) २ अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वम्[3] । ( वै० उ० ७।२।२१ ) यथा युधिष्ठिरमपेक्ष्य भीमस्य संनिकृष्टत्वम् । ( स्व० ) शिष्टं च अपरत्वशब्दव्याख्यानावसरे संपादितमित्यत्रैव विरम्यते ।

संनिधिः—आसत्तिवदस्यार्थोनुसंधेयः ।

संनिहितत्वम्—१ संनिकृष्टत्ववदस्यार्थोनुसंधेयः । २ आसत्तिवदस्यार्थोनुसंधेयः ।

संपत्तिः—१ ज्ञानम् । २ प्राप्तिः । ३ भ्रमात्मकं ज्ञानमिति मायावादिनः । ४ ऐश्वर्यमिति काव्यज्ञा वदन्ति ।

संप्रतिपत्तिः—१ निश्चयः । ( गौ० वृ० २।३ ) ( वै० उ० २।२।३५ ) २ उत्पत्तिः । ( गौ० वृ० ३।१९ )

संप्रदानत्वम्—[क] क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वम् । ( गा० व्यु० २ ) [ ख ] धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धविशिष्टतयेष्टत्वम् । यथा ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणस्य संप्रदानत्वम् । ( गा० व्यु० ४ ) [ ग ] प्रकृतधात्वर्थे यत्कर्म तत्संबन्धित्वेनेच्छोद्देश्यत्वमिति शाब्दिका वदन्ति । संप्रदानं त्रिविधम्[4] । प्रेरकम् । अनुमन्तृ । उदासीनं चेति । तत्राद्यं, विप्राय गां ददातीत्यादौ । द्वितीयं उपाध्यायाय गां ददातीत्यादौ । तृतीयं च, सूर्यायार्घ्यं ददाति[5]त्यादौ । ( स्व० )

---

१ संनिकृष्टत्वबुद्धिरपरत्वे निमित्तकारणमिति बोध्यम् । ( वै० उ० ७।२।२१ )

२ तच्च, दिक्कृतं संनिकृष्टत्वमिति विज्ञेयम् ।

३ तच्च, कालकृतं संनिकृष्टत्वमिति विज्ञेयम् ।

४ तदुक्तं वाक्यपदीये । अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम्, इति ॥

५ नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति, इति सूर्यस्योदासीनता विज्ञेया ।

**संबन्धः**[1]–[ क ] संबन्धिभिन्नत्वे सति संबन्ध्याश्रितः, । स्वभिन्नसंबन्ध्याश्रितः स्वाभिन्नप्रतियोगिकः । (सि० च०) यथा घटभूतलयोः संयोगः । (स्व०) [ ख ) सांसर्गिकविषयतावान् । ( राम० ) यथा घटवद्भूतलमिति प्रत्यक्षे संयोगः । ( स्व० ) संबन्धस्तु संयोगसमवायस्वरूपकालिकादिभेदेन विषयविषयिभावप्रतियोग्यनुयोगिभावाधाराधेयभावस्वस्वामिभावतादात्म्यादिभेदेन चानेकविधः । (गा० व्यु०१) तत्र समवायादिर्वृत्तिनियामको भवति । विषयविषयिभावादिस्तु वृत्त्यनियामक इति । क्वचित्संबन्धविशेषस्तु विरोधितानियामको[2] भवति । ( स्व० )

**संबन्धि**[3]–संबन्धस्य प्रतियोग्यनुयोगि वा । यथा घटवद्भूतलमित्यादौ संयोगस्य घटः प्रतियोगी, भूतलं त्वनुयोगि भवति । ( स्व० )

**संबोधनम्**–[ क ] वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा । यथा चैत्र त्वया भुज्यतामित्यादौ प्रथमार्थः । ( गा० व्यु० संबु० )

[ ख ] अनभिमुखस्याभिमुखीकरणमिति शाब्दिका आहुः ।

**संभवः**[4]–( अनुमानम् ) [ क ] अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणम् । तदप्यनुमानमेव । अस्मिन्सतीदं

---

१ संबन्धत्वं च तदनुयोगिकत्वविशेषः । ( गा० सिद्धा० ) लक्षणं तु सांसर्गिकविषयताश्रयत्वम् ।

२ तदर्थश्च [ १ ] साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धिं प्रति येन संबन्धेन साध्याभावप्रकारकनिश्चयः प्रतिबन्धकः, सः । यथा पर्वते संयोगेन वन्हिसाधने दैशिकविशेषणतासंबन्धः ।* [ २ ] स्वीययादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानं प्रति येन संबन्धेन † स्वप्रकारकं ज्ञानं विरोधि, सः । यथा संयोगेन घटवत्ताबुद्धिविरोधितानियामको दैशिकविशेषणतासंबन्धः। ‡

३ अत्र संबन्धिता च, आधारानाधारसंबन्धिमात्रसाधारणः स्वरूपसंबन्धविशेषः । (मू० म० १)

४ संभवः प्रमाणान्तरमिति पौराणिकाः।संभवोऽप्यनुमानमेव, न तु प्रमाणान्तरमिति नैयायिकाः प्राहुः।

---

* अयं साध्यवत्ताग्रहविरोधितानियामकसंबन्ध इति जेगीयते ।

† अत्र च स्वशब्देनाभावो ग्राह्यः ।

‡ अयं च स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्ध इत्युच्यते ।

नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते । (वात्स्या० २।२।२)

[ख] भूयःसहचाराधीनज्ञानम्[1] । यथा, संभवति ब्राह्मणे विद्या । संभवति सहस्रे शतम् । (गौ० वृ० २।६९) (त० दी०)

[ग] अविनाभाविनोर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्[1] । यथा, द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् । आढकस्य सत्ताग्रहणात्प्रस्थस्येति । (वात्स्या० २।२।१) संभवो द्विधा । संभावनात्मकः । निर्णयात्मकश्चेति । तत्रादिमो न प्रमाणम् । यथा ब्राह्मणेषु चतुर्दशविद्याभिज्ञत्वं[2] संभवतीति । द्वितीयस्तु शते पञ्चाशदिति । (सि० च०)

**संभावना**—[क] उत्कटैकतरकोटिकसंशयः[3] । (नील०) यथा सार्षपोपि स्यादित्यादौ लिङ्ङाद्यर्थः । यथा वा, संभवति ब्राह्मणे विद्येति । (स्व०)

[ख] उत्कटकोटिका शङ्केति शाब्दिका आहुः ।

**संयोगः**[4]—(गुणः) [क] संयुक्तव्यवहारहेतुः । (त० सं०) यथा घटभूतलसंयोगः । (स्व०)

[ख] अप्राप्तयोः प्राप्तिः । (भा० प० गु०)

[ग] अप्राप्तिपूर्विका प्राप्तिः । (वै० उ० ७।२।९) संयोगो द्विविधः । कर्मजः । संयोगजश्चेति । तत्र कर्मजोपि द्विविधः । अन्यतरकर्मजः । उभयकर्मजः । आद्यः श्येनशैलादिसंयोगः । द्वितीयो मेषयोर्मल्लयोर्वा संनिपातः । संयोगजश्च[5] कपालतरुसंयोगात्तरुकुम्भयोः संयोगः ।

---

१ इदं चाक्षेपसूत्रोक्तमिति विज्ञेयम् ।

२ तदुक्तं मनुना । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश, इति ॥

३ अत्र च, कोट्यंशे त्वौत्कट्यं विषयताविशेषः । (नील०) (गा० सत्प्र०)

४ संयोगं प्रति युतसिद्धिः प्रयोजिका । संयोगोऽव्याप्यवृत्तिरनित्यः सर्वद्रव्यवृत्तिश्च । (वाक्य०) (वै० उ० ७।२।९) संयोगसंस्कारश्च (वै० उ० ७।२।९) तत्र द्रष्टव्यः ।

५ अवयवसंयोगजन्य इत्यर्थः ।

प्रकारान्तरेणापि संयोगो द्विविधः । अभिघातः । नोदनं चेति । तत्राद्यः शब्दहेतुः । द्वितीयः शब्दाहेतुः, क्रियामात्रहेतुश्चेति (वै० वि० ७।२।९) (भा० प० गु० ) (न्या० म० १) (त० दी० )

**संवादः**—१ समयवादः । (वात्स्या० ४।२।४७) २ संमतिः । (ख० )

**संशयः**[१]–( अप्रमा ) [क] समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः । (गौ० १।१।२३) समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति । स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन्पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः 'किंस्वित्' इत्यन्यतरन्नावधारयति । तदनवधारणं ज्ञानं संशयः । . . . (वात्स्या० १।१।२३)

[ख] धर्मितावच्छेदकावच्छेदेनान्यतरकोट्यवगाहिज्ञानम् । (त० प्र० )

[ग] विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप[२] एक एव भवति, सः । (चि० १)

[घ] एकधर्मिकविरुद्धभावाभावज्ञानम् । (गौ० वृ० १।१।२३) (४।३) (मु० गु० )

---

१ अत्र, विशेषादर्शनं कोटिद्वयस्मरणं च संशयमात्रे हेतुरिति विज्ञेयम् । (सि० च० ) संशयलक्षणं तु [क] स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारता*शालिज्ञानत्वम् । (दि० गु०) [ख] अवच्छेद्यावच्छेदकभावापन्नविषयता†वत्त्वम् । (गा० सम्प्र० )

२ धर्मिज्ञानसहितविरुद्धोभयविशिष्टबुद्धिसामग्रीसमाजादेवोभयविषयकारोप एको भवति, स एव संशय इति समुदितार्थः । (मू० म० १)

---

* अत्र संशयीयविषयतायाः प्रतिबन्धकतावच्छेदकत्वकथनं च 'संशये विशेष्यताद्वयं' इति पक्षाभिप्रायेणेति विज्ञेयम् ।

† संशयीयविशेष्यतयोरवच्छेद्यावच्छेदकभावस्तु समुच्चयज्ञानव्यावर्तनायावश्यं स्वीकर्तव्य इति सूक्ष्मदर्शिभिर्विज्ञेयम् ।

[ ङ ] एकस्मिन्धर्मिणि[1] विरुद्धनानाधर्मवैशिष्ट्यज्ञानम् । यथा, स्थाणुर्वा[2] पुरुषो वेति । (त० सं०) यथा वा, पर्वतो वन्हिमान्नवेति ज्ञानम् । संशयस्त्रिविधः । साधारणधर्मज्ञानजन्यः । असाधारणधर्मज्ञानजन्यः । विप्रतिपत्तिजन्यश्चेति । आद्यो यथा, उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा 'अयं स्थाणुर्न वा' इति संदिग्धे । यथा वा, असति विशेषदर्शने 'स्थाणुः पुरुषो वा' इति ज्ञानम् । द्वितीयो यथा, शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा 'शब्दो नित्यो न वा' इति संदिग्धे । यथा वा, नित्यादनित्याच्च व्यावृत्तेन भूमात्रासाधारणेन गन्धवत्त्वेन विशेषमपश्यतो भवति भुवि नित्यत्वानित्यत्वसंशयः । तृतीयो यथा, तत्र शब्देन कोटिद्वयोपस्थितिद्वारा 'प्रामाण्यं स्वतोग्राह्यं परतोग्राह्यं वा' इति मानसः संशय उत्पद्यते । (त० भा०) (त० प्र०) (गौ० वृ० १।१।२३) (मु०) (सि० च०) प्रकारान्तरेणापि द्विविधः संशयः । बहिर्विषयकः । अन्तर्विषयकः । बहिर्विषयकोपि द्विविधः । दृश्यमानधर्मिकः । अदृश्यमानधर्मिकः । तत्र दृश्यमानधर्मिको यथा, ऊर्ध्वत्वविशिष्टस्य धर्मिणो दर्शनात् 'अयं स्थाणुः पुरुषो वा' इति । अदृश्यमानधर्मिको यथा, अरण्ये झाटाद्यन्तरिते गोगवयादिपिण्डे[3] विषाणमात्रदर्शनात् 'अयं गौर्गवयो वा' इति । (वै० उ० २।२।१८) आन्तरसंशयो हि विद्याविद्याभ्यां भवति । यथा, मौहूर्तिकः सम्यगादिशति चन्द्रोपरागादि, असम्यगपि । तत्र स्वज्ञाने 'सम्यगादिष्टमसम्यग्वा' इति संशयो जायते ( वै० २।२।२० )

---

१ समुदितार्थश्च [ क ] एकधर्मावच्छिन्नविशेष्यकभावाभावप्रकारकज्ञानम् । ( न्या० बो० ) [ ख ] यत्किंचिद्धर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानम् । ( वाक्य० )

२ इदं, विरुद्धभावद्वयकोटिकसंशयाङ्गीकारेण । परे तु, स्थाणुत्वतदभावपुरुषत्वतदभावकोटिकेत्यर्थ इत्याहुः । ( नील० )

३ वस्तुतः, तत्रापि विषाणधर्मिक एव संदेहः 'विषाणमिदं गोसंबन्धि, गवयसंबन्धि वा' इति । विवक्षामात्रात्तु द्वैविध्याभिधानम् । ( वै० उ० २।२।१८ )

**संशयः**–( पक्षता ) [ क ] बाधप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालिज्ञानम्।[1]

[ ख ] स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपकतावच्छेदकधर्मावच्छिन्नानिरूपितविरोधाविषयतानिरूपितविषयतानिरूपिता प्रकारिता, सामानाधिकरण्यसंबन्धेन तद्विशिष्टप्रकारितावज्ज्ञानम्। (गा० पक्ष०) यथा पर्वते धूमेन वन्हिसाधने पर्वतो वन्हिमान्न वेति संशयः पक्षता। (स्व०)

[ ग ] केचित्तु, साध्यनिश्चयसाध्याभावनिश्चयप्रतिबध्यतावच्छेदकाविशेष्यताशालिज्ञानं संशय इत्याहुः[2]। (गा०पक्ष० )

**संशयसमः**–(जातिः) [क] सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः।(गौ०५।१।१४) अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते। साति प्रयत्नानन्तरीयकत्वेस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वं, अस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्यादानिवृत्तः संशय इति। (वात्स्या०५।१।१४ )

[ ख ] यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः, सव्यभिचार एव। ( वात्स्या०१।२।४८ )

[ ग ] समानधर्मदर्शनादियत्किंचित्संशयकारणबलात्संशयेन प्रत्यवस्थानम्। यथा शब्दोनित्यः कार्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वं तुल्यम्। यथा कार्यत्वानिर्णायकादनित्यत्वं निर्णीयते। तथैन्द्रियकत्वात्संशयकारणादनित्यत्वं संदिह्यताम्। ( गौ०वृ०५।१४ )

---

१ सा च, पूर्वपक्षीया पक्षतेति बोध्यम्।

२ तच्चिन्त्यम्। चिन्ताबीजं तु, वन्हित्ववन्ह्यभावत्वोभयपुरस्कारेण वन्ह्यभावावगाहिनि 'पर्वतो वन्ह्यात्मकवन्ह्यभाववान्' इति समुच्चयेतिव्याप्तिः।

[ घ ] साधारणधर्मं प्रदर्श्य संशयोद्भावनम् । यथा शब्दोनित्यः कार्यत्वादित्यादौ शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथास्ति । तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्ति, इत्युभयसाधर्म्यदर्शनात्संशयः स्यात् । एकपरिशेषे नियामकाभावादिति । (नील०)

**संसर्गः**–( संबन्धः) संसर्गताख्यविषयतावान् । यथा घटवद्भूतलमिति चाक्षुषप्रत्यक्षे घटभूतलयोः संयोगः संसर्गः । ( स्व० )

**संसर्गाभावः**–( अभावः ) अन्योन्याभावभिन्नाभावः । ( त०प्र० ) ( मु०१ ) यथा, नास्ति घटो गेहे[2] इति सतो घटस्य गेहसंसर्गप्रतिषेधः । ( वै०९।१।१० ) संसर्गाभावस्त्रिविधः । प्रागभावः । ध्वंसः । अत्यन्ताभावः । ( भा० प० )

**संसारः**–जन्ममरणप्रबन्धः प्रेत्यभावापरनामा । ( वै० उ० ६।२।१९ ) यथा, अतिपरिचितेष्वनादौ संसारेस्मिन्न जायतेवज्ञेत्यादौ । ( स्व० )

**संस्कारः**[3]–( गुणः ) सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान्[4] । (सि०च०) संस्कारस्त्रिविधः । वेगः । भावना[5] । स्थितिस्थापकः । (त०सं०)

**संहिता**–स्वारसिकार्धमात्राकालव्यवायेनैवोच्चारणम् । यथा सुद्ध्युपास्य इति ।

**सकर्मकः**–( धातुः ) [ क ] आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकः ।

---

१ तल्लक्षणं च तादात्म्यसंबन्धानवच्छिन्नप्रतियोगिताकाभावत्वम् । ( गा० सिद्धा० ) संसर्गाभावग्रहे प्रतियोगियोग्यतैव तन्त्रम् । यत्तु, संसर्गाभावग्रहे प्रतियोग्यधिकरणोभययोग्यत्वं तन्त्रमिति कैश्चिदुक्तम् । तन्न समीचीनम् । आकाशे रूपात्यन्ताभावप्रत्यक्षस्य 'निवृत्तः कालाहलः' इति ध्वंसप्रत्यक्षस्य चानुपपत्त्या तद्ग्रहेधिकरणयोग्यतापेक्षा नास्ति, इति ( सर्व०औलु० ) ( वै० उ०९।१।८ ) ( वै०वि०९।१।८ )

२ तदर्थश्च [ क ] गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः । स च, यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव । भविष्यतः प्रागभावो भूतस्य प्रध्वंसाभावः । ( वै०उ०९।१।१० ) [ ख ] नास्ति गेहे घट इत्यत्यन्ताभावः, इति । ( वै०वि०९।१।१० )

३ संस्कारोनित्यः ( वाक्य० ) तल्लक्षणं च वेगाद्यन्यतमत्वम् ।

४ सा च जातिः संस्कारत्वात्मिका भवतीति विज्ञेयम् । ( त०दी० )

५ अत्रेदं बोध्यम् । भावना प्रत्यनुभवस्यानुभवत्वेनैव जनकत्वमिति प्राञ्चो वदन्ति । नव्यास्तु पुनर्ज्ञानत्वेन जनकत्वमित्याहुः । ( नील० )

यथा चैत्रो ग्रामं गच्छतीत्यादौ गम्धातुः सकर्मकः । ( गा० व्यु० २ )[1]

[ ख ] फलान्वितव्यापारबोधक इति प्राञ्चः ।

[ ग ] स्वार्थफलव्यधिकरणव्यापारवाचक इति शाब्दिका वदन्ति । मीमांसकास्तु, प्रत्ययार्थव्यापारव्यधिकरणफलवाचकः सकर्मक इत्याहुः ।

**सकलम्**—सर्ववदस्यार्थोनुसंधेयः ।

**सखण्डोपाधिः**[2]—( उपाधिः ) बहुपदार्थघटितो धर्मः । यथा शिष्टत्वेन्द्रियत्वविषयत्वादिरूपो धर्मः सखण्डोपाधिः । ( सि० च० )

**सजातीयत्वम्**—तद्वृत्तिधर्मवत्त्वम् । यथा घटत्वेन[3] वृत्तित्वाभावस्य घटत्वेन वन्ह्यभावसजातीयत्वम् । ( गा० च० मिश्र० ) विस्तरश्च सादृश्यशब्दव्याख्यानावसरे व्यक्तीभविष्यति ।

**सत्ता**—१ द्रव्यगुणसमवेता[4], गुणकर्मसमवेता वा जातिः । ( सर्व० औलु० ) २

[ क ] कालसंबन्धः । यथा घटो भवतीत्यादौ धात्वर्थः । ( स्व० )

[ ख ] आत्मधारणानुकूलव्यापारः सत्तेति शाब्दिका वदन्ति ।

**सत्प्रतिपक्षः**[5]—( हेत्वाभासः ) [ क ] बाधोपस्थितिसमर्थपरामर्शकालीनसाध्य-

---

१ अत्रेदं बोध्यम् । ग्रामं गच्छतीत्यादौ संयोगरूपं फलं ग्रामे, तदनुकूलव्यापारस्तु कर्तरि चैत्रे तिष्ठतीति फलव्यापारयोर्वैयधिकरण्यं संगच्छते, इति ।

२ स च क्लृप्तपदार्थेन्तर्भवति, न त्वतिरिक्तः पदार्थ इति विज्ञेयम् । ( सि० च० )

३ अत्र च, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन साजात्यं बोध्यम् । ( दीधि० )

४ इयं च, परसत्ता परसामान्यं चेत्युच्यते । द्रव्यगुणकर्मवृत्तिश्चेति बोध्यम् । ( भा० प० )

५ स च व्यावहारिकः सत्प्रतिपक्ष इत्युच्यते ।

तल्लक्षणं तु सत्प्रतिपक्षत्वम् । तच्चात्र [ क ] साध्यविरोध्युपस्थापनसमर्थसमान*बलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वम् । [ ख ] विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वम् । बलं च व्याप्तिपक्षधर्मते । ( चि० २ ) [ ग ] प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शप्रयुक्ताग्रिमक्षणावच्छिन्नानुत्पादप्रतियोगिप्रकृतानुमितिजनकतावच्छेदकीभूतपरामर्शीयविषयताविशेषविशिष्टत्वम् । [ घ ] यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं, पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नवत्ताज्ञानं प्रति प्रतिबन्धकं तद्रूपावच्छिन्ने पक्षे तद्रूपावच्छिन्नसाध्यकानुमितिजननयोग्योपस्थितिप्रतिबद्धकार्यकत्वम् । ( गा० सत्प्र० )

---

* अत्र चोपस्थितौ समानबलत्वं चानाप्तोक्तत्वेनानिश्चितत्वं, प्रकृतसाध्यानुमापकबलशालित्वे सति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्वं वेति विज्ञेयम् ।

सिद्धिसमर्थपरामर्शविषयः[1] । ( दीधि० २ )

[ ख ] यस्य साध्याभावसाधकं हेत्वन्तरं[2] विद्यते सः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वात्पटवत् । (त० सं०)

[ ग ] अन्ये तु, अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनागृहीताप्रामाण्यकतदभावव्याप्यवत्त्वेनोपस्थितिविषय इति वदन्ति । (मु० २)

**सत्प्रतिपक्षः**[3]–( हेतुदोषः ) १ [ क ] साध्याभावव्याप्यवत्पक्षः, । साध्यवदन्यत्वव्याप्यवत्पक्षः, । पक्षनिष्ठः साध्याभावव्याप्यः, । पक्षनिष्ठः साध्यवद्भेदव्याप्यः । ( दीधि० )

[ ख ] साध्यवदवृत्तिव्याप्यवत्पक्षः, । पक्षनिष्ठः साध्यवदवृत्तिव्याप्यः ।

[ ग ] पक्षवृत्त्यभावप्रतियोगित्वव्याप्यवत्साध्यम् , । साध्यनिष्ठः पक्षवृत्त्यभावप्रतियोगित्वव्याप्यः । यथा ह्रदो वन्हिमान्धूमादित्यादौ वन्ह्यभावव्याप्यवद्ध्रदादिः सत्प्रतिपक्षः । ( स्व० ) २ सत्प्रतिपक्षतावदस्यार्थोऽनुसंधेयः । ( न्या० म० २ )

---

१ अत्रेदमवधेयम् । पर्वतो वन्हिमान्धूमादित्यादि सद्धेतुस्थलेऽपि वन्हिव्याप्यधूमवान् , वन्ह्यभावव्याप्यजलवांश्च पर्वत इति परामर्शद्वयसंवलनदशायां ' प्रकृतोऽयं धूमो हेतुः सत्प्रतिपक्षितः ' इति व्यवह्रियते, इत्यनुभवमनुरुध्येदमुक्तम् ।

२ यत्संबन्धि यत्साध्यं, तदभावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्ष इत्यर्थं इति प्राञ्चो * वदन्ति । नवीनाः पुनरेवं वर्णयन्ति । यत्संबन्धिसाध्याभावव्याप्यहेत्वन्तरस्य सत्त्वं पक्षे, स सत्प्रतिपक्ष इत्यर्थः, इति । ( नील० )

३ तल्लक्षणं च, प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति † प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम् । इदमेव सत्प्रतिपक्षविभाजकमिति जेगीयते । ( दीधि० २)

---

* तेषामयमाशयः । प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतुस्ततोऽन्यस्मिन्हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षतेति । ( नील० )

† तदर्थश्च, प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यताकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृशविशिष्टनिरूपितविषयिता तादृशत्वम् , इति । ( गा० सत्प्र० )

**सत्प्रतिपक्षता**–[ क ] पक्षे साध्यधीप्रतिबन्धकः परामर्शः । यथा जलमुष्णं स्पर्शवत्त्वादित्यादौ नेदमुष्णमतेजस्त्वादित्यादि । ( न्या० म० )

[ ख ] विरुद्धयोर्[1]हेत्वोः परामर्शः । ( भा० प० ) यथा ह्रदो वन्हिमान्धूमादित्यादौ वान्हिव्याप्यधूमवान्ह्रद इति, वन्ह्यभावव्याप्यजलवान्ह्रद इति च परामर्शः । ( स्व० )

**सत्यत्वम्**–१ [ क ] प्रमितिविषयत्वम् । यथा घटादेः सर्वस्य जगतः सत्यत्वम् । [ ख ] त्रिकालाबाध्यत्वं सत्यत्वमिति वेदान्तिनो वदन्ति । २ क्वचित्, तदभाववति तत्प्रकारकत्वाभाववत्त्वम् । यथा रजते ' इदं रजतम् ' इति ज्ञानस्य सत्यत्वम् । ( स्व० )

**सद्धेतुः**–( हेतुः ) [ क ] पञ्च[2]रूपोपपन्नो हेतुः । ( त० भा० )

[ ख ] व्याप्त्यादिविशिष्टहेतुः । ( नील० )

[ ग ] प्रमितव्याप्तिपक्षधर्मता[3]को हेतुः । ( गा० सत्प्र० ) यथा पर्वतो वन्हिमान्धूमा[4]दित्यादौ धूमः सद्धेतुः । ( स्व० )

**सन्**–( प्रत्ययः ) कर्तुरिच्छा[5] । ( तर्का० ४ ) यथा घटं चिकीर्षतीत्यादौ सन्प्रत्ययार्थः । ( स्व० )

**सपक्षः**[6]– [ क ] निश्चितसाध्यधर्मा धर्मी । ( त० भा० ) ( चि० पक्ष० )

---

१ परस्परं विरुद्धयोः साध्ययोरित्यर्थः ।

२ पञ्च रूपाणि तु । पक्षसत्त्वम् । सपक्षसत्त्वम् । विपक्षासत्त्वम् । अबाधितविषयत्वम् । असत्प्रतिपक्षत्वम्, इति । ( त० भा० २ )

३ स्वसाध्यानुमित्यौपयिकप्रमात्मकपरामर्शवानिति यावत् । ( गा० सत्प्र० )

४ अत्र च पर्वतत्वसामानाधिकरण्येन वन्हेः साध्यत्वविवक्षायामेव धूमः सद्धेतुः, न तु पर्वतत्वावच्छेदेन वन्हेः साध्यत्वविवक्षायां धूमः सद्धेतुरित्याशयः ।

५ स्वसामानाधिकरण्यस्वनिष्ठविषयतानिरूपितविषयित्वोभयसंबन्धेन प्रकृतधात्वर्थप्रधानीभूतव्यापारविशिष्टेच्छेत्यर्थः ।

६ तल्लक्षणं च [ क ] साध्यप्रकारकनिश्चयविशेष्यत्वम् । ( न्या० बो० ) [ ख ] विशेष्यतासंबन्धेन साध्यप्रकारकनिश्चयवत्त्वम् । ( वाक्य० )

[ ख ] निश्चितसाध्यवान्। यथा पर्वते धूमेन वन्हिसाधने महानसः सपक्षः ( त०सं० )

**समनियतत्वम्**–व्याप्यत्वे सति व्यापकत्वम्। ( गा० अव० ) यथा, अभिधेयत्वस्य पदार्थत्वसमनियतत्वम्। ( त० दी० )

**समभिव्याहारः**–१ पदानां पूर्वापरीभावः। यथा घटमानयेत्यादौ क्रियापदस्य द्वितीयान्तघटपदसमभिव्याहारः। (स्व०) २ शेषशेषिवाचकपदयोः सहोच्चारणमिति मीमांसका वदन्ति।

**समयः**–१ नियमबन्धः। २ शास्त्रम्। ३ कालः। ४ सिद्धान्तः। ( स्व० ) ५ [ क ] अस्य शब्दस्येदमर्थजातमभिधेयमित्यभिधानाभिधेयनियमनियोगः। ( वात्स्या०२।१।५४ )

[ख) ईश्वरसंकेतः 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारः। समयश्च जातिमात्रे, व्यक्तेराक्षेपत एवोपस्थितिरिति तौतातिकाः। जातौ व्यक्तौ चोभयशक्तिः। किंतु जात्यंशे ज्ञाता, व्यक्त्यंशे स्वरूपसती प्रयोजिकेति प्राभाकराः। समयः शक्तिरेव। व्यक्त्याकृतिजातयः पदार्था इति वृद्धाः। ( वै०उ०७।२।२० ) अन्यत्सर्वं शक्तिवदनुसंधेयम्। (स्व०)

**समवहितत्वम्**–[ क ] एककालीनत्वम्। ( मू० म०१ )

[ ख ] सहवृत्तित्वम्। यथा, मण्यादिसमवहितेन वन्हिना दाहो न जन्यत इत्यादौ। (स्व०)

**समवायः**–( पदार्थः ) इहेदमिति यतः कार्यकारणयोः, स समवायः। (वै० ७।२।२६ ) स च, अयुतसिद्धयोः संबन्धः। ( त० भा० १ ) यथा घटकपालयोः संबन्धः। ( स्व० ) सर्वत्र समवायस्त्वेक एव नित्यश्चेति

---

१ तल्लक्षणं च नित्यसंबन्धत्वम्*। ( त०सं० ) ( मु० )

२ तदर्थश्च, कार्यकारणयोरवयवावयविनोर्यतः संबन्धात् 'इहेदम्' इति प्रत्ययः स समवायः, इति। ( वै०वि०७।२।२६ )

---

* संबन्धत्वं चात्र स्वरूपत्वानवच्छिन्नसांसर्गिकविषयताश्रयत्वम्। ( वाक्य० )

सिद्धान्तः । समवायो नानानित्यश्चेति प्राभाकरा नव्याश्चाहुः । प्रत्यक्षः[1] समवाय इति नैयायिकाः । समवायोतीन्द्रियः[2], अनुमेयश्चेति[3] वैशेषिकाः । सर्वत्र स्वरूपस्यैव संबन्धत्वोपपत्तौ समवायो नास्त्येवेति भट्टाः । ( वै०उ०७।२।२८) (वै०वि०४।२।११) (दि०१) (सि०च० ) (राम०)

**समवायित्वम्**–१ समवायानुयोगित्वम् । यथा कपालस्य घटसमवायित्वम् । (त्व०) २ वर्तमानत्वमिति काव्यज्ञा वदन्ति ।

**समवायिकारणम्**[4]–( कारणम् ) [ क ] यत्समवेतं[5] कार्यमुत्पद्यते तत् । यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः समवायिकारणम् । ( त० सं० ) [ ख ] उपादानकारणमिति वेदान्तिप्रभृतयो वदन्ति ।

**समाख्या**–१ संज्ञा । यथा, अयोनिजेषु शरीरेषु मनुमरीचिदुर्वासःसंज्ञा । ( वै० उ० ४।२।८ ) ( वै० वि० ४।२।८ ) २ यौगिकः शब्दः समाख्येति मीमांसका वदन्ति ।

**समाधानम्**–उद्भावितदूषणनिवर्तकवाक्यप्रयोगः । यथा, चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वात्मके रूपलक्षणे परमाणुरूपप्रभाभित्तिसंयोगाद्यव्याप्त्यतिव्याप्त्युद्भावनेन परेण दूषिते, त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वमिति समाधानम् । (त्व० )

---

१ एतन्मते च समवायप्रत्यक्षं प्रतीन्द्रियसंबद्धविशेषणतासंनिकर्षो हेतुः । (मु०) (वै०वि०७।२।२८)

२ तन्मते समवायस्यातीन्द्रियत्वे प्रमाणमनुमानम् । तच्च, समवायोतीन्द्रियश्चेतनान्यासमवेतभावत्वान्मनोवदाकाशादिवद्वेति । (वै० वि० ७।२।२८) (वै० उ० ७।२।२८)

३ अनुमानं तु, गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसंबन्धविषया विशिष्टबुद्धित्वात् 'दण्डी पुरुषः' इति विशिष्टबुद्धिवदिति । ( मु० १ ) इदमेवानुमानं समवायसद्भावे प्रमाणम् । ( वै०वि०७।२।२६ )

४ लक्षणं तु समवायिकारणत्वम् । तच्च, समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वम्* । ( न्या० बो० )

५ समुदितार्थश्च [ क ] यस्मिन्समवायेन संबद्धं सत्कार्यमुत्पद्यते तत् । ( न्या० बो०) [ ख ] यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्येत तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणम् । ( नील० )

---

* इदं कारणत्वं च द्रव्यमात्रवृत्तीति विज्ञेयम् । ( भा० प० )

**समाधिः**—१ समाधानवदस्यार्थोनुसंधेयः । २ चित्तस्याभिमतविषयनिष्ठत्वम् । ( गौ० वृ० ४।१०२ ) ३ तदेवार्थधर्मनिर्भासं ( ? ) स्वरूपशून्यमिव समाधिरिति पतञ्जलिप्रभृतयो योगिनो वदन्ति । ( गौ० वृ० ४।११९ )

**समानः**—१ (वायुः) [क] आहारेषु पाकार्थं वन्हेः समनयनात्समानः ।(दि० १।२) [ख ] भुक्तपरिणामाय जठरानलस्य समुन्नयनात्समानः । ( सि० च० ) २ एकः । यथा समानतन्त्रसिद्धः प्रतितन्त्रसिद्धान्त इत्यादौ । ( गौ० वृ० १।१।२९ ) ३ तुल्यः । ( स्व० )

**समानधर्मः**—१ [ क ] विरुद्धकोटिद्वयसाधारणधर्मः । ( गौ० वृ० १।१।२३ ) यथा स्थाणुपुरुषयोः समानो धर्म आरोहपरिणाहौ[1] । ( वात्स्या० १।१।२३ ) [ख ] कोटिद्वयसहचरितधर्मः । ( दि०गु० ) यथा धूमधूमाभावसमानाधिकरणो वन्हिरित्यादौ वन्हिः समानधर्मः । ( स्व० ) २ साधर्म्यवदस्यार्थोनुसंधेयः ।

**समानप्रकारकत्वम्**[2]—प्रतिबध्यज्ञाने यद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारताकत्वं, प्रतिबन्धकज्ञाने च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मातिरिक्तधर्मानवच्छिन्नप्रातियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपकत्वम् । यथा नव्यमते पर्वतो वन्ह्यभाववानिति[3] निश्चयस्यापि 'पर्वतो महानसीयवन्हिमान्' इति बुद्धिसमानप्रकारकत्वम् । (स्व०)

**समानविभक्तिकत्वम्**—[ क ] स्वप्रकृतिकविभक्तिसजातीय[4]विभक्तिकत्वम्[5] । यथा नीलो घट इत्यादौ नीलपदघटपदयोः समानविभक्तिकत्वम् ।

---

१ तादृशधर्मज्ञानं च 'स्थाणुर्वा पुरुषो वा' इत्याकारकसंशये प्रयोजकमिति विज्ञेयम् ।

२ अत्रेदमवधेयम् । तदभाववत्तानिश्चयनिष्ठायां तद्वत्ताबुद्धिप्रतिबन्धकतायां समानप्रकारकत्वं तन्त्रमिति नव्यानां सिद्धान्तः । प्राचां सिद्धान्तस्तु समानविषयकत्वमेवेति ।

३ अत्रेदं तत्त्वम् । विशेषतद्वत्ताबुद्धिं प्रति सामान्यतदभाववत्तानिश्चयस्यापि प्रतिबन्धकत्वमिति सर्वानुभवमनुरुध्येदमुक्तम् , इति ।

४ विभक्तौ साजात्यं च विभक्तिविभाजकप्रथमात्वादिनावगन्तव्यम् । ( गा० व्यु० १)

५ तच्च व्यासस्थलेभेदान्वयबोधप्रयोजकमिति बोध्यम् ।

[ ख ] केचित्तु, विशेषणपदस्य विशेष्यपदाप्रकृतिकविभक्त्यप्रकृतित्वमित्याहुः [1] । ( गा० व्यु० १ )

**समानविषयकत्वम्**[2]–अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्मावगाहित्वम् । ( गा० बाध० ) यथा पर्वतो महानसीयवन्ह्यभाववानिति[3] निश्चयस्य 'पर्वतो वन्हिमान्' इति बुद्धिसमानविषयकत्वम् । ( स्व० )

**समानाकारकत्वम्**–[ क ] स्वस्मिन्यादृशी तद्बुद्धिविशेष्यकत्वावच्छिन्नतत्प्रकारिता, तादृशतद्बुद्धिविशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वम् । ( कु० ३ ) यथा पर्वतो वन्हिमानिति निश्चयस्य 'पर्वतो वन्हिमान्न वा' इति संशयं[4] समानाकारकत्वम् । ( स्व० )

[ ख ] स्वस्मिन्यादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वं, तादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वमिति गुरुचरणाः प्राहुः ।

**समाप्तपुनरात्तत्वम्**[5]–[ क ] क्रियान्वयेन शान्ताकाङ्क्षस्य[6] विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानम् । ( राम० ) यथा, उदयति चन्द्रः[7] कुमुदबन्धुरित्यादौ समाप्तपुनरात्तत्वं दोषः । ( स्व० )

---

१ इदं च, तन्मते समासव्याससाधारणाकाङ्क्षेत्युच्यत इति बोध्यम् ।

२ अत्रेदमवधेयम् । तदभाववत्तानिश्चयस्य तद्वत्ताबुद्धिप्रतिबन्धकतायां समानविषयकत्वं तन्त्रमिति प्राचां सिद्धान्तः, इति ।

३ अत्रेदं बोध्यम् । सामान्यतद्वत्ताबुद्धिं प्रति विशेषतदभाववत्तानिश्चयस्यापि समानविषयकत्वेन प्रतिबन्धकत्वं प्राचामभिमतम् । अतः, पर्वतो महानसीयवन्ह्यभाववानिति निश्चयस्य 'पर्वतो वन्हिमान्' इति बुद्धिं प्रति प्रतिबन्धकत्वं संगच्छते, इति ।

४ इदं च 'संशये विषयताद्वयम्' इति पक्षाभिप्रायकमिति तु सूक्ष्मतरं विभावनीयं विद्वद्भिः ।

५ स च विशेष्यवाचकपदनिष्ठः काव्यदोषः, उत्थाप्याकाङ्क्षास्थल एव प्रवर्तते । न तूत्थिताकाङ्क्षास्थल इति बोध्यम् ।

६ नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसंधानमिति समुदितार्थः । (राम०)

७ तदुक्तं चन्द्रालोके । समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् । नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः, इति ॥

[ ख ] निराकाङ्क्षबोधजनकवाक्योत्तरत्वविशिष्टतद्वाक्यघटकीभूतपदार्थान्वितविशेषणबोधकपदवत्त्वमिति केचिद्वदन्ति ।

**समाप्तिः**—१ तत्तद्वस्तुकालचरमसंबन्धः । यथा समाप्ते यज्ञकर्मणीत्यादौ ।
( स्व० ) २ [ क ] चरमवर्णः[1] ।

[ ख ] चरमवर्णध्वंसः । ( त० प्र० १ )

[ ग ] आरब्धकर्मचरमवर्णपर्यन्तवर्णसमूह इति केचित् ।

[ घ ] आरब्धकर्मचरमवर्णांशे लौकिकात्मकानुपूर्वीविशेषविशिष्टतावद्धर्मविषयकसमूहालम्बनानुसंधानमित्यन्ये वदन्ति । ( मू० म० १ )

**समाहारः**—[ क ] तुल्यव ( ? ) देकक्रियान्वयित्वरूपं साहित्यम् ।

[ख] अपेक्षाबुद्धिविशेषविषयत्वम् । यथा पाणिपादमित्यादौ । ( न्या० म० ४ )

**समुच्चयः**—१ [ क ] विरोधानवगाही[2] कोटिद्वयसामानाधिकरण्यावगाही च निश्चयः[3] । यथा पर्वतो वन्हिमान्वन्ह्यभाववानिति ज्ञानम् । ( स्व० )

[ ख ] धर्मितावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहिज्ञानम् । ( त० प्र० २ ) यथा वृक्षः कपिसंयोगतदभाववानिति ज्ञानम् । २ परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चय इति शाब्दिका वदन्ति ।

**समुदायत्वम्**[4]—[ क ] अनेकपर्याप्तो धर्मः । ( गा० अव० )

[ ख ] अपेक्षाबुद्धिविशेषविषयत्वम् । यथा घटपटस्तम्भकुम्भैतत्समुदायत्वम् । ( स्व० )

**समूहालम्बनम्**— नानाप्रकारतानिरूपित[5]नानामुख्यविशेष्यताशालिज्ञानम् । (गा० व्यु० १) यथा, अयं घटोयं पटोयं स्तम्भोयं कुम्भश्चेति ज्ञानम् । ( स्व० )

---

१ स च ग्रन्थसमाप्तिरिति बोध्यम् ।

२ गादाधरीयबाधग्रन्थफक्किकाया अयमेवाभिप्राय इति प्रतिभाति ।

३ अव्याप्यवृत्तित्वज्ञानकाले कोटिद्वयोपस्थितौ सत्यामिदं ज्ञानमुत्पद्यत इति विज्ञेयम् ।

४ अत्र च, समुदायः प्रत्येकानतिरिक्त इति नैयायिकानां सिद्धान्त इति बोध्यम् ।

५ निश्चये विशेषणद्वयदानेन, भवखादिरौ द्वाविति, खड्गी चैत्रः कुण्डलीति च वाक्यजन्यबोधस्य समूहालम्बनात्मकत्वं निराकृतमिति बोध्यम् । ( गा० व्यु० १ )

**सम्यग्ज्ञानम्**–१ यथार्थज्ञानम्। (स्व०) २ येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयराहित्येनावगम इत्यार्हता वदन्ति। (सर्व० आर्ह०)

**सर्वगतत्वम्**–१ विभुत्ववदस्यार्थोनुसंधेयः। २ सर्वत्र वर्तमानत्वमिति पौराणिका वदन्ति।

**सर्वतन्त्रसिद्धान्तः**–(सिद्धान्तः) [क] सर्वतन्त्राविरुद्धस्तन्त्रेधिकृतोर्थः। (गौ० १।१।२८) यथा घ्राणादीनीन्द्रियाणि, गन्धादय इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य ग्रहणम्, इति। (वात्स्या० १।१।२८) [ख] नव्यास्तु, वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोर्थः सर्वतन्त्रसिद्धान्त इति वदन्ति। (गौ० वृ० १।२८)

**सर्वनाम**[2]–[क] स्वोच्चारणानुकूलबुद्धिप्रकारविशिष्टम्[3]। (गा० श०) [ख] वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नम्। यथा, सोयं वो विदधातु वाञ्छितफलमित्यादौ तच्छब्दार्थः। (स्व०)

**सर्वम्**[4]–[क] स्वार्थान्वयितावच्छेदकधर्मव्यापकतादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नम्। (गा० श०) [ख] व्यापकत्वावच्छिन्नम्। यथा सर्वे घटा रूपवन्त इत्यादौ सर्वपदार्थः। (दि० ४)

[ग] बुद्धिविषयो यावत्त्वावच्छिन्नः समूह इति शाब्दिका वदन्ति।

---

१ तन्मते सम्यग्ज्ञानं पञ्चविधम्। मतिः। श्रुतम्। अवधिः। मनःपर्यायः। केवलम्, इति। (सर्व० आर्ह०)

२ अत्र च सर्वनामपदेन त्यत्तदादयः शब्दाः सर्वनामसंज्ञका गृह्यन्ते, अतो न काप्यनुपपत्तिः।

३ स्वं तदादिपदम्। (गा० श०)

४ सर्वपदप्रवृत्तिनिमित्तं च, उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः। स च धर्मः, सर्वे घटा रूपवन्त इत्यादौ यावत्त्वमेव। क्वचिदशेषत्वादिः। क्वचिद्यावत्त्ववदनेकत्वम्। (गा० श०)

५ अत्र च, सर्वशब्दः स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वं तादृशपदार्थान्तरे बोधयतीति नियमः। एवं च, सर्वे घटा रूपवन्त इति वाक्यात् 'घटत्वव्यापकं रूपम्' इति शाब्दबोधो जन्यत इति बोध्यम्।

**सविकल्पकम्**[1]–( प्रत्यक्षम् ) [ क ] किंचिन्निष्ठप्रकारताशालिज्ञानम् ।(त०प्र०१) [ ख ] सप्रकारकं[2] ज्ञानम् । यथा डित्थोयं, ब्राह्मणोयं, श्यामोयमिति ज्ञानम् । ( त०सं० ) अत्र कीर्तिलिङ्गादयो नास्तिकास्तु, सविकल्पकं न प्रत्यक्षं, न च प्रमाणम् । तस्य घटत्वादिरूपालीकोपरक्तत्वाद्वन्ध्यापुत्रज्ञानवत् । निर्विकल्पकं तु स्वलक्षणवस्तूपरक्तत्वात्स्यादेव प्रत्यक्षं, प्रमाणं चेत्याहुः । ( वै०उ०८।१।२ ) ( सि०च० )

**सव्यभिचारः**[3]–( हेत्वाभासः ) अनैकान्तिकः सव्यभिचारः । (गौ० १।२।४६) व्यभिचार एकत्राव्यवस्था । सह व्यभिचारेण वर्तत इति सव्यभिचारः । निदर्शनम् । नित्यः शब्दोस्पर्शत्वात्[4] । ( वात्स्या० १।२।४६ )

**सव्यभिचारत्वम्**–( हेतुदोषः ) [ क ] उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वम्[5] ।

---

१ तल्लक्षणं च प्रकारतानिरूपकज्ञानत्वम् । ( न्या०बो० )

२ नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि*ज्ञानमित्यर्थः । ( त०दी० )

३ तल्लक्षणं च साधारणाद्यन्यतमत्वम् । ( मु० २ ) ( वाक्य० )

४ अत्र, अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति 'अस्पर्शा बुद्धिरनित्या च' इति । (वात्स्या०१।२।४६) शिष्टं विभागादिनिरूपणं त्वनैकान्तिकशब्दव्याख्यानावसरे संपादितमिति विरम्यते ।

५ तदर्थश्च [ क ] धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टधर्मवत्ताज्ञानं साध्यसंदेहजनकं तद्रूपवत्त्वम्† । [ ख ] यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं साध्यसंदेहजनकं तद्रूपवत्त्वम्‡ । ( दीधि० २ )

---

* निर्विकल्पके तु, अतिरिक्ता तुरीया विषयता स्वीक्रियत इति व्यवस्था । ( न्या०बो० )

† पर्यवसितार्थस्तु, तद्धर्मपर्याप्तधर्मितावच्छेदकताकयत्किंचित्संशयनिरूपितायां जनकतायामवच्छेदकीभूता या तद्धर्मनिष्ठधर्मितावच्छेदकतानिरूपकप्रकारता, तन्निरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति । ( गा० सव्य० ) इदं च, साध्यतदभावसाहचर्यावच्छिन्नकारणतामतमङ्गीकृत्योक्तमिति विज्ञेयम् ।

‡ पर्यवसितार्थस्तु, यत्किंचित्संशयजनकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति । ( गा० सव्य० ) इदं च 'कोटिद्वयसहचरितत्वादिना ज्ञानस्योर्ध्वत्वादेरूर्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संदेहजनकं, न तु तदानीं साहचर्यादिज्ञानमपेक्ष्यते' इति मतमभिप्रेत्योक्तमिति विज्ञेयम् । ( दीधि० २ )

[ ख ] विरुद्धा[1]न्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसंबन्धाव्यावृत्तिः । ( चि० सव्य० ) यथा शब्दो नित्यः शब्दत्वादित्यादौ साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यादि । ( दीधि० २ )

[ ग ] यद्वा, साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् । ( चि० सव्य० )

[ घ ] विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयितया व्याप्तिग्रहविरोधितावच्छेदकं रूपम् । ( दीधि० २ )

[ ङ ] केचित्तु, साध्यसंदेहजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविष[3]यत्वे सति हेत्वभिमतत्वं सव्यभिचारत्वमित्याशशङ्किरे । ( चि० सव्य० )

**सह**—१ [ क ] समभिव्याहृतपदोपस्थाप्यक्रियाकालः ।

[ ख ] क्रियासमानकालीनक्रिया । यथा पुत्रैः सहागतः पितेत्यादौ सहशब्दार्थः । ( गा० व्यु० ३ ) २ साहित्यवदस्यार्थोनुसंधेयः ।

---

१ विरुद्धान्येति, साध्यतावच्छेदकविशिष्टसाध्यहेतुसामानाधिकरण्यग्रहविरोध्यर्थकं " अर्थतो विरोधिविशेषणम् । ( दीधि० २ )

२ दलद्वयनिष्कृष्टार्थस्तु, यद्यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं* तद्वत्त्वम् । ( दीधि० २ )

३ तदर्थस्तु [ क ] साध्यसंदेहजनककोटिद्वयोपस्थितिजनक†पक्षधर्मताज्ञानविषयत्वम् । [ ख ] धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंदेहजनकं तद्रूपावच्छिन्नत्वम् । तच्च रूपं साधारणत्वादीनि । ( दीधि० )

---

* समुदितार्थस्तु, सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तादृशधर्मवत्त्वम्, इति । ( गा० सव्य० )

† पर्यवसितार्थश्च, साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदको यो धर्मस्तदवच्छिन्नजन्यतानिरूपितायां, तदवच्छिन्नसहकारितावच्छेदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां च जनकतायामवच्छेदकीभूता या प्रकारता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति । ( गा० सव्य० ) अत्रेदं बोध्यम् । तदवच्छिन्नसहकारितावच्छेदकेत्यत्र तच्छब्देन साधारणधर्मवत्ताज्ञानविशिष्टोपस्थितित्वं गृह्यते, इति ।

**सहचरितत्वम्**–१. सामानाधिकरण्यवदस्यार्थोनुसंधेयः । २ क्वचित्, व्याप्तिमत्त्वम् । यथा, साध्येनासहचरितो व्याप्यत्वासिद्ध इत्यादौ । (स्व० )

**सहचारः**–सामानाधिकरण्यवदस्यार्थोनुसंधेयः । ( दीधि० २ )

**सहावस्थायित्वम्**–एकक्षणावच्छिन्नसामानाधिकरण्यम् । यथा ज्ञानेच्छयोः सहावस्थायित्वम् । ( स्व० )

**साकाङ्क्षत्वम्**–१ इच्छाविषयार्थज्ञानजनकत्वम्[1] । ( त० भा० ४ ) यथा चैत्रस्य पुत्र इत्यादौ पुत्रपदस्य चैत्रपदसाकाङ्क्षत्वम् । ( स्व० ) २ परस्परान्वययोग्यत्वम्[2] । ( त० भा० ४ ) यथा राज्ञः पुरुष इत्यादौ राजपुरुषयोः साकाङ्क्षत्वम् । ( स्व० )

**साकारकत्वम्**–धर्माश्रयत्वम्[3] । (मू० म० १) यथा, अयं घट इति ज्ञानस्य घटत्वाश्रयत्वम् । (स्व० )

**साक्षात्कारः**[4]–प्रत्यक्षवदस्यार्थोनुसंधेयः । (न्या० म० १)

**साक्षात्कारिणी**–येन्द्रियजन्या प्रमा सा । (त० भा० )

**साक्षी**–बोद्धृत्वे सत्यकर्ता । यथा मायावादिमते परमात्मा चाक्षुषमनोवृत्तेः साक्षी । (स्व० )

**सादृश्यम्**[5]–[ क ] असाधारणान्यतद्गतबहुधर्मवत्त्वम्[6] । (चि० ३ ) [ ख ] तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्[7] । यथा चन्द्रवन्मुखमित्यादौ मुखे चन्द्रसादृश्यम् । (मु० )

---

१ इदं च पदनिष्ठं साकाङ्क्षत्वमिति विज्ञेयम् । ( त० भा० ४ )

२ इदं तु पदार्थनिष्ठं साकाङ्क्षत्वमिति विज्ञेयम् । ( त० भा० ४ )

३ स्वनिष्ठप्रकारतानिरूपितप्रकारितासंबन्धेन यत्किंचिद्धर्मविशिष्टत्वमित्यर्थः ।

४ अत्र साक्षात्कारत्वं च साक्षात्करोमीत्यनुगतप्रतीतिसाक्षिको जातिविशेषः । ( न्या० म० १ )

५. अत्र, सादृश्यं चातिरिक्तः पदार्थ इति केचिदाशशङ्किरे । तन्नास्तीति नैयायिकाः प्राहुः ।

६ तदुक्तम् । सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्राधानसामान्यव्यक्तं सादृश्यमिष्यते ॥ इति । ( चि० ३ )

७ तद्गतभूयोधर्मसदृश*धर्मवत्त्वमिति परमार्थः । तेन, चन्द्रवन्मुखमित्यादावाह्लादजनकत्वरूपसादृ-

---

* अत्र, धर्मे धर्मसादृश्यं च जनकतात्वादिना विज्ञेयम् । स च धर्मोनुगत एवेति बोध्यम् ।

**साधकमानम्**–सिद्धिवदस्यार्थानुसंधेयः ( दीधि० पक्ष० )

**साधनत्वम्**–१ सिद्धिजनकत्वम्[1] । ( दि० गु० ) यथा पर्वतो वह्निमान्धूमादित्यादौ धूमस्य साधनत्वम् । २ सिद्धित्वम् । यथा पर्वते धूमेन वन्हिसाधन इत्यादौ । ३ कारणत्वमिति केचिदाहुः । ४ कारकत्वेनान्वयित्वं साधनत्वमिति शाब्दिका वदन्ति ।

**साधनाप्रसिद्धिः**[2]–( हेतुदोषः ) साधने साधनतावच्छेदकस्याभावः । यथा पर्वतो वन्हिमान्काञ्चनमयधूमादित्यादौ धूमनिष्ठः काञ्चनमयत्वाभावः साधनाप्रसिद्धिः । ( गौ० वृ० १।४८ ) ( मु० २ ) ( नील० )

**साधर्म्यम्**–अनुगतो[3] धर्मः । ( वै० उ० १।१।४) यथा ज्ञेयत्वं, प्रमेयत्वं, अभिधेयत्वं च द्रव्यादीनां सप्तानां पदार्थानां साधर्म्यं भवति । यथा वा, कारणत्वं पारिमाण्डल्यभिन्नानां पदार्थानाम् । आश्रितत्वं नित्यद्रव्यभिन्नानां पदार्थानाम् । भावत्वं द्रव्यादिषट्कस्य । निर्गुणत्वं क्रियाशून्यत्वं च गुणादिषट्कस्य । अनेकत्वे सति भावत्वं[4], समवायित्वं च द्रव्यादिपञ्चकस्य । समवेतसमवेतत्वं द्रव्यादिचतुष्टयस्य । सामान्यशून्यत्वं सामान्यादिचतुष्टयस्य । सत्ता द्रव्यादित्रयस्य । नित्यानित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वं, कर्मावृत्तिजातिमत्त्वं वा द्रव्यगुणयोः । असमवायिकारणत्वं गुणकर्मणोः । समवायिकारणत्वं द्रव्यस्य । द्रव्यत्वं गुणयोगित्वं च क्षित्यादीनां नवानां द्रव्याणाम् । विशे-

---

ष्यषट्कजनकतया जनकभेदेन भिन्नतया चन्द्रगताह्लादजनकत्वस्य चन्द्रमात्रवृत्तितया मुखे तदभावेपि न क्षतिः ।

१ अत्र जनकत्वं च जनकज्ञानविषयत्वमिति वक्तव्यम् । तेन, धूमज्ञानस्य सिद्धिजनकत्वेन धूमे सिद्धिजनकत्वाभावेपि न क्षतिः ।

२ सा च व्याप्यत्वासिद्धिप्रभेद इति विज्ञेयम् । ( गौ० वृ० १।४८ ) ( मु० २ ) ( वै० वि० ३।१।१५ ) तल्लक्षणं च साधने साधनतावच्छेदकवैशिष्ट्यावगाहिग्रहाविरोधिग्रहविषयत्वम् ।

३ समानो धर्म इत्यर्थः । ( मु० )

४ अनेकभाववृत्ति * पदार्थविभाजकोपाधिमत्त्वमिति फलितोर्थः । ( मु० )

---

* अत्र, अनेकभाववृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वम् । ( दि० १ )

षगुणवत्त्वं भूतानाम्, आत्मनां च । भूतत्वं क्षित्यादीनां पञ्चानाम् । परत्वं, अपरत्वं, मूर्तत्वं, कर्मवत्त्वं, वेगवत्त्वं च पृथिव्यादितुष्टयस्य मनसश्च । स्पर्शवत्त्वं, द्रव्यारम्भकत्वं[1] च पृथिव्यादिचतुष्टयस्य । सर्वगतत्वं, परममहत्त्वं चाकाशादिचतुष्टयस्य । रूपवत्त्वं, द्रवत्ववत्त्वं, प्रत्यक्षविषयत्वं च पृथिव्यादित्रयस्य । गुरुत्ववत्त्वं, रसवत्त्वं च पृथिवीजलयोः । नैमित्तिकद्रवत्ववत्त्वं पृथिवीतेजसोः । अव्याप्यवृत्तिविशेषगुणवत्त्वं, क्षणिक[2]विशेषगुणवत्त्वं वाकाशजीवात्मनां साधर्म्यम्, इति । ( भा० प० ) ( मु० १ ) ( सि० च० ) एवमन्येषामपि तत्तत्साधर्म्यं स्वयमूह्यमित्यत्रैव विरम्यते । ( स्व० )

**साधर्म्यसमः**–( जातिः ) [ क ] साधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यसमः । ( गौ० ५।१।२ ) साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः । निदर्शनम् । क्रियावानात्मा, द्रव्यस्य क्रियाहेतुगुण[3]योगात् । द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् । तथा चात्मा । तस्मात्क्रियावानिति । एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा, विभुनो द्रव्यस्य निष्क्रियत्वात् । विभु चाकाशं निष्क्रियं च । तथा चात्मा । तस्मान्निष्क्रिय इति । न चास्ति विशेषहेतुः 'क्रियावत्साधर्म्यात्क्रियावता भवितव्यं, न पुनरक्रियसाधर्म्यान्निष्क्रियेण' इति । विशेषहेत्वभावात्साधर्म्यसमः प्रतिषेधो भवति । ( वात्स्या० ५।१।२ ) ( नील० )

[ ख ] वादिनान्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम् । यथा शब्दोनित्यः कृतकत्वाद्घटवद्व्यतिरेकेण वा व्योमवदित्युपसंहृते, नैतदेवम् । यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वानित्यः स्यान्नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यात् । विशेषो वा वक्तव्यः । ( गौ० वृ० ५।२ )

---

१ द्रव्यारम्भकत्वं च द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् । ( मु० )

२ क्षणिकविशेषगुणवत्त्वं च चतुर्थक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वम् । ( मु० )

३ क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति बोध्यम् । ( नील० )

[ ग ] साधर्म्येण स्थापनाहेतुदूषकमुत्तरम् । ( नील० )

**साधारणः**[1]– ( हेत्वाभासः ) [ क ] सपक्षविपक्षवृत्तिर्हेतुः[2] । ( भा० प० २ )

[ ख ] साध्याभाववति साध्यवदन्यस्मिन्वा वर्तमानो[3] हेतुः । यथा शब्दो नित्यो निःस्पर्शत्वादित्यादौ, पर्वतो वन्हिमान्प्रमेयत्वादित्यादौ च निःस्पर्श· त्वं प्रमेयत्वं च हेतुः साधारणः । ( गौ० वृ० १।४५ ) ( मु० २ ) ( त० सं० ) ( वाक्य० )

**साधारणकारणत्वम्**[4]–कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् । यथेश्वरस्य कार्यमात्रे साधारणकारणत्वम् । ( वाक्य० ) ( न्या० बो० )

**साधारणत्वम्**[5]–( हेतुदोषः ) [ क ] विपक्षवृत्तित्वम् । ( चि० साधा० )

[ ख ] साध्यात्यन्ताभाववद्धर्मित्वम्[6] । ( चि० बाध० ) ( न्या० बो० )

[ ग ] साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छे· दकत्वम्[7] । ( गा० सामा० ) ( नील० ) यथा पर्वतो वह्निमान्प्रमेयत्वा·

---

१ स चानैकान्तिकप्रभेद इति बोध्यम् । लक्षणं च वक्ष्यमाणं साधारणत्वमेवेति ।

२ इदं लक्षणं च प्राचीनमतमनुरुध्योक्तमिति बोध्यम् ।

३ इदं च नवीनमतानुसारेण पूर्वपक्षीयं लक्षणमुक्तमिति विज्ञेयम् ।

४ अत्रेदं बोध्यम् । अष्टौ साधारणकारणानि । ईश्वरः । तज्ज्ञानेच्छाकृतयः । प्रागभावः । कालः । दिक् । अदृष्टम् , इति । ( वाक्य० १ )

५ तल्लक्षणं च साधारण्यविभाजकमेव । तच्च, [ क ] प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहावि· रोधिनो ज्ञानस्य विषयितयान्वयव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम्* [ ख ] विशिष्टसाध्य- साधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयितया व्यापकत्वग्रहविरोधितावच्छेदकरूपवत्त्वम् , इत्यादि । ( दीधि० साधा० )

६ इदं च पूर्वपक्षीयं साधारणत्वम् । ( स्व० ) तच्च व्यभिचार इति व्यवह्रियते । ( दीधि० )

७ इदं च सिद्धान्तसिद्धं साधारणत्वमिति बोध्यम् ।

---

* तदर्थश्च, विशिष्टसाध्यविशिष्टसाधनसामानाधिकरण्यग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिब- न्धकतावच्छेदकविषयताशून्यनिश्चयनिष्ठविषयितायां निरूपितत्वसंबन्धेन विशेषणीभूयान्वय- व्याप्तिग्रहत्वावच्छिन्नप्रतिबन्धकतावच्छेदकरूपवत्त्वम् । तादृशप्रतिबन्धकतावच्छेदकीभूततथावि- धनिश्चयवृत्तित्वविशिष्टस्वनिरूपितविषयिताकत्वमिति यावत् । (गा० साधा०)

दित्यादौ प्रमेयत्वस्य साधारणत्वम्। एवमन्योन्याभावादिघटितलक्षणान्यप्यूह्यानि। (स्व०)

**साधारणधर्मः**—तदितरवृत्तित्वे सति तद्वृत्तिर्धर्मः। यथा प्रमेयत्वं गोः साधारणधर्मः। (स्व०)

**साधारण्यम्**—साधारणत्ववदस्यार्थोनुसंधेयः।

**साधुः**—१ लोकोपकारकः। यथा रन्तिदेवराजः साधुः। २ [क] क्वचित्, यः शब्दो[1] यत्रेश्वरेण संकेतितः स तत्र साधुः। यथा, या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा सा सर्वापि सर्पविषं हन्तीत्येतादृशी संज्ञास्मदादिविशिष्टानामनुमापिका। (वै० उ० २।१।१८–१९)

[ख] यः शब्दो यस्मिन्नर्थे व्याकरणेन व्युत्पादितः स तत्र साधुरिति शाब्दिका वदन्ति। (चि० ४)

**साध्यताघटकसंबन्धः**—येन संबन्धेन साध्यता विवक्ष्यते स संबन्धः। यथा पर्वतादौ संयोगेन वन्ह्यादिसाधने संयोगसंबधः साध्यताघटकसंबन्धः। यथा वा, तमः समवायेन गगनवदित्यादौ समवायसंबन्धः। एवं प्रतियोगितावच्छेदकसंबन्धानुयोगितावच्छेदकादिसंबन्धाः स्वयमूह्याः। (स्व०)

**साध्यतावच्छेदकसंबन्धः**—साध्यताघटकसंबन्धवदस्यार्थोनुसंधेयः।

**साध्यत्वम्**—१ [क] पञ्चावयवसाधनीयत्वम्। (गौ० वृ० ५।४)

[ख] सिद्धिकर्मत्वम्[2]। (त० प्र०) (दि० गु०)

[ग] अनुमितिविधेयत्वम्। यथा पर्वतो वन्हिमान्धूमादित्यादौ वन्हेः साध्यत्वम्। (स्व०) २ क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वमिति शाब्दिका वदन्ति।

**साध्यप्रसिद्धिः**—सिद्धिवदस्यार्थोनुसंधेयः।

**साध्यसंसृष्टत्वज्ञानम्**[3]—सिद्धिवदस्यार्थोनुसंधेयः।

---

१ लक्षणं च भ्रमादिजन्यत्वाभावः। (चि० ४)

२ कर्मत्वं चात्र विषयत्वम्। (दि० गु०)

३ इदं च, गादाधर्यां पक्षतायां सिद्धिग्रन्थे व्युत्पाद्यते।

**साध्यसमः**–( हेत्वाभासः ) साध्याविशिष्टः[1] साध्यत्वात्साध्यसमः । ( गौ० १।२।४९ ) द्रव्यं छायेति साध्यम् । गतिमत्त्वादिति हेतुः । साध्येनाविशिष्टः साधनीयत्वात्साध्यसमः । अयमप्यसिद्धत्वात्साध्यवत्प्रज्ञापयितव्यः । साध्यं तावदेतत्किं पुरुषवच्छायापि गच्छति ? आहो स्विदावरकद्रव्ये संसर्पत्यावरणसंतानादसंनिधिसंतानोयं तेजसो गृह्यत इति ? । सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः । ( वात्स्या० १।२।४९ )

**साध्यसमः**–( जातिः ) [ क ] उभयसाध्यत्वात्साध्यसमः । ( गौ० ५।१।३ ) हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः । तं दृष्टान्ते प्रसजतः साध्यसमः । यदि यथा लोष्टस्तथात्मा प्राप्तस्तर्हि यथात्मा तथा लोष्ट इति, साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोपि साध्यः । अथ नैवम् । न तर्हि यथा लोष्टस्तथात्मा । ( वात्स्या० ५।१।४ )

[ ख ] पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनम्[2] । ( गौ० वृ० ५।४ )

[ ग ] दृष्टान्तस्य पक्षतुल्यताकथनम् । यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ यदि यथा लोष्टस्तथात्मेति त्वयोच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम् । तथा च यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेपि तत्साधनीयम् । नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न वाच्यम् । लोष्टसदृश आत्मात्मसदृशो लोष्ट इत्यत्र नियामकाभावादिति । ( नील० )

**साध्याप्रसिद्धिः**[3]–( हेतुदोषः ) साध्ये साध्यतावच्छेदकस्याभावः । यथा पर्वतः

---

१ तदर्थश्च, साध्येन वन्ह्यादिनाविशिष्टः । कुत इत्यत आह । साध्यत्वादिति । साधनीयत्वादित्यर्थः । यथा हि साध्यं साधनीयं तथा हेतुरपि चेत्साध्यसम इत्युच्यते । अत एव चासिद्ध इति व्यवह्रियते । ( गौ० वृ० १।४८ ) विभागादिकं त्वसिद्धवदनुसंधेयम् ।

२ तत्रायमाशयः । एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम् । तथा च पक्षादेरनुमितिविषयत्वात्साध्यवदेतत्प्रयोगसाध्यत्वमतः साध्यसमा । तथा हि । पक्षादेः पूर्वं सिद्धत्व एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वम् । पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयः । ( गौ० वृ० ५।४ )

३ सा च व्याप्यत्वासिद्धिप्रभेदः । ( गौ० वृ० १।४८ ) ( मु० २ ) ( वै० वि० ३।१।१५ ) तल्लक्षणं च, साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहविरोधिग्रहविषयत्वम् ।

काञ्चनमयवन्हिमान्धूमादित्यादौ वन्हिनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः। (गौ० वृ० १।४८) (मु०) (नील०)

**सापेक्षत्वम्**—असामर्थ्यवदस्यार्थोनुसंधेयः।

**सामयिकाभावः**[1]—अत्यन्ताभाववदस्यार्थोनुसंधेयः। (त० दी० ४) केचित्तु, उत्पादविनाशशालीत्यन्ताभावादतिरिक्तोऽयमभाव[2] इत्याहुः। (वै० वि० ९।१।५)

**सामर्थ्यम्**—१ कार्यजननयोग्यत्वम्[3]। यथा परामर्शस्यानुमितियोग्यत्वम्। (स्व०) २ क्वचित्, आकाङ्क्षायोग्यतादिमत्त्वम्[4]। (गौ०वृ०२।५२) यथा, आप्तोक्तस्य वचनस्य सामर्थ्यम्। (वात्स्या०२।१।५०) तच्च सामर्थ्यं द्विविधम्[5]। व्यपेक्षारूपम्[6]। एकार्थीभावश्चेति[7]। तत्राद्यं राज्ञः पुरुष इत्यादिवाक्ये ह्युपयुज्यते। द्वितीयं राजपुरुष इत्यादिवृत्तावुपयुज्यते। (स्व०)

**सामानाधिकरण्यम्**—१ [ क ] तदधिकरणवृत्तित्वम्। (स्व०)

[ ख ] तद्वदनुयोगिकप्रतियोगित्वम्[8]। (गा० सिद्धा०) यथा वन्हिधूमयोः सामानाधिकरण्यम्। (स्व०)

[ ग ] स्वावच्छेदकीभूतो यः कालस्तदवच्छिन्ना या स्वविशिष्टानिरूपिता यत्किंचिद्व्यक्तिनिष्ठाधेयता, सा[9]। यथा, यदा सिसाधयिषा नासीत्परं सिद्धिरासीत्तदा सिद्धिसिसाधयिषाविरहयोः सामानाधिकरण्यम्। २ अभेदान्वयबोधकत्वम्। यथा नीलो घट इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम्। (स्व०)

---

१ तदर्थश्च, समयविशेषे प्रतियोगिविरहसमये प्रतीयमानोत्यन्ताभावः सामयिकाभावः, इति। (नील०)

२ अत्रेदमाकूतम्। यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं पुनरानीतं च तत्रायमभावः प्रतीयत इति। (वै० वि० ९।१।५) (दि० १)

३ एवमेव तत्र तत्र सामर्थ्यं स्वयमूह्यम्।

४ इदं च शब्दसामर्थ्यम्। तल्लक्षणं त्वसामर्थ्यवैपरीत्यमेवेति विज्ञेयम्।

५ अयं च शाब्दिकविभाग इति बोध्यम्।

६ व्यपेक्षा च, स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात्परस्परं संबन्धः।

७ तदर्थश्च विशेषणविशेष्यभावावगाह्येकोपस्थितिजनकत्वम्।

८ प्रतियोगितासंबन्धेन तद्वदनुयोगिकवत्त्वमित्यर्थः। (गा० सिद्धा०)

९ इदं चैकक्षणावच्छिन्नसामानाधिकरण्यमित्युच्यते।

**सामानाधिकरण्यमात्रावगाहिनी**–( अनुमितिः ) [ क ] पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितशुद्ध[1]साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिः । यथा पर्वतो वन्हिमानित्याकारिकानुमितिः ।

[ ख ] प्राञ्चस्तु, पक्षतावच्छेदकाक्रान्तयत्किंचिद्व्यक्तिविषयकानुमितिः सामानाधिकरण्यमात्रावगाहिन्यनुमितिरित्याहुः । ( स्व० )

**सामान्यगुणत्वम्**[2]–[ क ] रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम् । ( दि० गु० )

[ ख ] यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं, तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिस्तादृशजातिमद्भिन्नगुणत्वम् । ( नील० )

**सामान्यच्छलम्**–( छलम् ) [ क ] संभवतोर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना । ( गौ० १।२।५४ ) अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इत्युक्ते कश्चिदाह । संभवति हि ब्राह्मणे विद्याचरणसंपदितयस्य वचनस्य विघातोर्थविकल्पोपपत्त्यासंभूतार्थकल्पनया क्रियते । यदि ब्राह्मणे विद्याचरणसंपत्संभवति । व्रात्योपि संभवेत् । व्रात्योपि ब्राह्मणः । सोप्यस्तु विद्याचरणसंपन्न इति । .......... सामान्यनिमित्तं छलं सामान्यच्छलमिति । ( वात्स्या० १।२।५४ )

[ ख ] सामान्यविशिष्टसंभवदर्थाभिप्रायेणोक्तस्यातिसामान्ययोगादसंभवदर्थकत्वकल्पनया दूषणाभिधानम् । यथा, ब्राह्मणोयं विद्याचरणसंपन्न इत्युक्ते 'ब्राह्मणत्वेन विद्याचरणसंपदं साधयति' इति कल्पयित्वा परो वदति । कुतो ब्राह्मणत्वेन विद्याचरणसंपत् ? वात्ये व्यभिचारात् । ( गौ० वृ० १।५३ )

---

१ अत्र, साध्यतावच्छेदकसंबन्धे शुद्धत्वं च पक्षतावच्छेदकव्यापकत्वानवच्छिन्नत्वमिति बोध्यम् ।

२ सामान्यगुणाश्च, संख्याद्यष्टकं नैमित्तिकद्रवत्वं वेगः स्थितिस्थापकश्चेति । ( मु० )

**सामान्यतोदृष्टम्**–( अनुमानम् ) [ क ] व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति । तथा चादित्यस्य । तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति ।
[ ख ] यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते । यथेच्छादिभिरात्मा । इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति । (वात्स्या० १।१।५)
[ ग ] कार्यकारणभिन्नलिङ्गकमनुमानम् । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् ।
[ घ ] अन्वयव्यतिरेक्यनुमानम् । यथा वन्हिमान्धूमादित्यादि । ( गौ० वृ० १।५ )

**सामान्यप्रत्यासत्तिः**–सामान्यलक्षणवदस्यार्थोनुसंधेयः ।

**सामान्यम्**–१ ( पदार्थः ) [ क ] या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्तन्ते, योर्थोनेकत्र प्रत्ययानुवृत्तिनिमित्तं, तत्सामान्यम्[1] । ( वात्स्या० २।२।७१ ) ( त० भा० )
[ ख ] नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणम् ।
[ ग ] नित्यत्वे सत्यनेकसमवेतम् । सामान्यं द्विविधम् । परम् । अपरम् । परं[2] सत्तादि । अपरं[3] द्रव्यत्वादि । ( वै० उ० १।२।३ ) सर्व० औलु० ) ( मु० ) ( त० सं० ) प्रकारान्तरेण सामान्यं द्वेधा । सखण्डम् । अखण्डम् । २ सर्वशब्दवदस्यार्थोनुसंधेयः । यथा, प्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वैतदुभयाभाव इत्यादौ । ( स्व० )

**सामान्यलक्षणः**[4]–( संनिकर्षः ) [ क ] इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यम्[5] । यथा घटत्वादि ।

---

१ तच्च द्रव्यगुणकर्मवृत्तीति बोध्यम् ।

२ परत्वं चात्राधिकदेशवृत्तित्वम् । ( सि० च० )

३ अपरत्वं चात्र न्यूनदेशवृत्तित्वम् । ( सि० च० )

४ सामान्यं लक्षणं स्वरूपं विषयो वा यस्येति व्युत्पत्तेर्घटत्वादिरूपस्तज्ज्ञानरूपो वेत्यर्थः । अयं संनिकर्षश्च, अतीतानागतानामिन्द्रियासंनिकृष्टानां सामान्याश्रयाणां सर्वेषां व्यक्तीनामलौकिकं प्रत्यक्षं जनयतीति बोध्यम् । ( नील० )

५. तच्च बहिरिन्द्रियप्रत्यक्षस्थले ऽुपयुज्यते । ( मु० ) ( सि० च० )

[ख] ज्ञानप्रकारीभूतं सामान्यम् । यथा परमाणुत्वादि ।

[ग] सामान्यविषयकं ज्ञानम् । यथा घटत्वज्ञानम्[2] । (मु०) (सि० च०)

**साहचर्यम्**- सामानाधिकरण्यवदस्यार्थोनुसंधेयः । (त० दी०) (न्या० बो०)

**साहित्यम्**— १ तत्तत्क्रियाकालवृत्तित्वम् । यथा, सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादौ सहार्थः । (स्व०) २ तुल्यव(?)देकक्रियान्वयित्वं साहित्यमिति मीमांसका आहुः । (न्या० म० ४) (दि० ४)

**सिद्धम्**—१इदमित्थंभूतं चेत्यभ्यनुज्ञायमानमर्थजातम् । (वात्स्या० १।१।२५-२६) २ सिद्धिविषयः । (स्व०) ३ परिनिष्ठितमिति वेदान्तिनो वदन्ति ।

**सिद्धसाधनम्**—(हेत्वाभासः) प्रमाणान्तरेणावगतार्थसाधनम् । यथा पर्वते वन्हिप्रत्यक्षानन्तरं पुनस्तत्[3]साधनाय पर्वतो वन्हिमान्धूमादिति । (स्व०) सिद्धसाधनं च पक्षताविघटकत्वेना[4]श्रयासिद्धेन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति नव्या आहुः । (त० दी०) (सि० च०)

**सिद्धान्तः**[5]—[क] तन्त्राधिकरणाभ्युपगमसंस्थितिः[6] । (गौ० १।२६)

[ख] शास्त्रितार्थनिश्चयः । (गौ० वृ० १।२६)

[ग] प्रामाणिकत्वेनाभ्युपगतोर्थः । (त० दी०) (त० भा०) (सर्व० अक्ष०)

[घ] तत्तच्छास्त्रसिद्धार्थः । (दि० १) तन्त्रभेदात्तु खलु स चतुर्विधः ।

---

१ इदं तु मानसप्रत्यक्षस्थले बुपयुज्यते । (मु०) (सि० च०)

२ अत्रेदं बोध्यम् । अयं घट इति घटत्वविषयकलौकिकप्रत्यक्षेण 'सर्वे घटाः' इति सकलघटविषयकालौकिकप्रत्यक्षं जायते, इति । (सि० च०)

३ अत्र च, सिसाधयिषाया असत्त्व इत्यादिः ।

४ तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतमिति भावः । (नलि०)

५ अत्रेयं व्युत्पत्तिः । सिद्धस्य संस्थितिः सिद्धान्तः । संस्थितिरित्थंभावव्यवस्था, धर्मनियमः । (वात्स्या० १।१।२५-२६)

६ समुदितार्थश्च, तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः ।....अधिकरणानुषक्तार्था संस्थितिरधिकरणसंस्थितिः । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः, तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः । (वात्स्या० १।१।२६)

सर्वतन्त्रसंस्थितिः । प्रतितन्त्रसंस्थितिः । अधिकरणसंस्थितिः । अभ्युपगमसंस्थितिः । ( गौ० १।१।२७ ) ( त० भा० ४ )

**सिद्धिः**[1]—साध्यवत्ता[2]निश्चयः । ( दीधि० २ ) ( गा० सत्प्र० ) यथा पर्वते धूमेन वन्हिसाधने 'पर्वतो वन्हिमान्' इति निश्चयः । सिद्धिर्द्विविधा[3] । पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिः । पक्षतावच्छेदकावच्छेदेन सिद्धिश्चेति । (गा० पक्ष०)

**सिसाधयिषा**[4]—[ क ] तत्साध्यविशिष्टतत्पक्षविषयकत्व[5]प्रकारिकानुमितिविषयिणीच्छा । ( दीधि० पक्ष० )

[ ख ] अनुमितित्वप्रकारकेच्छा । ( गा० सार्व० पक्ष० ) यथा पर्वते वन्ह्यनुमितिर्मे जायतामित्याकारिकेच्छा । ( स्व० )

**सुखम्**[6]—( गुणः ) [ क ] धर्ममात्रासाधारणकारणकगुणः । ( सि० च० )

[ ख ] सर्वात्मनामनुकूल[7]वेदनीयम् । ( त० भा० ) ( त० सं० ) सुखं चतुर्विधम् । वैषयिकम् । आभिमानिकम् । मानोरथिकम् । आभ्यासिक-

---

१ सा च, सिसाधयिषाशून्यकालेनुमितौ प्रतिबन्धिका भवतीति विज्ञेयम् ।

२ पक्षतावच्छेदकाविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिनिश्चय इत्यर्थः । ( नील० ) ( गा० पक्ष० )

३ द्विविधोयं प्रकारो विभक्तानुमितिदिशा परिष्करणीयः ।

४ अत्रेदं बोध्यम् । सिद्धौ सत्यामपि सिसाधयिषासत्त्वेनुमितिदर्शनात्सिसाधयिषाया अनुमितावुत्तेजकत्वमुक्तम् । तच्चोत्तेजकत्वं, तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वप्रत्यक्षातिरिक्तत्वैतल्लक्षणान्यतरलक्षणानुमितित्वैतन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयिताकत्वरूपेणानुगतेन वाच्यम्, इति ।

५ तत्साध्यविशिष्टतत्पक्षविषयकत्वं च तत्साध्यतावच्छेदकावच्छिन्नतत्संसर्गावच्छिन्नविधेयतानिरूपिततत्पक्षतावच्छेदकावच्छिन्नोद्देश्यतात्वावच्छिन्ननिरूपकताकत्वम् । ( गा० पक्ष० )

६ तच्चानित्यं, जगतामेव काम्यं, धर्मेण जन्यते । ( भा० प० ) तल्लक्षणं तु [ क ] सुख्यहमित्याद्यनुव्यवसायगम्यसुखत्वम् । ( त० दी० ) [ ख ] इतरेच्छान*धीनेच्छाविषयत्वम् । ( न्या० बो० )

७ अत्रानुकूलत्वं चेष्टत्वम् । ( सि० च० )

---

* अत्रेदं तत्त्वम् । सुखेच्छा तु सुखत्वप्रकारकज्ञानजन्यैव, इति ।

म् । आद्यं विषयसाक्षात्कारजन्यम् । द्वितीयं राज्याधिपत्यपाण्डित्यगर्वादिजन्यम् । तृतीयं विषयध्यानजन्यम् । तुरीयं च सूर्यनमस्कारायासादिजन्यं लाघवरूपम् । ( सि० च० )

**सुषुप्तिः**—[ क ] पुरीततिमनःसंयोगः[1] । ( दि० १।३ )

[ख] प्रबोधसहकार्यभावेनानभिव्यक्तिरिति योगिन आहुः । (सर्व०पात०)

**सृष्टिः**[2]—उत्पत्त्यनुकूलव्यापारः । यथा परमेश्वरो जगत्सृजतीत्यादौ धात्वर्थः ।(स्व०)

**सेकः**—द्रवद्रव्यक्रियानुकूलव्यापारः । यथा वृक्षादयोदकमासिञ्चतीत्यादौ धात्वर्थः । ( गा० व्यु० ४ )

**स्तुतिः**—[ क ] गुणवत्तया ख्यापनम् । ( चि० १ ) यथा, नारायणाखिलगुरो भगवन्नमस्ते, इति स्तुतिः । ( स्व० )

[ ख ] ज्ञानविशेषोपधायकः शब्द इति नव्याः ।

[ ग ] आरोप्यमाणगुणकथनमिति प्रामाणिका आहुः । ( मू० म० १ )

**स्तुतिः**—( अर्थवादः ) [ क ] विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः, संप्रत्ययार्थं, स्तूयमानं श्रद्दधीतेति । प्रवर्तिका च, फलश्रवणात्प्रवर्तते । ( वात्स्या० २।१।६३ )

[ ख ] साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् । यथा, सर्वजिता वै देवाः सर्वमजयन्सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्यादि । ( वात्स्या० २।१।६३ ) ( गौ० वृ० २।६४ ) यथा वा, वायव्यं

---

१ तथा हि । प्रथमं, सुषुप्त्यनुकूलमनःक्रियया मनसात्मनो विभागस्तत आत्ममनःसंयोगनाशस्ततः पुरीतति*रूपोत्तरदेशेन मनसः संयोगः । सैव सुषुप्तिः । ( दि० १।३ )

२ सृष्टिक्रमः कथ्यते । ईश्वरस्य चिकीर्षावशात्परमाणुषु कर्मोत्पत्तिः । ततो द्वयोः परमाण्वोः संयोगः । ततो द्व्यणुकोत्पत्तिः† । ततस्त्रिषु द्व्यणुकेषु कर्मोत्पत्तिः । ततस्तेषां संयोगः । ततस्त्र्यणुकोत्पत्तिः । एवं चतुरणुकाद्युत्पत्तिक्रमेण महापृथिव्यादय उत्पद्यन्ते, इति । ( सि० च० )

---

* पुरीतन्निर्नाडीविशेषः ।

† तत्र परमाणुः समवायिकारणम् । परमाणुद्वयसंयोगोऽसमवायिकारणम् । परमेश्वरस्तज्ज्ञानेच्छाकालादि निमित्तकारणम् । ( सि० च० )

श्वेतमालभेत भूतिकामो वायुर्वै[1] क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्यादि। (तैत्तिरीयसंहिता २।१।१)

**स्त्रीत्वम्**[2]**—**१ योनिमत्त्वम्। यथा गजा, अश्वा, शूद्रा, ब्राह्मणी, गर्भिणीत्यादौ। २ क्वचित्, भार्यात्वम्[3]। यथा, आर्याणी, मनावी, शूद्रीत्यादौ। ३ क्वचित्, लिङ्गरूपसंज्ञाविशेषः। यथा, अटव्यादिशब्देषु। (गा० व्यु० स्त्री०)

**स्थलम्—**[क] तत्तत्पक्षसाध्यादिवाचकशब्दप्रयोगः।

[ख] तत्तद्व्यवहारजन्यशाब्दबोधविषयः। यथा पर्वते वन्हिसाध्यकस्थलं हि 'पर्वतो वन्हिमान्' इति। (स्व०)

[ग] उदाहरणमिति केचिद्वदन्ति।

**स्थानम्—**१ क्वचित्, ज्ञापकम्। (गौ० वृ० १।५९) यथा निग्रहस्थानमित्यादौ। (स्व०) २ प्रसङ्ग इति शाब्दिका वदन्ति। ३ उपस्थितिरिति मीमांसकाः। ४ आश्रयः स्थितिर्वेति काव्यज्ञाः संगिरन्ते।

**स्थितिस्थापकः**[4]**—**(गुणः) [क] क्रियाविशेषजन्यः क्रियाशेषजनकः स्वजन्यक्रियानाश्यो गुणविशेषः (दि० गु०)

[ख] अन्यथाकृतस्य पुनस्तदवस्थापकः[5]। (त० सं०)

**स्नेहः—**१ (गुणः) चूर्णादिपिण्डीभावहेतुर्गुणः[6]। (त० सं०) यथा, प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थयेत्यादौ। (स्व०) २ प्रीतिरिति काव्यज्ञा वदन्ति।

---

१ इदं वाक्यं हि 'वायूद्देश्यकः श्वेतपशुकरणको यागः प्रशस्तः' इति विध्यर्थं स्तौति।

२ एवमेव पुंनपुंसकत्वे स्वयमूहनीये।

३ भार्यात्वं च संबन्धविशेषः। (गा० व्यु० स्त्री०)

४ संस्कारप्रभेदोयं कटादिपृथिवी*वृत्तिरतीन्द्रियोनित्यश्चेति। (त० सं०) (दि० गु०) तल्लक्षणं च पृथिवीमात्रसमवेतसमवेतसंस्कारत्वव्याप्यजातिमत्त्वम्। (सि० च०)

५ पूर्वसंयोगविजातीयसंयोगनाशकत्वे सति पूर्वसंयोगसजातीयसंयोगजनक इति समुदितार्थः। (वाक्य०)

६ स्नेहश्चिक्कणता, जलमात्रवृत्तिरिति बोध्यम्। (त० सं०) (वाक्य०)

---

* स्पर्शवद्विशेषवृत्तिरिति तत्त्वम्। (त० भा०)

**स्पर्शः**[1]–( गुणः ) १ [ क ] त्वगिन्द्रियमात्रग्रहणो योर्थः स स्पर्शः । ( वै० उ० ३।१।१ )

[ख] त्वगिन्द्रियमात्रग्राह्यो गुणः।(त०सं०) यथा त्वचा घटं स्पृशतीत्यादौ। (स्व०) स्पर्शस्त्रिविधः । शीतः । उष्णः । अनुष्णाशीतश्चेति । तत्र शीतो जले वर्तते । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । तत्र पृथिव्यामनित्यः पाकजः । जलादिषु त्रिषु च द्रव्येष्वपाकजो, नित्यगतो नित्यः। अनित्यगतोनित्यश्चेति । ( वै० उ० ७।१।६ ) ( त० सं० ) २ नामरूपेन्द्रियाणां मिथः संयोगः स्पर्श इति बौद्धा आहुः ।

**स्पृहा**–धर्माविरोधेन प्राप्तीच्छा । ( गौ० वृ० ४।२ ) यथा पुष्पेभ्यः स्पृहयतीत्यादौ । ( स्व० )

**स्फुटत्वम्**–तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वम् । ( स्व० ) यथा, दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभेनेत्यादौ । ( गा० सामा० )

**स्फोटः**[2]–वर्णातिरिक्तो वर्णाभिव्यङ्ग्योर्थप्रत्यायको नित्यः शब्दः । ( सर्व० पाणिनि० )

**स्मयः**[3]–(दोषः) गुणवति निर्गुणत्वधीः । ( गौ० वृ० ४।२ )

**स्मरणम्**–स्मृतिवदस्यार्थोनुसंधेयः ।

**स्मृतिः**–( बुद्धिः ) संस्कारमात्रजन्यं[4] ज्ञानम् । ( त० सं० ) यथा मातुः स्मरतीत्यादौ । ( स्व० ) स्मृतिर्द्विविधा[5] । यथार्था । अयथार्था । आद्या प्रमा-

---

१ स तु बाह्यैकेन्द्रियग्राह्यः, पृथिव्यादिचतुष्टयवृत्तिश्च । ( वै०उ०३।१।१ ) ( त० सं० ) लक्षणं तु, स्पर्शत्वम् । तच्च, त्वगिन्द्रियमात्रग्राह्यगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् । ( वै०उ०७।१।६ )

२ स च शाब्दिकमतप्रसिद्धः । नैयायिकमते तु स्फोटो नाङ्गीक्रियत एव । यद्यङ्गीक्रियेत तदापि वर्णवत्सोनित्य एवेति मन्तव्यम् ।

३ स च मानेन्तर्भवति । ( गौ० वृ० ४।३ )

४ चक्षुराद्यजन्यत्वे सति संस्कारजन्यमित्यर्थः । ( नील० )

५ द्वयोर्लक्षणे च संस्कारसंबन्धावच्छिन्नानुभव*प्रमाभ्रमनिष्ठजनकतानिरूपितजन्यत्वे बोध्ये । ( वाक्य० ४ )

---

* अत्र, स्मृतिं प्रत्यनुभवस्यानुभवत्वेनैव कारणत्वमिति प्राञ्चो वदन्ति । नवीनाः पुनर्ज्ञानत्वेन कारणत्वमित्याहुः । ( नील० )

जन्या । द्वितीयाप्रमाजन्या । ( त० सं० ) जागरे तदुभयम् । स्वप्ने तु सर्वमेव ज्ञानं स्मरणं, अयथार्थं च । ( त० भा० )

**स्यन्दनम्**—प्रस्रवणम् । तच्च, संनिकृष्टदेशस्य द्रवद्रव्यस्य च संयोगानुकूलव्यापारः । ( वाक्य० १ ) यथा, स्यन्दनासमवायिकारणं द्रवत्वमित्यादौ । ( स्व० )

**स्याद्वादः**[1]—यत्र वादे, जैनाः सर्वत्र सप्तभङ्गीनयाख्यं न्यायं प्रयुञ्जते सः । ( स्व० ) तथा हि । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यः, इति । ( सर्व० आर्ह० ) यथा घटः स्वस्वरूपेणास्ति, पटस्वरूपेण नास्तीत्यादि । ( स्व० )

**स्वतन्त्रत्वम्**—१ इतरसत्तानधीनसत्ताकत्वम् । यथा परमेश्वरस्य राज्ञश्च स्वातन्त्र्यम् । ( स्व० ) २ समभिव्याहृतक्रियाकारकान्तरानधीनत्वे सति कारकत्वम्[2] । (गा० व्यु० ३) यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रस्य स्वातन्त्र्यम् । ( स्व० ) ३ शब्दाप्रयोज्यत्वमिति मीमांसका आहुः । (मू० म० १)

**स्वतोव्यावर्तकत्वम्**— }
**स्वतोव्यावृत्तत्वम्**— } विशेषपदार्थटिप्पणेनयोः प्रपञ्चः संपादितः ।

**स्वत्वम्**—यथेष्टविनियोगयोग्यत्वम्[3] ( त० दी० ) यथा चैत्रस्य धनमित्यादौ धने चैत्रनिरूपितं स्वत्वम् । ( स्व० )

**स्वधा**—पित्रुद्देश्यकर्तृयागः[4] । यथा पितृभ्यः स्वधेत्यादौ । ( गा० व्यु० ४ )

**स्वप्नः**[5]—१ मानसविपर्ययः । ( त० दी० ) ( सि० च० ) २ प्रदेशविशेषाव-

---

१ स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः । ( सर्व० आर्ह० )

२ इदं च, स्वतन्त्रः कर्तेति पाणिनिसूत्रे (अ० १। पा० ४। सू० ५४) कर्तुः स्वातन्त्र्यम् ।

३ स्वत्वं पदार्थान्तरमेवेति केचिद्वदन्ति । ( नील० )

४ वेदादेशिनोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्याग इति फलितोर्थः । ( गा० व्यु० ४ )

५ स्वप्नस्तु, पुरीतद्बहिर्देशयोः संधौ मनसि स्थितेदृष्टविशेषेण चिन्ताविशेषेण धातुविशेषेण वा जन्यत इति विज्ञेयम् । ( सि० च० )

स्थितमनःसंयोगः । ( नील० ) यथा, स यत्र स्वपिति स्वप्नं न किंचित्पश्यतीत्यादौ ( स्व० )

**स्वप्नज्ञानम्**–[ क ] जाग्रदवस्थायां बाह्यवस्त्वनुभवजन्यमयथार्थं स्मरणम्[1] । तच्च निराकारमेव ( त० भा० )

[ ख उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेण यदनुभवनं मानसं तत् । तच्च त्रिविधम् । किंचित्संस्कारपाटवात् । किंचिद्धातूनां वातपित्तश्लेष्मणां दोषात् । अदृष्टविशेषादप्युत्पद्यते । आद्यं यथा, कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन्स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते 'कर्णार्जुनीयं युद्धमिदम्' इत्याकारम् । द्वितीयं, आकाशगमनवन्हिप्रवेशसमुद्रसंतरणादिज्ञानम् । तृतीयं, तज्जन्मजन्मान्तरानुभूतेषु सिद्धोपप्लुतान्तःकरणस्य यज्ज्ञानं गजारोहणतैलाभ्यञ्जनादिविषयकं, तत् । ( वै० उ० ९।२।७ )

**स्वम्**–साक्षात्परंपरया वा यः स्वार्थस्य विशेष्यः, यश्च स्वसमभिव्याहृतक्रियाकारकपदार्थस्तदुभयम् । यथा चैत्रः स्वपुत्रं पश्यतीत्यादौ स्वपदार्थः। (गा० श०)

**स्वरसः**–विवादशून्यत्वम् । यथा घटत्वेन घटो नास्तीति प्रत्ययस्य[2] विवादशून्यत्वम् । ( गा० च० खण्ड० )

**स्वरूपयोग्यत्वम्**–यत्किंचिन्निरूपितावच्छेदकधर्मवत्त्वम् । यथा, अरण्यस्थस्यापि दण्डस्य[3] घटं प्रति जनकत्वम् । ( स्व० )

**स्वरूपसंबन्धः**[4]–संबन्धान्तरेण विशिष्टप्रतीतिजननायोग्यत्वम् । ( चि० १ )

---

१ अत्रेदमवधेयम् । यत्तु 'स्मृतिरूपं स्वप्नज्ञानम्' इति तद्भाष्यादिविरुद्धमित्युपेक्षितम्, इति । ( नील० )

२ अत्र च विवादविषयस्तु 'घटत्वेन पटो नास्ति' इत्याकारको व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयकः प्रत्यय इति बोध्यम् ।

३ अत्र च, अरण्यस्थदण्डस्यापि घटकारणतायामवच्छेदकदण्डत्ववत्त्वात्स्वरूपयोग्यत्वरूपं जनकत्वं युज्यत इति बोध्यम् ।

४ अनुयोगिप्रतियोग्यन्यतरस्वरूपः संबन्धविशेष इत्यर्थः ।

यथा भूतले घटो नास्तीत्यादौ घटाभावादेर्भूतलेन संबन्धः । स द्विविधः । केवलस्वरूपः । विशेषणता चेति । तत्राद्यो भावाभावान्यतरप्र[1]तियोगिकः । द्वितीयस्त्रिविधः । दैशिकविशेषणता । दिक्कृतविशेषणता । कालिकविशेषणता चेति । तत्राद्यश्चाभावमात्रप्र[2]तियोगिकः । द्वितीय[3]तृतीयौ तु दिक्कालानुयोगिकौ जन्यमात्रप्रतियोगिकौ[4] च, इति । ( स्व० )

**स्वरूपासिद्धः**[5]–( हेत्वाभासः ) यो हेतुराश्रये नावगम्यते सः । यथा सामान्यमनित्यं कृतकत्वादिति । यथा वा शब्दो गुणश्चाक्षुषत्वा[6]दित्यादौ । स्वरूपासिद्धश्च, शुद्धासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धासमर्थविशेषणासमर्थविशेष्यभेदेन बहुविधः । ( त० भा० ) ( त० सं० ) ( सि० च० )

**स्वरूपासिद्धिः**[7]–( हेतुदोषः ) प्रकृतपक्षप्रकृतसाधनग्रहाविरोधिनो ज्ञानस्य विषयितया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं रूपम् । ( दीधि० २ ) तच्च, पक्षे व्याप्यत्वाभिमतस्याभावः । यथा ह्रदो द्रव्यं धूमादित्यादौ । ( मु० २ ) ( गौ० वृ० १।४८ ) ( वै० वि० ३।१।१५ ) ( न्या० बो० )

**स्वर्गः**–सुखविशेषः । ( मु० गु० ) यथा, यागात्स्वर्गो भवतीत्यादौ । यथा वा, यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते, इत्यादौ । ( स्व० )

**स्वस्ति**–१ आशीः । सा च परहितविषयकेच्छा । यथा स्वस्ति भवत इत्यादौ । २ कल्याणम् । यथा स्वस्त्यस्तु मह्यमित्यादौ । ( गा० व्यु० ४ )

**स्वारसिकलक्षणा**–( लक्षणा ) अधुनातनतात्पर्यविषयीभूतार्थनिष्ठा लक्षणा ।

---

१ स चाधेयत्वप्रतियोगित्वादीनां संबन्धः ।

२ स च, भूतलादिना घटाभावादीनां संबन्धः ।

३ इमावेव सर्वाधारताप्रयोजकसंबन्धाविति जेगीयेते ।

४ तौ च, घटादीनां दिक्कालाभ्यां संबन्धौ ।

५ स चासिद्धप्रभेदः । लक्षणं तु स्वरूपासिद्धत्वम् । तच्च पक्षावृत्तित्वम् । ( सि० च० )

६ अयमेव हेतुः शुद्धासिद्ध इत्युच्यते । ( सि० च० )

७ सा चासिद्धिप्रभेद इति बोध्यम् । साध्याप्रसिद्धिसाधनाप्रसिद्धिभागासिद्ध्यादयोऽप्यत्रैवान्तर्भवन्ति । ( मु० २ )

यथा वटे गावः शेरत इत्यादौ वटपदस्य वटसमीपे, गङ्गायां घोष इत्यादौ वा घोषपदस्य मत्स्यादौ लक्षणा । (स्व०)

**स्वार्थम्**–(अनुमानम्) [क] न्यायाप्रयोज्यानुमानम् । (न्या० बो०)[1]

[ख] यत्तु, स्वयमेव महानसादौ विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वते धूमं पश्यन्वन्हिमनुमिनोति, तत्स्वार्थानुमानम्[2] । (त० भा०)

**स्वाहा**–अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागः[3] । यथा, इन्द्राय स्वाहेत्यादौ । (गा० व्यु० ४)

**स्वीकारः**–स्वकीयत्वप्रकारकेच्छा । यथा, आदौ द्रव्यं स्वीकुर्वित्यादौ । (स्व०)

## ह.

**हवनम्**–[क] अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारः । (गा० व्यु० २) यथा संस्कृतेग्नौ घृतं जुहोतीत्यत्र जुहोत्यर्थः । (स्व०)

[ख] अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापार इति संप्रदायः । (दि० गु०)

[ग] वैध आधारे हविषः प्रक्षेप इति शाब्दिका वदन्ति ।

**हसितम्**–कण्ठोष्ठपुटविस्फूर्जनपुरःसरं 'अहहह' इत्यट्टहासः । (सर्व० नकुली०) यथा, ततो जहासातिरुषा भीमं भैरवनादिनीत्यादौ । (स्व०)

**हानम्**–[क] निवृत्तिप्रयोजकमनिष्टसाधनताज्ञानम् । (स्व०)

[ख] दुःखसाधनत्वज्ञानम् । यथा 'सर्पो मे दुःखसाधनम्' इति ज्ञानम् । (सि० च०)

---

१ तदर्थश्च, स्वार्थः स्वप्रयोजनं साध्यसंशयनिवृत्तिरूपं यस्मादिति व्युत्पत्त्या स्वीयसंशयनिवृत्तिप्रयोजनकमनुमानम्, इति । (नील०)

२ स्वार्थानुमानस्य प्रयोजनं तु स्वानुमितिः । (त० सं०) तथा हि । कश्चित्पुरुषः स्वयमेव भूयोदर्शनेन 'यत्र धूमस्तत्राग्निः' इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन्व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निः' इति । तदनन्तरं 'वन्हिव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् 'पर्वतो वन्हिमान्' इति ज्ञानमनुमितिरूत्पद्यते । तदेतत्स्वार्थानुमानम् । (त० सं०) (त० भा०)

3 वेदादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्याग इति फलितोर्थः । (गा० व्यु० ४)

हिंसा[1]–[ क ] कार्याश्रयस्य[2] शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणां वधः[3] । ( वात्स्या० ३।१।६ ) यथा, अहिंसा परमो धर्म इत्यादौ । (स्व०)

[ ख ] अनुनिष्पादितमरणफलकव्यापारः । ( चि० ४ )

[ ग ] साक्षान्मरणानुकूलव्यापारः । ( दि० गु० ) यथा, प्रतिशब्दो हि हरेर्हिनस्ति नागानित्यादौ हिंस्धात्वर्थः । ( स्व० )

[ घ ] द्रोह इति परे मन्यन्ते । ( गौ० वृ० ४।३ )

हेतुः[4]–१ ज्ञापकः[5] । यथा पर्वते धूमेन वन्हिसाधने धूमः । स हेतुर्द्विविधः । सद्धेतुः । असद्धेतुः । आद्यः पर्वतादिपक्षकवन्ह्यादिसाध्यकस्थले धूमादिः । द्वितीयो हेत्वाभासः । २ कारणवदस्यार्थोनुसंधेयः । ( स्व० )

हेतुः[6]–(न्यायावयवः) [क] पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकं वचनम् ।

---

१ सा च द्रोहेण जन्यते । ( गौ० वृ० ४।३ )

२ कार्यं तु सुखदुःखसंवेदनम् । तस्यायतनमधिष्ठानमाश्रयः शरीरम् । (वात्स्या० ३।१।६ )

३ वधोत्र, उपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा । ( वात्स्या० ३।१।६ )

४ तल्लक्षणं चोत्पादकज्ञापकान्यतरत्वम् ।

५ अयमेव लिङ्गशब्देन व्यवह्रियत इति बोध्यम् ।

६ लक्षणं च हेतुत्वमेव । तच्चात्र [ क ] अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयक*शाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम् । [ ख ] हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् । [ग] उदाहरणप्रयोजकजिज्ञासाजनकन्यायावयवत्वम् । [ घ ] साध्याविषयकज्ञानज-

---

* अत्र साध्याविषयकत्वं च । [ क ] प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकीभूतसाध्यविषयताशून्यत्वम् । [ ख ] अथ वा, पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारत्व"पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नसंबन्धित्वावच्छिन्नप्रकातानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वैतदन्यतरशून्यत्वम् ।

अत्रेदं बोध्यम् । प्रकृतहेतुतावच्छेदकेत्यादिप्रथमकल्पोनुषङ्गपक्षाभिप्रायक एव । अथ वेत्यादिद्वितीयकल्पस्त्वनुषङ्गपक्षाननुषङ्गपक्षैतदुभयसाधारण इति । द्वितीयकल्पेप्यन्यतरघटकः प्रथमभागो मतुप्प्रत्ययस्य निरर्थकत्वपक्षमभिप्रेत्य, द्वितीयभागस्तु सार्थकत्वपक्षमभिप्रेत्योक्तम् । एतत्सर्वं सूक्ष्मतरमिति विद्वद्भिर्भावनीयम् ।

[ ख ] साध्यसाधनम्[1]। (गौ० १।१।३४) यथा पर्वते धूमेन वन्हिसाधने धूमवत्त्वादिति वाक्यम्। (त० भा०) (त० दी०) सोयं हेतुर्द्विविधः। अन्वयिहेतुः। व्यतिरेकिहेतुश्चेति। परे तु, तृतीयोन्वयव्यतिरेकीत्यपि वदन्ति। (गौ० वृ० १।३४)

**हेत्वन्तरम्**–( निग्रहस्थानम् ) [ क ] अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्[2]। ( गौ० ५।२।६ )

[ ख ] परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनम्। यथा शब्दोनित्यो बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्येनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेष-

---

नकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वम्। [ ङ ] पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वम्†। (चि० अव०) [ च ] प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितान्वितस्वार्थबोधकन्यायावयवत्वम्। (दीधि०) [ छ ] प्रकृतपक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकहेतुविभक्तिघटितत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयितावहिर्भूत‡विषयिताशून्यबोधजनकवाक्यत्वम्। (गा० अव०) [ज] एतद्धूमादिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम्।(न्या० म० २)

[1] साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधकोवयव इति फलितार्थः। ( गौ० वृ० १।३४ )

[2] निदर्शनम्। एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा। कस्माद्धेतोः। एकप्रकृतीनां विकाराणां परिमाणात्। मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम्। यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति। दृष्टं च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणं प्रतिव्यक्तम्। तदेकप्रकृतीनां विकाराणां परिमाणात्पश्यामो 'व्यक्तमिदमेकप्रकृति' इति। अस्य व्यभिचारेण प्रत्यवस्थानम्। नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति। एवं प्रत्यवस्थिते आह। एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते। तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति। तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति। सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम्।........ ( वात्स्या० ५।२।६ )

---

† तदर्थश्च, प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वम्। ( दीधि० अव० )

‡ अत्र विषयितायां तादृशविषयितावहिर्भूतत्वं च तादृशविषयिताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वम्।

णम् । प्राञ्चस्तु, हेतौ विशेषणदान एव हेत्वन्तरमित्याहुः । ( गौ० वृ० ५।४९ ) ( दि० १ ) ( नील० )

**हेत्वसिद्धिः**—स्वरूपासिद्धिवदस्यार्थोनुसंधेयः । ( भा० प० )

**हेत्वाभासः**—यस्य हि ज्ञानमनुमितिप्रतिबन्धकं, सः । ( चि० बाध० ) यथा.

१ अत्र, हेतूनामाभास इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोष इत्यर्थः । तल्लक्षणं च हेत्वाभासत्वम् । तच्चात्र, [क] अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञान*विषयत्वम् । [ख] यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं†तत्त्वम् । [ग] ज्ञायमानं सद्यदनुमितिप्रतिबन्धकं तत्त्वम् । ( चि० सामा० ) ( मु० ) [घ] यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च‡ द्वयोर्व्यतिरेकस्तत्त्वम्§ । [ङ] केचित्तु, यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः संभवन्ति तावदन्यान्यत्वमिति प्राहुः । ( दीधि० सामा० ) ( मु० ) [च] मिश्रानुयायिनस्तु, सामानाधिकरण्यसंबन्धेन यस्य यस्य‖ यादृशप्रतिबन्धकतायामवच्छेदकत्वं तत्तदवच्छेदकविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तत्प्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वम् । [छ] यादृशज्ञानान्तरविशिष्टत्वेन¶ यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकता, तादृशज्ञानसहितता-दृशविशिष्टज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविशिष्टपर्याप्तविषयताविरहविशिष्टत्वे सति यादृशविशिष्टनिरूपितविषयितासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टत्वम्, इत्याशाङ्किरे । ( गा० साधा० )

* अनुमितिप्रतिबन्धकीभूतयथार्थज्ञानविषयत्वमित्यर्थः । ( त० दी० )

† अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयिताव्यापिका 'पक्षः साध्यवान्साध्यव्याप्यहेतुमांश्च' इति समूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता, तादृशविशिष्टत्वमिति समुदितार्थः । ( वै० वि० ३।१।१५ ) ( गा० सामा० ) वस्तुतस्तु, [क] यादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनज्ञानावृत्ति, तादृशत्वम् । [ख] यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्तादृशत्वम्, इति । ( गा० सव्य० )

‡ यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयताप्रयुक्ततादृशोभयाभाववत्त्वं तादृशरूपावच्छिन्नत्वमित्यर्थः । ( गा० सामा० )

§ इदं च सिद्धान्तसिद्धं हेतुदोषलक्षणमिति बोध्यम् ।

‖ अत्रेदं तत्त्वम् । बाधबुद्धिप्रतिबन्धकतायामप्रामाण्यग्रहाभाव एव सामानाधिकरण्यसंबन्धेनावच्छेदकः प्रसिद्धः, इति । ( गा० साधा० )

¶ अत्रायं विवेकः । बाधादिस्थले नित्यदोषत्वम् । साधारण्यादिस्थले तु ज्ञानद्वयप्रतिबन्धकतामादायानित्यदोषत्वमिति । ( गा० साधा० )

ह्रदो वन्हिमान्धूमादित्यादौ वन्ह्यभाववद्ध्रदादिरूपो दोषो हेत्वाभासः । स पञ्चविधः[1] । व्यभिचारः । विरोधः । सत्प्रतिपक्षः । असिद्धिः । बाधः, इति । (स्व०)

**हेत्वाभासः**[2]–[क] हेतुलक्षणाभावादहेतुर्हेतुसामान्याद्धेतुवदाभासमानः । (वा० त्स्या० १।२।४५)

[ख] पञ्चरूपोपपन्नत्वाभावे[3] सति तद्रूपेण भासमानः । (गौ० वृ० १।४४)

[ग] पक्षधर्मत्वादीनां पञ्चानां रूपाणां मध्ये एकेनापि रूपेण हीनो हेतुः, सोपि कतिपयहेतुरूपयोगाद्धेतुवदवभासमानः । (त० भा०)

[घ] असाधको हेतुत्वेनाभिमतः । (सर्व० अक्ष०) यथा वायुर्गन्धवान्स्नेहादित्यादौ स्नेहो[4] हेत्वाभासः । (स्व०) स च हेत्वाभासः पञ्चधा । सव्यभिचारः । विरुद्धः । प्रकरणसमः । साध्यसमः । अतीतकालः, इति । (गौ० १।२।४५) पर्यायान्तरेण हेत्वाभासः पञ्चधा । असिद्धः । विरुद्धः । अनैकान्तिकः । प्रकरणसमः । कालात्ययापदिष्टः, इति । (त० भा०) पर्यायान्तरेणापि हेत्वाभासः पञ्चधा । सव्यभिचारः । विरुद्धः । असिद्धः । सत्प्रतिपक्षितः । बाधितः, इति । (त० सं०)

**होमः**–हवनवदस्यार्थोनुसंधेयः ।

---

१ अत्रेदं बोध्यम् । बाधसत्प्रतिपक्षौ तु काश्यपीये मते न स्वतन्त्रौ । तत्र बाध आश्रयासिद्धावादावनैकान्तिके वा पर्यवस्यति । सत्प्रतिपक्षोप्यन्यतरत्र व्याप्त्यादिसंशयमापादयन्नैकान्तिकादावेव पर्यवस्यति, इति । (वै० उ० ३।१।१७)

२ अत्र, हेतुवदाभासत इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुरित्यर्थः । तल्लक्षणं च [क] सव्यभिचाराद्यन्यतमत्वम् । (न्या० म०) [ख] निरुक्तदोष*वत्त्वम्, इति । (दीधि० सामा०) (नील०)

३ पञ्च रूपाणि तु, पक्षसत्त्वम् । सपक्षसत्त्वम् । विपक्षासत्त्वम् । अबाधितत्वम् । असत्प्रतिपक्षितत्वम्, इति । (गौ० वृ० १।४४)

४ अत्र च, उपाधेयसंकरेप्युपाध्यसंकर इति न्यायाद्दोषगतसंख्यामादाय दुष्टहेतौ पञ्चत्वादिसंख्याव्यवहार इति बोध्यम् ।

---

* अत्र, हेतौ तादृशदोषविशिष्टत्वं च स्वविषयकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन बोध्यम् ।

**ह्रस्वत्वम्**—१ इदं ह्रस्वमिति व्यवहारसिद्धः परिमाणविशेषः । ( वै० वि० ७।१।१७ ) २ एकमात्रकालिकात्वमिति शाब्दिका आहुः ।

**ह्लादः**—चमत्कृतिः । स चानन्दविशेषः । यथा चन्द्रो लोकान्ह्लादयतीत्यादौ ह्लाद्धात्वर्थ आनन्दः । ( स्व० )

इति श्रीमत्सकलसद्विद्वद्बृन्दसंसेव्यवैष्णवमतावतंसमध्वमतानुयायिनः कर्णाटदेशीयझळकीग्रामनिवासिश्रीयुतरामभट्टसुतस्य श्रीयुतभिकुशास्त्रिभ्योधीतन्यायशास्त्रस्य भट्टभीमाचार्यस्य कृतौ न्यायकोशः समाप्तः ॥ शकाब्दाः १७९५ श्रीमुखनामसंवत्सरस्याषाढमासे पौर्णिमास्यामयं ग्रन्थः समाप्तिमगमत् ॥ ख्रिस्त्यब्दाः सन १८७३ जुलै ॥ श्रीशः शंकरो भवतु ॥

ग्रन्थसंख्या ५०००

# शुद्धिपत्रम्.

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १ | १ | श्रीविठ्ठलं | श्रीविठ्ठलं |
| २ | ३ | जनकम् | प्रयोजकं, उपकारकं वा |
| ४ | ७ | साक्षिकोभावः ( स्व० ) | साक्षिकोभावः । ( वै० वि० ९।२।९ ) |
| ४ | ८ | त्रैकालिक | त्रैकालिक |
| ४ | १३ | तत्रोत्पाद | तत्रोत्पाद |
| ४ | २५ | ३ एतन्मते | ४ एतन्मते |
| ४ | २७ | ४ त्रैकालिकत्व | ३ त्रैकालिकत्व |
| १२ | १ | हेत्वभिमतशब्दोपसंदानाद्यद्धेतुक | यद्धेतुक |
| १२ | २ | संहाराभावः | संहाराभावस्तत्त्वम् |
| १४ | १३ | ( गौ० २।६२ ) | ( गौ० २।६४ ) |
| १४ | २२ | ( ग. ) | [ ग ] |
| १६ | २३ | अयमनेका | अयमनेका- |
| १७ | २५ | कस्यचिद्द्रव्या- | किंचिद्द्रव्या- |
| २५ | २६ | तत्र द्रष्टव्यम् । | तत्र द्रष्टव्यः । |
| ३१ | १० | प्रकारत्वम् | प्रकारः |
| ३१ | ११ | प्रकारत्वम् | प्रकारः |
| ३१ | २४ | प्रकारत्वस्य | प्रकारस्य |
| ३३ | १३ | अर्थापत्तिर्द्विविधः । | अर्थापत्तिर्द्विविधा । |

# शुद्धिपत्रम्.

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| ३४ | १७ | ( मू० मं० १ ) | ( मू० म० १ ) |
| ३४ | २२ | न्यतमत्वम । | न्यतमत्वम् । |
| ३८ | ७ | विपर्यस्य तौ | विपर्यस्यतो |
| ४३ | १७ | मतामुसारेणेति | मतानुसारेणेति |
| ५१ | २१ | प्रतिमेति | विज्ञानादीति |
| ५२ | १२ | (वात्स्या०) (१।२।४९) | ( वास्या० १।२।४९ ) |
| ५३ | २५ | हितत्वम | हितत्वम् |
| ५६ | ६ | ईर्ष्या—१ [ क ] | ईर्ष्या [ क ] |
| ५७ | २६ | भावित्वम | भावित्वम् |
| ५९ | २४ | स च | तच्च |
| ६२ | ७ | मित्यादि प्रत्यक्षे | मित्यादिप्रत्यक्षे |
| ८० | १७ | योगादिति | योग इति |
| ८० | २७ | युष्मदस्मदोरिति- | युष्मदस्मदोरिति |
| ८३ | २३ | जातिमत्त्वम | जातिमत्त्वम् |
| ८४ | १२ | गुणः—( पदा४र्थः ) | गु४णः—( पदार्थः ) |
| ८६ | १५ | चरमवर्णपर्यन्त-वर्णसमूहः | एकार्थको वाक्यसंदर्भः । |
| ८७ | १४ | वन्हिमान ' इति | वन्हिमान् ' इति |
| ८९ | २२ | पूर्ववत्त्वसंबन्धेन | पूर्ववृत्तित्वसंबन्धेन |
| ९४ | १ | ( सान्निकर्षः ) | ( संनिकर्षः ) |
| ९६ | २५ | रूपद्यावत्तेजः | रूपवद्यावत्तेजः |
| १०२ | २५ | [illegible] | प्राचीयं |
| १०४ | १० | [illegible] | धूमवत्त्वस्य |
| ११० | १९ | [illegible] | सवासन |
| १११ | ५ | [illegible] | स्वातन्त्र्यं |



